# श्रीमद्वाल्मीकिरामायणम्

## सरलगद्यात्मकम्

बालकाण्डम् अयोध्याकाण्डम्

कालूरि हनुमन्तरावः



# श्रीमद्वाल्मीकिरामायणम्

## सरलगद्यात्मकम्

बालकाण्डम्

अयोध्याकाण्डम्



कालूरि हनुमन्तरावः

# श्रीमद्वाल्मीकिरामायणम्

## सरलगद्यात्मकम्

## बालकाण्डम्, अयोध्याकाण्डम्

SANSKRIT
by
**Kaluri Hanumantha Rao**

First Edition 1997

Copies : 1000



Cover design : Seelaveerraju

**Price : Rs 60/-**

This book is printed with the financial assistance of shri Tirumala Tirupathi Devasthanams under their scheme 'Aid to publish religious books'.

For Copies : K. Hanumantha Rao
20, OUT Colony, Sainikpuri
Secunderabad - 500 094
Phone: 863696

Composed &
Printed by : Fontline Graphics
Baglingampally
Hyderabad - 44
Phone : 660000

# अनुक्रमणिका

# प्रस्तावना

किमर्थोऽयं गद्यरामायणरचनासंरम्भः? इदं समाधीयते। यद्यपि रामायणकथा सर्वज्ञाता रामायणकाव्यं सर्वपाठकविदितं च तथापिअतिपरिचयादवज्ञा सर्वत्र बोभवीति। परस्परं भिद्यमाना रामकथा बह्व्यः सन्ति तथा वाल्मीकीयस्य रामायणस्य च वैविध्यं विद्यते। तादृश्यामवस्थायां वटोदरनगरस्थया प्राच्यपरिशोधनसंस्थया संस्कृतवाङ्मयस्य सुमहती सेवा कृता यया बहुतालपत्रग्रन्थपरिशीलनेन संशोधितप्रकाशनं (critical edition) निर्मितम्। प्रधानतयेदं प्रकाशनमनुसृत्य सरलगद्यरामायणमिदं विरचितमस्ति। एवं विरचयता मया इमे नियमा अनुसृताः।

१. काव्यस्य प्रतिश्लोकं सरलगद्यीकरणयत्नः कृतः।

२. मूले अविद्यमानं न किमपि संयोजितम्।

३. मूलस्थितानि सम्बोधनानि विशेषणानि च स्वल्पीकृतानि।

४. यत्र मूलं ममाभिप्रायेण पाठपरिवर्तनमपेक्षते तत्र+चिह्नं स्थापयित्वा बृहन्मूलग्रन्थस्याधःसूचिकातः पाठान्तरं गृहीतम्* ।cr प्रकाशनात् त्याज्यः पाठः cr इति, तत्स्थाने cr अधःसूचिकातो ग्राह्यः पाठः ग्राह्यः – इति चाधः सूचितौ। किमपि पाठान्तरं मया न कल्पितम्। cr प्रकाशने सुतरां (ग्रन्थे अधःसूचिकायां च) अविद्यमानः पाठो यद्यन्यप्रकाशनाद् गृहीतः स विषयः सूचितः।

५. प्राच्यपरिशोधनसंस्थायाः (Oriental Institute, Vadodara) प्रकाशनं (critical edition) cr इति आङ्ग्लाक्षराभ्यां निर्दिष्टम्।

६. यत्र मूलमर्थावगतेरपर्याप्तं तत्र cr बृहद्ग्रन्थस्य अधःसूचिकात आवश्यकाः श्लोकाः पङ्क्तयो वा ग्राह्याः संयोज्याश्च अयं च विषयः + चिह्नेन सूचितः**।

---

* संशोधितप्रकाशनग्रन्थे तत्र तत्र पाठपरिवर्तनस्य आवश्यकता का? इयं चर्चा पृथक् कृता अनुबन्धे। ** द्रष्टव्या मम अनुबन्धे चर्चा।

७. तत्र तत्र लघुविवरणं नक्षत्रचिह्नेन अधःस्तात् कृतम्।

८. काव्यस्था आर्षप्रयोगा नवीनभाषायां परिवर्तिताः। यदि क्वचित् क्वचित् शिष्येरन् तत्राहं क्षन्तव्यः।

९. अस्मिन् ग्रन्थरचने मयैते ग्रन्था उपयुक्ताः।

A. वाल्मीकिरामायणम्। समीक्षितपाठात्मकम् Oriental Institute, Vadodara 1992 (cr), तद्बृहद्ग्रन्थश्च।

B. श्रीमद्रामायणम्। गोविन्दराजीयव्याख्या तथा महेश्वरतीर्थव्याख्या। आन्ध्रलिपिः।

C. श्रीमद्वाल्मीकीयरामायणम्। गीताप्रेस्। हिन्दीतात्पर्ययुतम्।

D. श्रीमद्रामायणम्। पुल्लेल श्रीरामचन्द्रविरचिता बालानन्दिनी आन्ध्रव्याख्या। आर्षविज्ञानट्रस्ट्। हैदराबाद्। 1990. आन्ध्रलिपिः।

१०. सरलगद्येन रचना कृता। विषयेऽस्मिंश्चेदं निवेद्यते। संस्कृतभाषया रचनायाः पद्धतिः का? इति प्रश्नस्तावत् समाधेयः। सर्वस्या भाषायाः प्रयोगे जनव्यवहारः प्रमाणं भवति। परन्तु संस्कृतमिदानीं न कस्यापि मातृभाषास्ति। तस्मात् संस्कृतभाषारचनायाः प्रमाणद्वयमङ्गीकार्यं भवति। १. व्याकरणम् २. प्राचीनसंस्कृतसाहित्यम्। तयोर्यद्यपि व्याकरणप्रामाण्यविषये मतैकीभावः स्यात् तथापि संस्कृतग्रन्थप्रामाण्ये मतभेदः स्यात् यतः प्राचीनसंस्कृतग्रन्थेषु शैली द्विविधा प्राचलत्। उपनिषद्रामायणमहाभारतभासनाटकव्याकरणमहाभाष्यरघुवंशशाकुन्तलादि श्रव्यदृश्यकाव्यपञ्चतन्त्रादिषु शैली ऋजुः चकास्ति। गद्यकाव्येषु शास्त्रग्रन्थव्याख्यानेषु च वक्रा शैली बोभवीति। मार्जालो मूषिकं हन्ति। इति सर्वे जानन्ति। इति वक्तव्ये शास्त्रग्रन्थव्याख्याता- अथेदं सर्वेषां विद्वदपश्चिमानामपरोक्षमेव यन्मूषिको मार्जालेन हन्यत इति कदाचिद् विलिख्य संतुष्यति। मार्जालो मूषिकं हन्ति इति सरलया भाषया यदि

रच्यते तर्हि संस्कृतशैल्याः का हानिः स्यात्? अन्यश्च संस्कृतविदुषां भ्रमो यत् कर्मभाववाच्यप्रयोगः (passive voice) एव संस्कृतभाषायाः स्वभाव इति। प्राचीनसाहित्ये तु तथा न दृश्यते कर्तृवाच्यप्रयोगश्च भूयशो दृश्यते। "सत्यं वद, धर्मं चर, उत्तिष्ठत जाग्रत प्राप्यवरान्निबोधत" इत्युक्तं, सत्यमुच्यतामित्येवं नोक्तम्। "भोः शृणुत शृणुत धर्मबुद्धिना हृतमेतद् धनम्" (पञ्चतन्त्रम्, मित्रभेदः, कथा १९) इत्युक्तं न तु श्रूयतामिति। दूतवाक्यनाटकस्थानीमानि वाक्यानि पश्यत। "आचार्य एतत् कूर्मासनम्। आस्यताम्। पितामह एतत् सिंहासनम्। आस्यताम्। मातुल एतत् चर्मासनम्। आस्यताम्। आर्यौ वैकर्णवर्षदेवौ आसातां भवन्तौ। भो भोः सर्वक्षत्रियाः स्वैरमासतां भवन्तः। किमिति किमिति महाराजो नास्त इति। अहो सेवाधर्मः। नन्वहमासे। वयस्य कर्ण त्वमप्यास्व।" एषु वाक्येषु कर्तृवाच्यं कर्मवाच्यं च समं स्तः। तथैव भर्तृहरिः – "प्रारभ्यते न खलु विघ्नभयेन नीचैः प्रारभ्य विघ्ननिहता विरमन्ति मध्याः" इति। "सीतां चास्मै प्रयच्छाशु सुयुद्धं वा प्रदीयताम् (रामा cr यु. २१.१३)" "क्रियतां पालनं पुत्रा धर्मं प्राप्स्यथ पुष्कलम्" (बा.३१.२)। "हर्तारं जहि काकुत्स्थ हयश्चैवोपनीयताम्।" (बा. ३८.९)। एवं स्थिते कर्मवाच्यमेव संस्कृतभाषाया नैसर्गिकं लक्षणमिति भ्रान्तिमयोऽभिप्रायो भूयशो वर्तते। आकाशवाण्याम्–इयमाकाशवाणी। सम्प्रति वार्ताः श्रूयन्तामिति दिनस्य द्विर्घुष्यते। द्वयोरेकवारं सम्प्रति वार्ताः शृणुत इति यदि सा घोषयति तदा संस्कृतस्य हानिर्भवेत् किम्? न कापि हानिर्भवेद् वृद्धिरेव भवेदिति विश्वसिमि।

भूयशो यतः प्रयोगविषये च किञ्चन वक्तव्यमस्ति। इदं वाक्यद्वयं दृश्यताम्।१. प्रधानमन्त्री अवदद् यत् सर्वे जनाः सुखिनो भवन्ति।२. सर्वे जनाः सुखिनो भवन्ति इति प्रधानमन्त्री अवदत्। अनयोर्द्वितीयवाक्यपद्धतिः

प्राचीनसाहित्ये भूयशो दृश्यते। उदाहरणार्थं महाभाष्यपस्पशाह्निकं द्रष्टव्यम्। यथा च रामायणे

*नगरीं त्वां गतं दृष्ट्वा जननी मे यवीयसी।*

*कैकेयी प्रत्ययं गच्छेदिति रामो वनं गतः।।* (अयो. ४६.५१)

अत्र गोविन्दराजः। रामो वनं गत इति कैकेयी प्रत्ययं विश्वासं गच्छेत्। इति। परन्तु उपर्युक्तप्रथमवाक्यरचनाप्रकारः अद्यत्वे भूम्ना अनुस्रियते रचनापद्धतिरियमेवेति च मिथ्या परिगण्यते। द्वयं च सममेव। मया भूयशः प्राचीना सरलशैली अनुसृता। सरलगद्येन रचितोऽयं ग्रन्थः पाठकानां रामायणकाव्यस्य सम्यगाविष्काराय चेष्टते चेत् कृतकृत्यमात्मानं सम्भावयामि।

ग्रन्थप्रकाशनार्थं तिरुमलतिरुपतिदेवस्थानेन पञ्चदशसहस्ररूप्यकाणां धनसहायः कृतः। तस्याः संस्थायाः कृतज्ञतां वाचयामि।मान्यः सुहृद्वरः सुगृहीतनामधेयः श्रीमान् पुल्लेल श्रीरामचन्द्रः सततं मम साहित्याभ्युदयाकाङ्क्षी विशेषतोऽस्य ग्रन्थस्य प्रोत्साहकश्च। एतेषां धन्यवादान् वाचयामि। अनुमोदेन सह ग्रन्थमुद्रणसंशोधने ममातीव सहकृतां मित्राणां श्रीमतां विठलदेवुनि सुन्दरशर्मणां सौजन्यमुद्घोषयामि।

सम्प्रति मम पितृपादान् स्मरामि। मम पिंता कीर्तिशेषः कालूरि व्यासमूर्तिः सर्वदा रामायणमहाभारतविवेचननिमग्न आसीत् चरमक्षणे सीतारामलक्ष्मणानां वनगमनं जल्पन् व्यसुरभवत्। आ बाल्याद् रामायणमहा-भारतयोर्ममाभिरुचिस्तस्यैव प्रभावेण समुत्पन्ना समेधिता च। तस्मै कृतज्ञतां निवेदयितुं वाचो न प्रभवन्तीति नमस्कारशतमेव समर्पयामि।

वन्दे वाल्मीकिकोकिलम्।

**कालूरि हनुमन्तरावः।**

# श्रीमद्वाल्मीकिरामायणम्

## सरलगद्यात्मकम्

### बालकाण्डम्

१

तपसि वेदाध्ययने च लग्नं वाग्विदां वरं मुनिश्रेष्ठं नारदमुत्तमतपस्वी वाल्मीकिः* पप्रच्छ। सम्प्रति लोके प्रशस्तगुणवान् वीर्यवान् धर्मज्ञः कृतज्ञः सत्यवचनः स्थिरसङ्कल्पश्च को न्वस्ति? सदाचारयुक्तः सर्वप्राणिहिताचरणशीलो विद्वान् अन्यदुष्करकार्यं निर्वहणसमर्थो दृष्टमात्रः सर्वदा आनन्दकरश्च कः? धीरो जितक्रोधकामादिव्यसनः असूयारहितश्च कोऽद्य प्रकाशते? कं वीक्ष्य सङ्ग्रामे रुष्टं देवा अपि बिभ्यति? इमं विषयं ज्ञातुमिच्छामि। नितरामुत्सुकोऽस्मि। हे महर्षे! ईदृशं नरं ज्ञातुं त्वमेव समर्थोऽसि।श्रुत्वा वाल्मीकेर्वचांसि प्रमुदितस्त्रिलोकज्ञो नारद इत्थं बभाषे। त्वया वर्णिता एते गुणा बहवः साधारणजनदुर्लभाश्च सन्ति। सम्यग् विचिन्त्य तत्समस्तगुणसंयुतं नरमुद्दिश्य कथयामि। शृणु। इक्ष्वाकुवंशे समुत्पन्नो रामो जनविख्यातोऽस्ति। स स्वाधीनमना महावीर्यो धृतिद्युतिमान् जितेन्द्रियश्च। स बुध्दिमान् नीतिज्ञो वाग्मी शोभावान् शत्रुसंहारकश्च। विशालस्कन्धो दीर्घबाहुः कम्बुकण्ठो विशालगण्डस्थलो विस्तृतवक्षा मांसलांसः सुन्दरशिरोललाटश्चास्ति। स महाधनुष्मान् शत्रुदमनश्च। तस्य मनोज्ञा गमनरीतिर्भवति। तस्य शरीरमङ्गानि च

---

*आदिकविर्वाल्मीकिः कः? वि.एस्. आप्तेनिघण्टुरेवं कथयति–स बाल्ये पितृभ्यां परित्यक्तो ब्राह्मणः पर्वतनिवासिभिश्चोरैर्वर्धितः चोरः संजातः। पश्चात् कस्यचिन्मुनेः प्रबोधेन मुनिर्बभूव। तपोलग्नस्य तस्योपरि वल्मीकः संवृध्दः। वल्मीकाद् बहिर्गमनात् स नाम्ना वाल्मीकिर्बभूव। गोविन्दराजकथनेन भृगुवंश्यः कश्चित् प्रचेता नाम तस्यायं पुत्र ऋक्षो नाम। निश्चलतरतपोविशेषेणास्य वल्मीकावृतिः संजाता। तस्मादयं वाल्मीकिरिति ख्यातो बभूव। ब्रह्मकै(वै)वर्तपुराणे इदं कथितं किल। रामायणे वाल्मीकिः द्विज इति (१, २, १३) उक्तः ब्रह्मन् इति संबोधितः (१, २, ३०)।

न्यूनाधिक्यवर्जितानि समं भासन्ते। कान्त्या चकास्ति तस्य देहवर्णः। पीनेन वक्षसा विशालनयनाभ्यां सर्वशुभलक्षणैश्च स शोभते। स धर्मज्ञः सत्यसन्धः प्रजाहिततत्परो यशस्वी ज्ञानी पवित्र आश्रितसुलभो मनः-संयमवांश्च। प्रजानां धर्मस्य च स रक्षकः। स वेदान् वेदाङ्गानि च सुष्ठु जानाति धनुर्वेदे च प्रवीणः। सकलशास्त्रज्ञाता स ज्ञातविषयान् न विस्मरति। स प्रतिभावान् साधुरुदारहृदयो विचक्षणः सर्वजनप्रियश्च। यथा नद्यः समुद्रे सम्मिलन्ति तथा सज्जनास्तमभिगच्छन्ति। मान्यः सर्वेषु समभावं स वहति। तस्य कियतापि दर्शनेन लोकस्तृप्तिं न गच्छति। सर्वगुणसमुपेतः श्रीमान् स रामो मातुः कौसल्याया आनन्दवर्धनः कुमारः। गाम्भीर्ये समुद्रस्य धैर्ये हिमवतश्च स तुल्यः। पराक्रमे स विष्णुसमः। चन्द्रस्येव तस्य दर्शनमाह्लादकरं भवति। परन्तु कोपे स कालाग्निसदृक्षः। क्षमागुणे पृथिवीसमः, दाने कुबेरतुल्यः सत्यवचने च सः अन्यो धर्मदेव एव। एवंगुणसम्पन्नममोघविक्रमं ज्येष्ठपुत्रमभीप्सितराजलक्षणसमुपेतं प्रियं रामं प्रेम्णा युवराजपदव्यां स्थापयितुं महाराजो दशरथ इयेष। रामस्य यौवराज्याभिषेकार्थं क्रियमाणानि संविधानानि दृष्ट्वा दशरथस्य भार्या राज्ञी कैकेयी पूर्वं पत्या दत्तेन वरेण राज्याद् रामस्य विवासनं भरतस्याभिषेकं च वव्रे। सत्यवचनो दशरथो धर्मपाशबध्दः सन् प्रियपुत्रं रामं राज्याद् बहिश्चकार। पितुराज्ञया स्वस्याकरणीयं नाम न स्यादिति यथा रामो मातुः कैकेय्याः प्रत्यजानात् तथा स तस्याः प्रीतिमुत्पादयन् वनं जगाम। भ्रातरि नितान्तानुरागवान् प्रियो भ्राता विनयसंपन्नो मातुः सुमित्राया आनन्दवर्धनो लक्ष्मणो वनं गच्छन्तं राममनुजगाम। समस्तशुभलक्षणसंपन्ना उत्तमवनिता सीता च चन्द्रानुसारिणी रोहिणीव राममनुययौ। तदा सर्वे पौरा दशरथश्च बहुदूरं यावद् राममनुसस्रुः। गङ्गातीरे शृङ्गिबेरपुरान्तिके रामः सारथिं निवर्तयामास। त्रयस्ते

सीतारामलक्ष्मणा वनाद् वनं प्रविशन्तो भूरिजलयुता नदीस्तरन्तश्च भरद्वाजादेशेन चित्रकूटपर्वतं प्रापुः। तत्र रम्यां पर्णशालां निर्माय वने विहरन्तो देवगन्धर्वसमाः सुखं न्यवसन्। रामे चित्रकूटं गते पुत्रशोकपीडितो महाराजो दशरथः पुत्रमेव स्मारं स्मारं विलपन् विलपन् ममार। दशरथमरणात् पश्चाद् वसिष्ठप्रमुखैर्विप्रै राज्याभिषेकाय नियुज्यमानो वीरो भरतो राज्यमनिच्छन् पूज्यं रामं प्रसादयितुमना वनं जगाम। स्वस्य प्रातिनिध्येन स्वपादुके राज्यनिर्वहणाय दत्वा पुनः पुनः प्रबोधेन अभ्युपगमय्य भरतं रामो निवर्तयामास। असफलस्वोद्यमो भरतो रामपादौ वन्दित्वा निवृत्य नन्दिग्रामे निवसन् रामप्रत्यागमनदिवसप्रतीक्षापरो राज्यमपालयत्। भरते गते पुरजना भूयोभूयस्तत्रागमिष्यन्तीति अभ्यूह्य रामस्तत्पश्चात् तत्र स्ववनवासदीक्षा विघ्निता भविष्यतीति निश्चित्य दण्डकारण्यं प्राविशत्। राक्षसं विराधं हत्वा क्रमात् शरभङ्गमुनिं सुतीक्ष्णमगस्त्यं तद्भ्रातरं च रामो ददर्श। अगस्त्यवचनेन देवेन्द्रस्य धनुः खड्गमक्षय्यबाणवत् तूणीरद्वयं च सम्मोदेन जग्राह। वनचरैः साकं वने निवसतो रामस्य समीपं मुनय आगम्यासुरान् राक्षसांश्च हन्तुं तमभ्यर्थयामासुः। तत्रैव निवसता रामेण तत्समीपजनस्थाननिवासिनी शूर्पणखा नाम कामरूपिणी राक्षसी कर्णनासच्छेदेन विरूपा कारिता। ततः शूर्पणखावचोभिरूद्युज्यागतान् खरदूषणत्रिशिरसः सानुचरान् आहत्य चतुर्दशसहस्राणि राक्षसान् युध्दे रामो जघान। ततः स्वकुटुम्बवधश्रवणजातरोषावेशो रावणः स्वस्य सहायं कर्तुं मारीचं नाम राक्षसमभ्यर्थयामास। बलवता रामेण सह विरोधो न ते युज्यते इति मारीचेन सुबहुशः प्रतिषिध्दोऽपि तस्य वचांसि अनादृत्य तेनैव सह रामाश्रमं स जगाम। तत्र च मारीचेन रामलक्ष्मणौ दूरमपवाह्य गृध्रं जटायुषं हत्वा कालचोदितो रावणो रामपत्नीमपजहार।मुमूर्षुं जटायुषं

दृष्ट्वा सीताहरणवार्तां च श्रुत्वा रामो भृशं व्याकुलमना रुरोद। ततस्तस्मिन्नेव शोके मग्नो जटायुषो दाहसंस्कारं कृत्वा अरण्ये सीतामन्विष्यन् भयंकरविकृतरूपं कबन्धं नाम राक्षसं ददर्श। रामस्तं कबन्धं हत्वा अग्निना संचस्कार। कबन्धः स्वर्गं जगाम। स्वर्गं गच्छन् कबन्धो रामस्य सूचनामदाद् यद् धर्मसूक्ष्मज्ञा धर्माचरणतत्परा शबरी नाम सन्न्यासिनी समीपे निवसति तस्याः सकाशं गच्छेति। रामस्तस्या आश्रमं जगाम। सा तं सम्यक् पूजयामास। ततो रामः पम्पातीरे वानरं हनुमन्तं समासदत्। तस्य वचनेन सुग्रीवेण सम्मिल्य तस्मै स्ववृत्तान्तं सकलं न्यवेदयत्। पश्चाद् वानरराजः सुग्रीवो भ्रात्रा वालिना सह स्वस्य वैरवृत्तान्तं स्नेहेन दुःखेन च रामाय कथितवान्। वालिनो महाबलं च कथयामास। अहं वालिनं हनिष्यामीति तदा रामः सुग्रीवाय प्रत्यजानात्। परन्तु सुग्रीवः शङ्कामग्नोऽभवत् किमयं रामो वालिनं हन्तुं बले पराक्रमे चालं स्यादिति। तं विश्वासयितुं रामः पादाङ्गुष्ठेन दुन्दुभेर्महाशरीरं पूर्णं दशयोजनदूरं चिक्षेप। ततः परं सप्त तालवृक्षान् पर्वतं पातालं चैकेन महाबाणेन चिच्छेद। तथा सुग्रीवं प्रत्याययामास। इत्थं विश्वस्तः सन्तुष्टश्च कपिवरः सुग्रीवः सह रामेण पर्वतानां मध्ये गुहाकारेण स्थितां किष्किन्धां प्राप्योच्चैर्जगर्ज। श्रुत्वा तं महानादं वाली बहिराजगाम। सुग्रीवाभ्यर्थनानुसारेण वालिसुग्रीवयोर्युध्दे प्रवर्तमाने रामो वालिनं हत्वा तस्मिन् राज्ये सुग्रीवं प्रत्यष्ठापयत्। वानरराजः सुग्रीवः सर्वान् वानरान् समाहृत्य सीतां विचेतुं तान् समस्तदिशासु प्रजिघाय। ततो गृध्रस्य सम्पातेर्वचनं स्वीकृत्य बलवान् हनुमान् शतयोजनविस्तीर्णं समुद्रं पुप्लुवे। रावणपालितां लङ्कां प्राप्य तत्राशोकवने सदा राममेव ध्यायन्तीं सीतां ददर्श। अभिज्ञानार्थं रामदत्तमङ्गुलीयकं समर्प्य तस्याः स्ववृत्तान्तं कथयित्वा तां समाश्वास्य पश्चादशोकवनद्वारं बभञ्ज। पञ्च सेनापतीन्

सप्त मन्त्रिपुत्रान् शूरं कुमारमक्षं च हत्वा पश्चात् स्वयं ग्रहणमुपजगाम। ब्रह्मास्त्रप्रभावान्मुक्तमात्मानं विज्ञाय च बध्नतो राक्षसान् यदृच्छया सेहे। पश्चात् सीतामृते शिष्टं लङ्कानगरं दग्ध्वा रामाय प्रियवार्तां निवेदयितुं कपिश्रेष्ठो हनुमान् प्रत्यागतः। राममासाद्य प्रदक्षिणं कृत्वा दृष्टा सीतेति यथार्थमाह। अनन्तरं सुग्रीवसहितो रामः समुद्रतीरं गत्वा सूर्यवत् तेजस्वद्भिः शरैः समुद्रं व्याकुलयामास। तदा समुद्रो निजरूपेण रामाभिमुखं तस्थौ। तस्य समुद्रस्य वचनाद् रामो नलेन सेतुं निर्माप्य तेन लङ्कां प्राप्य युध्दे रावणं हत्वा तद्राज्ये विभीषणमभ्यषेचयत्। महात्मनो रामस्य तेन महता कार्येण देवैः ऋषिभिःसाकं सचराचरास्त्रयो लोका मुमुदिरे।हृष्टैः सर्वैर्देवैः पूजितो रामः कृतकृत्यो मनस्तापं त्यक्त्वा ननन्द। देवेभ्यो वरानधिगम्य मृतान् वानरानुज्जीवयामास पश्चात् पुष्पकविमानेन नन्दिग्राममगच्छत्। तत्र भ्रातृभिः सम्मिल्य जटा मुक्त्वा सीतया समेतः स्वराज्यमधिजगाम। तदा सर्वो लोक आनन्दितवान्। तुष्टः पुष्टः सुधार्मिको रोगरहितो दुर्भिक्षभयवर्जितश्चाभवत्। रामस्य पालने कोऽपि कुत्रापि पुत्रमरणं न द्रक्ष्यति। स्त्रीणां पतिमृतिर्न भविष्यति। ताः पतिव्रता भविष्यन्ति। वातेनाग्निना वा भयं न भविष्यति। जले न कोऽपि प्राणी मग्नो मरिष्यति। सर्वं कृतयुगवद् भविष्यति। बहुसुवर्णदानैर्बहुशताश्वमेधान् कृत्वा रामो विद्वद्भ्यो बहुकोटीर्गा यथाविधि समर्पयिष्यति। रामः शतगुणान् राजवंशान् स्थापयिष्यति, लोके समस्तजनान् स्वस्वधर्मेषु नियोजयिष्यति च। एकादशसहस्रसंवत्सरान् राज्यं परिपाल्य रामो ब्रह्मलोकमधिगमिष्यति। पवित्रं पापघ्नं पुण्यसमुपार्जकं वेदतुल्यमिदं रामचरितं यः पठेत् स सर्वपापेभ्यो विमुच्यते। आयुर्वृध्दिकरमिदं रामायणं पठन् पुत्रपौत्रबन्धुमित्रपरिजनयुतो मरणानन्तरं स्वर्गे सम्मानितो भवेत्। रामायणं पठन् ब्राह्मणः पण्डितो भवेत्। क्षत्रियो भूपतिर्भवेत्। वणिग् व्यापारे लाभं प्राप्नुयात्। शूद्रः प्रतिष्ठामधिगच्छेत्।

२

नारदस्य तद् वचनं श्रुत्वा वाक्यविशारदः सहशिष्यो वाल्मीकिस्तदितिवृत्तकथनहर्षितो नारदं पूजयामास। तेन यथाविधि पूजितो नारदस्तमापृच्छ्य विहायसा देवलोकं जगाम। अन्वक्षं वाल्मीकिर्गङ्गाया नातिदूरे स्थितायास्तमसानद्यास्तीरं जगाम। अकर्दमं तमसास्नानघट्टं वीक्ष्य वाल्मीकिः पार्श्वस्थं शिष्यमाह। वत्स! भरद्वाज! अकर्दममिदं तीर्थं पश्य। सन्मनुष्यस्य मनोवत् स्वच्छजलं रमणीयं चेदमस्ति। कलशं स्थापय मम वल्कलं च देहि। अस्मिन् तीर्थे स्नास्यामि। एवमुक्तो विधेयः शिष्यो भरद्वाजो गुरोर्वल्कलं ददौ। स नियतेन्द्रियो वाल्मीकिः शिष्यहस्ताद् वल्कलं गृहीत्वा विशालं तद् वनं पश्यन् सर्वतो विचचार। तन्निकटे स महामुनिः क्रौञ्चमिथुनमेकमपश्यत्। कदाप्यवियुक्तं तन्मिथुनं मधुरं कूजति स्म। तस्मान्मिथुनादेकं पुमांसं पक्षिणं मुनेः पश्यतः पापी जन्तुविरोधी व्याधो जघान। तं पुमांसं पक्षिणं रक्तपूर्णशरीरं भृशं विक्षतं भूतले वेष्टमानं दृष्ट्वा भार्या पक्षी करुणया गिरा रुराव। तथा निषादेन निहतं तं पक्षिणं दृष्ट्वा धर्मात्मनो मुनेः करुणा उद्बभूव। करुणामयो ब्रह्मर्षिर्वाल्मीकिरयमधर्म इति निश्चित्य रुदतीं क्रौञ्चीं दृष्ट्वा व्याधमिदमुवाच। हे निषाद! क्रौञ्चमिथुनात् काममोहितमेकं त्वमवधीः। तस्मात् त्वं चिरं न भविष्यसि। इत्युक्त्वा विचार्य मुनिरचिन्तयद् यत् पक्षिकारणात् शोकार्तेन मया किमिदं वाक्यमुक्तमिति। स चिन्तयित्वा निश्चित्य च शिष्यमिदमुवाच। शोकार्तस्य मे प्रवृत्तोऽयं समानाक्षरैः पादैर्बध्दः श्लोक एव भवति। एवं ब्रुवतो गुरोरुत्तमं वाक्यं भरद्वाजो हर्षेण सत्यमयं श्लोक एव भवतीति समर्थयामास। तेन वाल्मीकिश्च तुष्टोऽभवत्। ततो वाल्मीकिस्तस्मिन् तीर्थे विधिवत् स्नात्वा तमेव विषयं चिन्तयन्नाश्रमं प्रत्याजगाम। विनीतः शास्त्रवेत्ता शिष्यो भरद्वाजः पूर्णकलशमादाय तमनुजगाम। शिष्येण सहाश्रमं प्रविश्य

वाल्मीकिरुपविष्टः अन्यान् विषयान् ब्रुवन्नपि स्वश्लोकमेव ध्यायन्नासीत्। तदा तत्र लोककर्ता भगवान् ब्रह्मा तं महामुनिं द्रष्टुमाजगाम। तं दृष्ट्वा वाल्मीकिः परमविस्मितः सहसोत्थाय विनयेन प्राञ्जलिर्भूत्वा मौनेन तस्थौ। ब्रह्माणं विधिवत् पाद्यार्घ्यासननमस्कारैः संपूज्याविच्छिन्नं कुशलमपृच्छत्। उपविष्टो ब्रह्मा मुनिमुपवेष्टुं प्राह। लोकपितामहे चतुर्मुखे उपविष्टे वाल्मीकिः पक्षिविषयमेव ध्यायति स्म। धिक् कष्टम्। पापात्मा पक्षिणां सहजवैरी व्याधस्तं ग्रहीतुमना निष्कारणं तादृशं चारुरवं कुर्वाणं पक्षिणमवधीत्। इति क्रौञ्चीविषये दुःखमग्नः सन् मुनिश्चिन्तयन् पुनश्च श्लोकमुपजगौ। तदा प्रहसन् तं मुनिं ब्रह्मोवाच। मुने! विचारणा न कार्या। श्लोक एव त्वया प्रोक्तः। हे ब्रह्मन्! ममैव प्रेरणया तवेयं वाणी प्रवृत्ता। मुनिसत्तम! रामस्य चरितं सर्वं वर्णय। धर्मात्मनो धीमतो धीरस्य रामस्य चरितं यथा नारदाच्छ्रुतं तथा कथय। सहलक्ष्मणस्य रामस्य सीताया राक्षसानामन्येषां सर्वेषां च रहस्यं प्रकाशं च सर्वं वृत्तं विदितमविदितं च ते विदितं भविष्यति। काव्ये तव कापि वागनृता न भविष्यति। मनोरमां रामकथां श्लोकैर्विरचय। यावन्महीतले नद्यो गिरयश्च स्थास्यन्ति तावद् रामायणकथा जनेषु प्रवर्तिष्यते। यावत् त्वत्कृता रामायणकथा प्रचरिष्यति तावत् त्वं सर्वत्र मम लोकेषु निवत्स्यसि। इत्युक्त्वा ब्रह्मा तत्रैवान्तर्दधे सहशिष्यो वाल्मीकिर्विस्मयं प्राप। तदा तस्य शिष्याः सर्वे श्लोकमिमं पुनः पुनर्जगुः प्रीत्या विस्मयेन परस्परं भाषन्ते च स्म। पक्षिविषयकः शोकस्तत्स्पन्दितहृदयेन महर्षिणा भूयो वचनैरुक्तत्वात् समाक्षरैश्चतुर्भिः पादैर्बद्धं श्लोकरूपं प्राप। तदा कृत्स्नं रामायणकाव्यमीदृशैरेव श्लोकै रचयामीति उदारचरितस्य वाल्मीकेर्मतिर्जाता। तदा यशस्विनो रामस्य यशस्करं काव्यं महाधीमान् वाल्मीकिर्मनोरमैः पदैः समाक्षरपादश्लोकशतैश्चकार।

३

धर्मस्वभावो वाल्मीकिर्धर्मसंयुतं रामकथावस्तु श्रुत्वा भूयश्च तत् सम्यग् ज्ञातुं प्रयत्नवान् बभूव। स उदकमाचम्य प्राचीनाग्रेषु दर्भेषु स्थित्वा कृताञ्जलिस्तपोबलेन रामचरितस्य गतिं सम्यग् ज्ञातवान्। ज्ञात्वा काव्ये रामस्य जन्म तस्य सुमहान्तं पराक्रमं सर्वानुकूलत्वं लोकप्रियतां क्षान्तिं सत्यशीलतां विश्वामित्रेण सह रामगमने उद्भूता बहवश्चित्रकथाः धनुर्भङ्गं सीताविवाहं चावर्णयत्। रामपरशुरामविवादं रामस्य गुणान् तस्याभिषेकप्रयत्नं कैकेय्या दुष्टभावतां रामाभिषेकव्याघातं तस्य विवासनं दशरथस्य शोकविलापं परलोकगमनं चावर्णयत्। प्रजाविषादं रामेण तासां विसर्जनं गुहसंवादं सूतप्रतिनिवर्तनं गङ्गातरणं भरद्वाजदर्शनं तदभ्यनुज्ञानेन चित्रकूटदर्शनं तत्राश्रमनिर्माणं चावर्णयत्। भरतागमनं तत्कृतरामप्रसादनं पितुः सलिलक्रियां श्रेष्ठपादुकयोरभिषेकं भरतस्य नन्दिग्रामनिवासं रामस्य दण्डकारण्यगमनं सुतीक्ष्णसमागममनसूयया सह संवेशमङ्गरागस्यार्पणं चावर्णयत्। शूर्पणखासंवादं विरूपकरणं खरादीनां वधं रावणस्योद्यमं मारीचवधं सीताहरणं जटायुहननं रामविलापं कबन्धमेलनं शबरीदर्शनं पम्पादर्शनं तत्र रामविलापं चावर्णयत्। ऋष्यमूकगमनं सुग्रीवसमागमं सख्यं विश्वासोत्पादनं वालिसुग्रीवयुध्दं वालिबधं ताराविलापं+ रामसुग्रीवयोः समयं वर्षरात्रनिवासं रामकोपं सैन्यानामुपसंग्रहं पृथिवीवर्णनं सेनाभागानां दिशः प्रस्थापनमङ्गुलीयकदानं चावर्णयत्। वानराणामृक्षबिलदर्शनं प्रायोपवेशनं सम्पातेर्दर्शनं पर्वतारोहणं सागरलङ्घनं रात्रौ लङ्काप्रवेशमेकस्य हनुमतो विचिन्तनमापानभूमिगमनमन्तः-पुरदर्शनमशोकवनगमनं सीतादर्शनं सीताया भाषणमभिज्ञानप्रदानं सीताया मणिप्रदानं राक्षसीतर्जनं त्रिजटास्वप्नं हनुमता अशोकवनभङ्गं राक्षसीविद्रवं

+Cr ताराविलापसमयं। ग्राह्यः पाठः – ताराविलापं समयं।

किङ्करवधं हनुमतो ग्रहणं राजसभायां हनुमतो गर्जनं लङ्कादाहं समुद्रस्य प्रतिप्लवनं मधुहरणं रामाश्वासनं शिरोमणिदानं चावर्णयत्। समुद्रसंगमं नलसेतुवन्धनं समुद्रतरणं रात्रौ लङ्कोपरोधनं विभीषणसम्मेलनं तेन रावणवधोपायनिवेदनं कुम्भकर्णमेघनाथरावणानां वधं सीतावाप्तिं विभीषणाभिषेकं पुष्पकदर्शनमयोध्यागमनं भरतसमागमं रामाभिषेकोत्सवं सर्वसैन्यविसर्जनं स्वराष्ट्ररञ्जनं चावर्णयत्। सीताविसर्जनं यत्किञ्चिद् रामस्य भविष्यवृत्तं चोत्तरकाव्ये भगवानृषिर्वाल्मीकिश्चकार।

४

रामस्य राज्यपालनसमये महामतिमान् भगवान् मुनिर्वाल्मीकिराश्चर्यकरैः शब्दैः कृत्स्नं रामचरितं रचयामास। पट्टाभिषेकानन्तरभविष्यकथया सह काव्यं कृत्वा को न्वेतज्जनसमुदायेषु पठेदिति स चिन्तयामास। एवं चिन्तयतस्तस्य पादौ मुनिवेषौ गायकौ कुशीलवौ प्रणेमतुः। मधुरस्वरौ राजपुत्रावाश्रमवासिनौ तौ भ्रातरौ वाल्मीकिरपश्यत्। तौ मेधाविनौ वेदविदौ वाल्मीकिर्वेदार्थविस्तारार्थं विरचितं रामायणं कण्ठस्थमकारयत्। रामचरित्रपूर्णमेतत्काव्यं रामायणमिति कथितं यस्मिन् सीताया महच्चरितं निबध्दम्। पौलस्त्यवधमिति च तस्यापरं नामासीत्*। एतत् काव्यं पठने गाने च मधुरमस्ति। द्रुतमध्यविलम्बिताख्याभिस्तिसृभिर्गीतिभिः षड्जमध्यमगान्धारनिषादऋषभधैवतपञ्चमाख्याभिः सप्तभिर्जातिभि-श्चान्वितम्। तन्त्रीवादनया स्वरतालयुतं गातुं शक्यते। हास्य-शृङ्गारकरुणरौद्रवीरभयानकबीभत्सादिभिः रसैर्युक्तम्। एतत्काव्यं तौ कुशीलवावगायताम्। तौ भ्रातरौ सङ्गीतरहस्यविदौ मन्द्रमध्यम-तारस्वरोत्पत्तिस्थानज्ञौ स्वरपूर्णस्थानज्ञानिनौ मधुरस्वरौ रूपिणौ गन्धर्वाविवास्ताम्। सुन्दररूपेण शुभलक्षणैश्च सम्पन्नौ मधुरस्वरेण

---

* रामकथात्मकमेतत् काव्यं यत् सीताया महच्चरितं वर्णयति। महात्मा वाल्मीकिः पौलस्त्यवधमिति स्वकाव्यस्य नाम कृतवानिति च अर्थो वक्तव्यः।

भाषमाणौ तौ रामदेहमूलबिम्बादुत्पन्नौ द्वौ प्रतिबिम्बाविव दृश्येते स्म। धर्मप्रतिपादकमेतदुत्तममाख्यानं कण्ठस्थं कृत्वा तौ प्रशंसितराजपुत्रौ ऋषिब्राह्मणसाधुसमागमेषु यथोपदेशं जगतुः। कदाचित् तावेतत्काव्यं पवित्रहृदयानामृषीणां समीपे जगतुः। तच्छ्रुत्वा सर्वे मुनयः परं विस्मिता बाष्पपर्याकुलेक्षणाः साधु साधु इत्यूचुः। प्रीतात्मानस्ते मुनयो गायनौ कुशीलवौ प्रशशंसुः। अहो गीतस्य माधुर्यम्। श्लोकानां च माधुर्यं विशेषत आश्चर्यमावहति। एतच्चरित्रं बहुकालात् प्राङ्निर्वृत्तमपि प्रत्यक्षमिव कृतमस्मिन् काव्ये। प्रतिश्लोकभावं सुष्ठु प्रविश्य तालानुसारकण्ठसम्मेलनेन मधुरं मनोहरं स्वरसम्पन्नं चैतौ सम्यगगायताम्। एवं महामुनिभिः प्रशस्यमानौ तावतिमधुरमतिमनोहरं चागायताम्। ताभ्यां प्रीतः कश्चिन्मुनिरुत्थाय पुरस्काररूपेण कलशं ददौ। कश्चित् प्रसन्नो वल्कलं ददौ। मुनिविरचितमिदमाश्चर्यकरं काव्यं परवर्तिनां कवीनां श्रेष्ठ आधारो भविष्यति। श्रीमतो रामस्य सम्पूर्णं चरितं यथाक्रममस्मिन् काव्ये वर्णितम्। एवं रथ्यासु राजमार्गेषु च गायन्तौ प्रशस्यमानौ तौ कुशलवौ कदाचिद् रामो ददर्श। तौ स्वगृहमानीय सम्मानयामास। उत्तमकाञ्चनसिंहासने उपविष्टो राम उपासीनैर्मन्त्रिभिर्भ्रातृभिः सह तौ वीणाहस्तौ दृष्ट्वा भ्रातृनेवमुवाच। देववत् शोभमानयोरनयोर्मधुरस्वरेण गीतमाश्चर्यावहशब्दार्थसंवलितमिदं काव्यं श्रूयताम्। इमौ मुनी भूत्वापि राजलक्षणान्वितौ स्तः। न केवलं गायकौ तपस्विनौ चैतौ स्तः। एतत्काव्यं ममाप्यभ्युदयकरमिति वृध्दा ब्रुवन्ति। अतो भवन्त एतन्महाचरितं सावधानं शृण्वन्तु। ततो रामवचःप्रचोदितौ तौ कुशीलवौ मार्गविधानेन रामायणं जगतुः। सभागतो रामश्च शनैस्तद्गानतन्मयतां प्राप।

५

प्रजापतिं वैवस्वतमनुमारभ्य कृत्स्नेयं+ धरित्री जयशालिनां येषां नृपाणां वशे पूर्वमासीद् येषां चान्यतम आसीत् सगरो येन सागरः खानितो

+ cr सर्वापूर्वमियं। पाठ्यः – सर्वा पूर्वमियं

यं च युध्दप्रस्थितं षष्टिः पुत्रसहस्राणि अनुजग्मुः तेषां महात्मनामिक्ष्वाकूणां वंशे इदं प्रसिध्दमाख्यानं रामायणमुत्पन्नम्। सर्वमिदं काव्यं धर्मार्थसहितमादितः कथयिष्यामि। दोषदृष्टिं परित्यज्येदं श्रोतव्यम्। सरयूतीरे प्रभूतधनधान्यवान् कोसलो नाम महान् जनपदः सुखी आसीत्। तस्मिन् कोसलदेशे महाराजेन मनुना स्वयं निर्मिता अयोध्या नाम विश्रुता नगरी अस्ति। सुनिर्मितमहामार्गा शोभायुता सा महापुरी द्वादशयोजनान्यायता त्रीणि विस्तीर्णा च बभूव। कीर्णपुष्पेण नित्यजलसिक्तेन महता सुनिर्मितेन राजमार्गेण सा शोभते स्म। यथेन्द्रो दिवमावसति तथा राष्ट्रविवर्धनो राजा दशरथस्तां पुरीं निवासं कृत्वा पौरवृध्दिं ततान। सा पुरी कवाटतोरणवती सर्वयन्त्रैरायुधैश्च संयुता बभूव। तत्पुरमध्ये सुनिर्मिता आपणा बभूवुः। सर्वे शिल्पिनस्तत्पुरे आसन्। समृध्दिमती सा नगरी सूतैर्मागधैश्च भरिता। समुन्नताट्टाला ध्वजा बहुशतघ्न्यश्च तत्रासन्। तस्यां पुर्यां नर्तक्यो नटाश्च बहव आसन्*। नगरे सर्वत उद्यानानि आम्रवणानि च बभूवुः। प्राकारो नगर्या मेखलावदासीत्। दुर्गमा गम्भीरा च तस्याः परिखा स्थिता। सा पुरी दुर्गमा शत्रुदुर्जया चासीत्। वाजिभिर्वारणैर्गोभिरुष्ट्रैः खरैश्च सा पूर्णासीत्। करदायिभिः सामन्तनृपैरावृता नानादेशीयैर्वणिग्भिः सा शोभिता च। रत्नमयैः प्रासादैः क्रीडापर्वतैर्बहुभूमिकाहर्म्यैश्च स्वर्गवत् संपूर्णा बभुव। द्यूत** फलकाकारेण सर्वरत्नसमाकीर्णा सप्तभूमिकाप्रासादैः शोभिता च सा पुरी आश्चर्य जनयामास। गृहनिबिडा सा पुरी अनुपयुक्तस्थलरहिता समभूमौ निर्मिता। सा शालितण्डुलसंपूर्णा आसीत्। तस्मिन् नगरे जलमिक्षुरसवन्मधुरमभवत्। पृथिव्यां सर्वोत्तमा सा नगरी भेरीमृदङ्गवीणापणवैर्भृशं नादिता भवति स्म। सिध्दैस्तपसा स्वर्गे निर्मितं विमानमिव स्थितायां तस्यां पुर्यां गृहाणि सुनिवेशितानि बभूवुः। उत्तमा

---

* स्त्रीणामुद्दिष्टा नर्तनागारा इति केचित्। ** चतुरङ्गफलकाकारेणेति cr।

नरास्तत्र निवसन्ति स्म। तस्मिन् नगरे बहुसहस्राणि महारथा आसन्। ते वीराः कदाप्येकाकिनं वा पितृपुत्रोभयहीनं वा शब्दवेधिबाणद्वारा प्रहरणशक्यं वा पलायमानं वा न प्रहरन्ति स्म। मत्तान् सिंहान् व्याघ्रान् वराहांश्च शस्त्रेण वा बाहुबलेन वा ते घ्नन्ति स्म। तां पुरीं राजा दशरथो निवासं चक्रे। तस्मिन् नगरे निवसन्तो महात्मानो द्विजा आहिताग्नयो गुणवन्तो वेदवेदाङ्गविदो दानशौण्डाः सत्यरताः केचिन्महर्षितुल्याः केचिदृषयश्चासन्। तां पुरीमयोध्यां दशरथो रक्षति स्म।

६

तामयोध्यां पुरीं दशरथः शशास। स वेदवित् सर्वोपयोगवस्तुसंग्रहकर्ता दीर्घदर्शी महातेजाः पौरजानपदप्रिय इक्ष्वाकूणामतिरथो यज्वा धर्मपरायणो जितेन्द्रियो महर्षितुल्यो राजर्षिर्लोकत्रयविख्यातो बलवान्नि-हतशत्रुर्मित्रवान् धनैरन्यसंचयैश्चेन्द्रकुबेरसमश्चासीत्। यथा प्रजापतिर्महातेजा मनुर्लोकमरक्षत् तथा राजा दशरथश्चापालयत्। तेन धर्मार्थकाम-संपादनकर्मानुष्ठानपरेण सत्यप्रतिज्ञेन देवेन्द्रेण स्वर्ग इव श्रेष्ठा सा पुरी पालिता। तस्मिन् पुरोत्तमे जना हृष्टा धर्मात्मानो बहुश्रुताः स्वस्वधनतुष्टा अलुब्धाः सत्यवादिनश्च बभूवुः। तस्मिन्नुत्तमपुरे न कश्चित् कुटुम्बी आसीद् योऽल्पसंचितधनः असिध्दधर्मार्थकामो गवाश्वधनधान्यहीनश्च। अयोध्यायां कामुकः कृपणः क्रूरो विद्याहीनो नास्तिको वा मनुष्यो न दृश्यते स्म। तत्र सर्वे नरा नार्यश्च धर्मशीलाः संयमिनो हृष्टाः शीलसदाचाराभ्यां महर्षिवन्निर्मलाश्चाभवन्। तस्मिन्नगरे न कोऽप्यासीद् यस्य कुण्डलं मकुटं पुष्पहारश्च नासीत्। न कोऽपि तत्राल्पभोगवान-विद्यत। अभ्यङ्गस्नानेन चन्दनलेपेन सुगन्धेन च वञ्चितस्तत्र कोऽपि नासीत्। अश्रेष्ठान्नभोजी अदानी कण्ठभूषणहस्ताभरणशून्यः असंयतमना वा तत्र न बभूव। अनाहिताग्निरयज्वा सहस्रस्वर्णमुद्राभ्यो न्यूनदाता

ब्राह्मणो बर्णसङ्करकारी वा तस्मिन् पुरे कोऽपि नासीत्। तत्र सर्वे ब्राह्मणा नित्यं स्वकर्मासक्ता विजितेन्द्रिया दानाध्ययनशीला दानस्वीकरणे संयताश्चाभवन्। नास्तिकः अनृतभाषी अकृतानेकशास्त्रपरिश्रमः असूयावान् अशक्तः अज्ञानी वा तत्र न कोऽपि तदा विद्यते स्म। दीनो व्याकुलचित्तो दुःखितो धनहीनो रूपहीनो राज्ञि भक्तिहीनो वा तत्र न दृष्टः। ब्राह्मणादिचतुर्वर्णेषु सर्वे देवतातिथिपूजका दीर्घायुषो धर्मसत्यपरायणाश्चासन्। क्षत्रिया ब्राह्मणानुसारिणः क्षत्रियानुगामिनो वैश्याः स्वधर्मासक्ता ब्राह्मणक्षत्रियवैश्यसेविनः शूद्राश्चासन्। पूर्वं यथा मनुना मानवेन्द्रेण रक्षिता तथा दशरथेनायोध्या रक्षिताभवत्। अग्नितुल्यैर्निपुणैः पौरुषवद्भिर्विद्याशालिभिश्च योधैस्तथा सा पुरी भरिता यथा सिंहैर्गिरिगुहाः। काम्बोजबाह्लीकवनायुसिन्धुदेशजैरुच्चैःश्रवस्तुल्यैर्हयैः सा नगरी पूर्णा बभूव। विन्ध्यपर्वताद् हिमवत्पर्वताच्चोद्भूतैरतिबलैर्मत्तैः पर्वतोपमैर्गजैः सा पुरी परिपूर्णा आसीत्। अञ्जनाद् वामनाच्च संभूतैः भद्रमन्द्रमृगाख्यानां वारणजातीनां द्वयोर्द्वयोः संकरादुत्पन्नैर्भद्रमन्दैर्भद्रमृगैर्मृगमन्द्रैश्च नित्यमत्तैः पर्वतसन्निभैर्वारणैः सा पुरी सदा पूर्णा बभूव। योजनद्वयदूरादपि शत्रुभिर्योध्दुमशक्या सा पुरी अयोध्येत्यन्वर्थनामा प्रकाशते स्म। दृढद्वारार्गलत्वादयोध्येति सत्यं नाम धरन्तीं सुन्दरैर्गृहैः शोभमानां शिवां बहुजनसंकुलां तां पुरीं शक्रसमो महीपतिर्दशरथः शशास।

७

शुचयो राजकृत्येषु नित्यमनुरक्ताश्चाष्टौ तस्यामात्या बभूवुः। ते धृष्टिर्जयन्तो विजयः सिध्दार्थः अर्थसाधकः अशोको मन्त्रपालः सुमन्त्रश्चाष्टमः। तस्याभिमतौ ऋषिसत्तमौ वसिष्ठो वामदेवश्च द्वौ ऋत्विजावास्ताम्। अन्ये ऋत्विजो मन्त्रिणश्च तस्य बभूवुः। ते ऐश्वर्यवन्तो महात्मानः शास्त्रज्ञा दृढविक्रमा यशस्विनो राजकार्येषु सावधाना राजाज्ञानुसारकार्यकर्तारस्तेजस्विनः सहनशालिनः सस्मितं

भाषमाणाः क्रोधात् कामात् स्वार्थाद् वा अनृताभाषिणश्चासन्। स्वेषु परेषु वा कृतं क्रियमाणं चिकीर्षितं वा कर्म तेषां चारद्वारा अविदितं किमपि नासीत्। व्यवहारेषु ते कुशलाः स्नेहविषयेषु परीक्षिताश्च। सत्यवसरे सुतेष्वपि ते दण्डं धारयेयुः। कोशपूरणे सैन्यसंग्रहणे च ते लगन्ति स्म। अनपराधिनं शत्रुमपि न ते दण्डयेयुः। ते वीराः स्थिरोत्साहा राजशास्त्रमनुसृत्य कार्यकारिणो नित्यं स्वराज्यवासिनां सत्पुरुषाणां रक्षकाश्च बभूवुः। ब्राह्मणान् क्षत्रियांश्चाहिंसन्तस्ते कोशं पूरयामासुः। अपराधिनो बलिनस्तीक्ष्णदण्डं दुर्बलस्य मृदुदण्डं च ते व्यदधुः*। शुचिषु एकबुध्दिषु सर्वेषु मन्त्रिषु राजकार्याणि विचारयत्सु पुरे वा राष्ट्रे वा क्वचिदसत्यवादी नासीत्। न कोऽपि दुष्टो वा परदारलम्पटो वा बभूव। सर्वं पुरं राष्ट्रं च शान्तिपूर्णमभवत्। सर्वे ते मन्त्रिणः शोभनवस्त्रवेषाः सुशीलाः राजहितार्थं नयचक्षुषा जाग्रति स्म। गुरुजनेषु ते गुणैकग्राहिणः पराक्रमैः प्रख्याता बुध्दिनिष्पन्नकार्यद्वारा विदेशेषु च विज्ञाताः। अनघो दशरथो गुणोपेतैरेवंविधैरमात्यैर्युक्तः पृथिवीमन्वशिषत्। चारैरवेक्षमाणो धर्मेण प्रजा रञ्जयंश्च स दशरथ आत्मनो विशिष्टं वा तुल्यं वा शत्रुं न प्राप्नोत्। राजकार्यालोचनासक्तै+रनुरक्तैः कुशलैः समर्थैस्तैर्मन्त्रिभिर्युक्तः स राजा तेजोमयकिरणैः सहोदितोऽर्क इव दीप्तिमवाप।

## ८

तस्यैवंप्रभावस्य धर्मज्ञस्य महात्मनो दशरथस्य पुत्रार्थं परितप्यमानस्य वंशाभिवृध्दिकरः पुत्रो न बभूव। एवं चिन्तयतस्तस्य पुत्रार्थं किमहमश्वमेधयागं न कुर्यामिति मतिर्बभूव। शुध्दात्मभिर्मन्त्रिभिः सह समालोच्य यष्टव्यमिति निश्चित्य मन्त्रिवरं सुमन्त्रं मम गुरून् सपुरोहितान् शीघ्रमानयेति प्राह। एतच्छ्रुत्वा सारथिः सुमन्त्रो रहसि राजानमिदमूचे।

---

* अथवा अपराधगुरुलाघवं समीक्ष्य दण्डं व्यदधुः। + Cr मन्त्रहितैर्निविष्टैः। ग्राह्यःमन्त्रहिते निविष्टैः।

अश्वमेधयाग ऋत्विग्भिरुपदिष्टः। तत्र विशेषोपायोऽयं पुरावृत्तो मया श्रुतश्च। तव पुत्रप्राप्तिविषये ऋषीणां सन्निधौ भगवान् सनत्कुमारः पूर्वमिमां कथां कथितवान्। काश्यपस्य विभाण्डक इति प्रसिध्दः पुत्रोऽस्ति। तस्य ऋष्यशृङ्गो नाम पुत्रो भविष्यति। स विप्रेन्द्रो वन एव संवृध्दः सदा वनचरो मुनिः सर्वदा पित्रनुवर्तनादन्यं ग्रामादिकं न जानाति। महात्मनस्तस्य ब्रह्मचर्यस्य द्वैविध्यं भविष्यति। प्रथमतो दण्डमेखलादिधारणारूपं मुख्यब्रह्मचर्यं पश्चादृतुकाले पत्नीसमागमरूपं गौणब्रह्मचर्यं च। इदं द्वैविध्यं लोकेषु प्रथितं विप्रैः कथितं च। इत्थं सदा वननिवासिनः पितुरन्यमजानतः अग्निं पितरं च शुश्रूषमाणस्य कालः कश्चिद् व्यत्येष्यति। एतस्मिन्नेव काले अङ्गेषु विख्यातो राजा रोमपादो भविष्यति। तस्य राज्ञो धर्मातिक्रमात् सुदारुणा सर्वप्राणिभयावहा अनावृष्टिर्भविष्यति। तदा दुःखितो विदुषो वृध्दान् ब्राह्मणान् समानीय स प्रवक्ष्यति। भवन्तो धर्मज्ञा लोकाचारज्ञाश्च। अतः कञ्चन नियमं समादिशन्तु येन मम प्रायश्चित्तं भवेत्। तदा ते हे राजन्! सर्वोपायैर्विभाण्डकसुतमिहानयेति वक्ष्यन्ति। सत्कृत्य ऋष्यशृङ्गमानाय्य श्रध्दया कन्यां शान्तां तस्मै शास्त्रोक्तेन विधिना विवाहार्थं प्रयच्छ। तेषां वचनं श्रुत्वा स राजा केनोपायेन शक्तिशाली स मुनिरिहानीयेतेति चिन्तयिष्यति। ततो बुध्दिशाली राजा मन्त्रिभिः समालोच्य पुरोहितममात्यांश्च सत्कृत्य तत्र प्रेषयिष्यति। राज्ञो वचः श्रुत्वा ते व्यथिता अवनताननाश्च[+] ऋषेर्भीता वयं न गच्छेमेति राजानं प्रार्थयिष्यन्ते। ते चिन्तयित्वा तमृषिमानेतुं युक्तानुपायान् वक्ष्यन्ति। उपायेन तमानेष्यामः। तेन दोषो न भविष्यतीति वदिष्यन्ति। एवमङ्गाधिपेन गणिकाभिर्ऋषेः सुत आनेष्यते। आनीतमात्रे तस्मिन् देवो वर्षिष्यति। राजा शान्तां तस्मै प्रदास्यति।

---

[+] Cr व्यथिता वनताननाः। व्यथिता अवनताननाः इति पाठ्यः। व्यथिताः अवनताननाः। सन्धिरार्षः।

जामाता ऋष्यशृङ्गस्तव पुत्रान् विधास्यति। सर्वमिदं सनत्कुमारेण कथितं मयेदानीं व्याहृतं च। ततो हृष्टो दशरथः सुमन्त्रं प्रत्यभाषत। कथमृष्यशृङ्ग आनीतः? विस्तरेण तद् ब्रूहीति।

९

राज्ञा चोदितः सुमन्त्र इदं वचः प्राह। यथा स* ऋष्यशृङ्गो मन्त्रिभिरानीतस्तद् वृत्तं शृणु। अमात्यसहितः पुरोहितो राजानमाह। अस्माभिरयमुपायश्चिन्तितोऽस्ति येन कार्यविघ्नो न भवेत्। ऋष्यशृङ्गो वनचरस्तपःस्वाध्यायनिरतश्चास्ति। स स्त्रियो नाभिजानाति विषयसुखानामज्ञश्च। मनुष्यचित्तक्षोभकराणां विषयाणां प्रलोभनेन तमस्मन्नगरमानाययिष्यामः। अतः शीघ्रमयं प्रयत्नः क्रियताम्। रूपवत्यः सुभूषिताः सत्कृता गणिकास्तत्र गच्छन्तु। विविधोपायैः प्रलोभ्य तास्तमानेष्यन्ति। तच्छ्रुत्वा राजा पुरोहितं तथा भवतु इति प्रत्युवाच। पुरोहितो मन्त्रिणश्च ततस्तां व्यवस्थां चक्रुः। तच्छ्रुत्वा मुख्या गणिका वनं प्रविविशुः। आश्रमस्यानतिदूरे स्थित्वा धीरस्य सदाश्रमवासिन ऋषिपुत्रस्य दर्शने यत्नं चक्रुः। पितुरन्तिके निवासेनैव स मुनिपुत्रः सन्तुष्टो भूत्वा आश्रमात् कदापि बहिर्न गच्छति स्म। जन्मप्रभृति तेन पितुरन्यः पुमान् स्त्री वा नगरजं राष्ट्रग्रामजं वा सत्त्वं न दृष्टपूर्वम्। पश्चात् कदाचित् स ऋष्यशृङ्गो यदृच्छया तं प्रदेशं गत्वा ता नारीर्ददर्श। विस्मयकर–सुन्दरवेषास्ताः सर्वाः स्त्रियो मधुरस्वरेण गायन्त्य ऋषिकुमारमासाद्योचुः। हे ब्रह्मन्! कस्त्वं किं करोषि च? किमर्थमेकस्त्वं विजने घोरे वने चरसि?शंस। पूर्वमदृष्टास्ताः स्त्रियः काम्यरूपा आसन्। तस्मादृष्यशृङ्गस्य मनसि तासु स्नेहो जातः। स्वपितरमुद्दिश्य ताः कथयितुं तस्य मतिर्बभूव। अस्माकं पिता विभाण्डकः। तस्याहमौरसः पुत्रः। ऋष्यशृङ्ग

* शृणु मे मन्त्रिभिः सह इति सर्वत्र पाठः। परन्तु सुमन्त्रो दशरथेन रहसि भाषते। अतः मन्त्रिभिः स ह इति पदच्छेदः कार्यः। ह इति प्रसिध्दौ इति गोविन्दराजः।

इति मम नाम तपस्यादिकर्म च लोके प्रसिध्दमस्ति। हे शोभनदर्शनाः! अस्माकमाश्रमप्रदेश इह निकटेऽस्ति। तत्र वः सर्वेषां* पूजां विधिपूर्वकं करिष्ये। मुनिकुमारस्य वचः श्रुत्वा तदाश्रमपदं द्रष्टुं तासां मतिर्बभूव। तेन सह सर्वाश्च ता जग्मुः।तत्रागतानां तासामिदमर्घ्यमिदं पाद्यमिदं मूलं फलमिति ऋष्यशृङ्गः पूजां चकार। तां पूजां प्रतिगृह्य सर्वास्ता विभाण्डकाद् भीताः समुत्सुकाः क्षिप्रं तस्माद् गन्तुं मतिं चक्रुः। हे विप्र! अस्माकमपीमानि मुख्यानि फलानि प्रतिगृहाण। तव भद्रमस्तु। शीघ्रमेतानि भक्षयस्व। इत्युक्त्वा ता हर्षेण तमालिङ्ग्य मोदकानि रुचिकराणि बहूनि भक्ष्याणि च तस्मै ददुः। अनास्वादितपूर्वाणि तानि भक्षयित्वा नित्यारण्यनिवासी स मुनिः फलानीत्यमन्यत। तदा तं विप्रमापृच्छ्य तस्य पितुर्भीतास्ताः स्त्रिय इतः परमस्माभिर्न स्थातव्यं व्रतानुष्ठानभङ्गो भवेदिति व्याहृत्य निर्जग्मुः। गतासु तासु ऋष्यशृङ्गो व्याकुलहृदयो दुःखेन परिबभ्राम। अपरेद्युः स मुनिपुत्रस्तं देशमाजगाम यत्र मनोज्ञाः स्वलङ्कृता वारमुख्या दृष्टाः। आयान्तं तं विप्रं दृष्ट्वैव हृष्टमानसास्तास्तमुपसृत्येदमूचुः। सौम्य! अस्माकमाश्रमपदमायाहि। तत्र ते विशेषेणातिथिसत्कारो भविष्यति। सर्वासां तासां मनोहरं वचनं श्रुत्वा स गमनाय निश्चिकाय। तं ताः स्त्रियो निन्युः। तस्मिन् महात्मनि विप्रे तत्रानीयमाने सहसा देवः पर्जन्यो जगत् प्रह्लादयन् ववर्ष। वर्षेणैव मुनिः स्वविषयमागत इति ज्ञात्वा राजा प्रत्युद्गम्य प्रह्वः साष्टाङ्गनमस्कारं चकार। एकाग्रचित्तो भूत्वा तस्मै विधिवदर्घ्यं दत्वा मा मन्युर्भूदिति प्रसादं वव्रे। अन्तःपुरं प्रविश्य शान्तचित्तः स राजा कन्यां शान्तां यथाविधि तस्मै दत्वा जहर्ष। इत्थं सर्वैः कामैः सुपूजितो महातेजा ऋष्यशृङ्गो भार्यया शान्तया सह तत्रोवास।

१०

राजेन्द्र! यथा देवप्रवरः सनत्कुमारः पूर्वमुक्तवान् तथा हितं मे वचनं

---

* स्त्रीस्वरूपापरिज्ञानात् पुंलिङ्गनिर्देश इति गोविन्दराजः।

पुनश्च शृणु। श्रीमान् सत्यप्रतिज्ञः सुधार्मिको दशरथो नाम राजा इक्ष्वाकूणां कुले जनिष्यते। तस्य राज्ञः अङ्गराजेन स्नेहो भविष्यति। तस्याङ्गराजस्य शान्ता नाम कन्या भविष्यति। अङ्गराजस्य पुत्रो विख्यातो रोमपादो भविष्यति। राजा दशरथस्तस्य समीपं यास्यति। धर्मात्मन्! अहमनपत्योऽस्मि। मम कुलविवृध्द्यर्थं त्वयाज्ञप्तः शान्ताभर्ता मम क्रतुं निर्वहेत्। इति तमभ्यर्थयिष्यते। रोमपादः सम्यग् विचिन्त्य पुत्रवन्तं शान्ताभर्तारं प्रदास्यति। तमृष्यशृङ्गं प्रतिगृह्य निश्चिन्तो राजा दशरथो यज्ञं करिष्यति। कृताञ्जलिः स यष्टुकामस्तं यज्ञार्थं सन्तानार्थं स्वर्गार्थं च वरयिष्यति। तस्माद् विप्रमुख्यात् तं कामं दशरथः प्राप्स्यति। तस्य राज्ञः अमितविक्रमा वंशप्रतिष्ठाकराः सर्वलोकेषु विश्रुताश्च चत्वारः पुत्रा भविष्यन्ति। एवं पुरा सत्ययुगे भगवान् सनत्कुमारः कथितवान्। ततस्त्वं ससैन्यवाहनः स्वयं गत्वा सत्कारपूर्वकं तमानय। सुमन्त्रस्य वाक्यं श्रुत्वा राजा वसिष्ठस्यानुमतिमधिगम्य पत्नीभिरमात्यैश्च सह यत्र स द्विज आसीत् तत्र जगाम। वनानि सरितश्च शनैः शनैर्व्यतिक्रम्य तं देशं प्रविवेश। तत्र रोमपादसमीपे अग्निवद् दीप्यमानं तं ददर्श। तदा प्रहृष्टमना रोमपादो यथाविधि सखित्वाद् विशेषेण च दशरथं पूजयामास। तेन च मुनिपुत्राय स्वस्य दशरथेन सह सख्यं कथितम्। तत ऋष्यशृङ्गश्च दशरथं पूजयामास। एवं सुसत्कृतो दशरथः सप्ताष्टदिनानि तेन सहोषित्वा रोमपादमिदमुवाच। राजन्! तव पुत्री शान्ता भर्त्रा सह मदीयं नगरमायातु। तत्र महत् कार्यमुपस्थितम्। राजा जामातुर्गमनमङ्गीकृत्य भार्यया सह तं गन्तुमुवाच। ऋषिपुत्रश्चाकर्ण्य तथेति दशरथमुक्त्वा श्वशुरेणाभ्यनुज्ञातो भार्यया सह प्रययौ। दशरथरोमपादौ गौरवादन्योन्यमञ्जलिं कृत्वा स्नेहाद् वक्षसा संश्लिष्य ननन्दतुः। ततः सुहृदमापृच्छ्य दशरथः प्रस्थितः। सर्वं नगरं क्षिप्रमेव स्वलङ्क्रियतामिति शीघ्रगामिनो दूतान्

पौरेभ्यः प्रेषयामास। ततः पुरनिवासिनो मुदिता राजप्रेषणमनुसृत्य पुरमलंचक्रुः। राजा शङ्खदुन्दुभिनिर्घोषैः सह विप्रवरं पुरस्कृत्य स्वलङ्कृतं नगरं प्रविवेश। सर्वे पौरा इन्द्रतुल्यपराक्रमेण दशरथेन सत्कृत्य प्रवेश्यमानं द्विजं दृष्ट्वा प्रमुमुदिरे। ऋष्यशृङ्गमन्तःपुरं प्रवेश्य शास्त्रतः पूजयित्वा तस्यानयनेन दशरथ आत्मानं कृतकृत्यं मेने। सर्वाश्चान्तः–पुरस्त्रियो भर्त्रा सहागतां शान्तां दृष्ट्वा ननन्दुः। राज्ञीभी राज्ञा च पूज्यमाना शान्ता विप्रेण भर्त्रा सह किञ्चित्कालं तत्रोवास।

११

ततो बहुकालानन्तरं सुमनोहरे वसन्ते समनुप्राप्ते यष्टुं राजा ऐहत । तदा देवोपमवर्चसं तं विप्रं प्रणम्य कुलपरम्परार्थं पुत्रार्थं यज्ञं कारयितुं तं वव्रे । स तस्य प्रार्थनां स्वीकृत्य यज्ञसामग्री एकत्र क्रियतां यज्ञीयस्तुरगश्च विमुच्यतामिति प्राह । ततो राजा क्षिप्रं वेदविद ऋत्विज आवाहयेति मन्त्रिसत्तमं सुमन्त्रमुवाच । सुमन्त्रस्त्वरितं गत्वा सुयज्ञं वामदेवं जाबालिं काश्यपं पुरोहितं वसिष्ठं द्विजसत्तमानन्यांश्च वेदपारगान् समानिनाय । धर्मात्मा राजा दशरथस्तान् पूजयित्वा मधुरया वाचा धर्मार्थसहितमुवाच। पुत्रार्थं भृशं विलपतो मम सुखं नास्ति। पुत्रार्थमश्वमेधयागं करिष्यामीति ममाभिप्रायो जातः। तस्मादहं शास्त्रविहितेन मार्गेण यष्टुमिच्छामि । अस्य ऋषिपुत्रस्य प्रभावेण कामान् प्राप्स्यामि । तदा राजोक्तं तद् वाक्यं वसिष्ठप्रमुखा ब्राह्मणाः प्रशशंसुः। ऋष्यशृङ्गं पुरस्कृत्य ते राजानमूचुः । यज्ञसामग्री एकत्र क्रियतां तुरगश्च विमुच्यताम्। यतस्ते पुत्रार्थमियं धार्मिकी बुद्धिरागता ततोऽवश्यं त्वं चतुरः पुत्रानमितविक्रमान् प्राप्स्यसि। तद् द्विजभाषितं श्रुत्वा राजा प्रीतो बभूव। हर्षेणामात्यानिदं मङ्गलकरं वचनं प्राह। गुरूणां वचनान्मे यज्ञसंभाराः संभ्रियन्ताम्। शक्तिशालिनां वीराणां रक्षणेनोपाध्यायेन सह हयो विमुच्यताम्। सरयूनद्या उत्तरे तीरे

यज्ञभूमिर्निर्मीयताम्। कल्पोक्तप्रकारेण यथाविधि शान्तिकर्माणि प्रवर्तन्ताम्। यद्यस्मिन् महायज्ञे कष्टप्रदोऽपराधो न स्यात् तर्हि सर्वेण राज्ञायं कर्तुं शक्यते। विद्वांसो ब्रह्मराक्षसा यज्ञे छिद्रं मृगयन्ते। विधिहीनयज्ञकर्ता सद्यो विनश्यति। तस्माद् यथा मम क्रतुर्यथाविधिसमाप्यते तथा विधीयताम्। एवं कर्तुं सर्वे भवन्तः समर्थाः सन्ति। तदा मन्त्रिणस्तथेत्युक्त्वा राजानं पूजयित्वा यथाज्ञप्तं चक्रुः। ततस्ते द्विजा धर्मज्ञं राजानमस्तुवन्। तेनानुज्ञातास्ते प्रतिनिवृत्ताः। ब्राह्मणगमनानन्तरं मन्त्रिणो विसृज्य नृपः स्वं वेश्म प्रविवेश।

१२

पुनश्च वसन्ते प्राप्ते संवत्सरः पूर्णोऽभवत्। तदा दशरथो वसिष्ठमभिवाद्य यथाशास्त्रं संपूज्य मम सन्तानार्थं यज्ञो यथोक्तं क्रियतामिति प्रश्रितमुवाच। यथा यज्ञाङ्गेषु विघ्नो न क्रियते तथा विधीयताम् । भवान् मम मित्रं हितैषी परमो गुरुश्च। प्रारब्धस्य यज्ञस्य भारो भवतैव वोढव्यः। यद् भवता प्रार्थितं सर्वं तत् करिष्ये इति वसिष्ठो राजानमब्रवीत् । ततो वसिष्ठो यज्ञकर्मसु निष्ठितान् वृद्धान् ब्राह्मणान् वास्तुनिपुणान् परमधार्मिकान् वृद्धान् कार्यनिर्वाहकान् शिल्पकरान् वर्धकीन् खनकान् ज्यौतिषिकान् नटान् नर्तकान् विशुद्धान् शास्त्रविदः पण्डितांश्चैवमुवाच। राजशासनाद् यज्ञकर्म भवन्तः कुर्वताम्। बहुसहस्रसंख्याका इष्टकाः शीघ्रमानयन्तु। राज्ञां कृते उत्तमा औपकार्याः क्रियन्ताम्। ब्राह्मणानां कृते शतशः शोभनानि गृहाणि च कर्तव्यानि। तथैव पौरजनस्य च बहुभक्ष्यान्नपानैर्युतानि सुनिष्ठितानि गृहाणि कार्याणि। जानपदानां कृते च सर्ववस्तुयुता बहुभक्ष्यसमन्विताश्चावासाः कार्याः। विधिवत् सत्कृत्यान्नं देयम्। अनादरेण न देयम् । सर्वेषां वर्णानां सत्कारः कार्यः। कामक्रोधवशादवज्ञा

न प्रयोक्तव्या। यज्ञकर्मसु ये अधिकृताः सेवकाः शिल्पिनश्च निमग्ना+ भवन्ति तेषामपि यथोचितं पूजा कार्या। यथा सर्वं सुविहितं भवति न किञ्चिच्च परिहीयते तथा प्रीतिस्निग्धेन चेतसा भवन्तः कुर्वन्तु। ततः सर्वे समागम्य यथा भवतोक्तं तथा करिष्यामः। न किञ्चित् परिहास्यते इत्यब्रुवन् । ततो वसिष्ठः सुमन्त्रमाहूयेदमब्रवीत्। धार्मिकान् सर्वान् नृपतीन् यज्ञे निमन्त्रयस्व। सहस्रशः अस्मद्राष्ट्रस्थितान् ब्राह्मणान् क्षत्रियान् वैश्यान् शूद्रांश्च निमन्त्रयस्व। सर्वदेशानां मान्यान् जनानाह्वयस्व । सत्यविक्रमं सर्वशास्त्रेषु वेदेषु च निष्ठितं मिथिलाधिपतिं जनकं स्वयमेव सुसत्कृत्यानय। सः अस्माकं पूर्वसंबन्धी। ततः प्रथममेव ते ब्रवीमि। तथा सुहृदं प्रियवादिनं सद्वृत्तं देवतुल्यं काशिपतिं च स्वयमेवानयस्व। परमधार्मिकं महाराजस्य दशरथस्य श्वशुरं वृद्धं केकयराजं च सपुत्रमाह्वयस्व। महाभागमङ्गेश्वरं रोमपादं महाराजस्य दशरथस्य वयस्यं चानय। प्राचीनदेशानां सिन्धुसौवीरसौराष्ट्रदेशानां दाक्षिणात्यदेशानां च पार्थिवानाह्वयस्व। ये ये राजानोऽस्मन्नृपस्य सुहृदस्तान् सानुचरबान्धवान् यावत् शक्यं तावत् क्षिप्रमानय। वसिष्ठस्य तद् वाक्यं श्रुत्वा सुमन्त्रस्त्वरया राज्ञामानयनाय सत्पुरुषानादिदेश । वसिष्ठस्यादेशेन स्वयमेव सुमन्त्रो मुख्यान् नृपानाह्वातुं ययौ। कर्मकराश्च यज्ञसंबन्धि यद्यत्कर्म कृतं तत्तत् सर्वं यथासमयं वसिष्ठाय निवेदयन्ति स्म । तेन प्रीतो वसिष्ठः पुनस्तानुवाच। अवज्ञया अश्रद्धया कस्यापि न दातव्यम्। अवज्ञया दत्तं दातारं निस्संशयं हन्ति इति। अनन्तरं केषुचिद्दिनेषु दशरथाय बहूनि रत्नान्यादाय राजान आजग्मुः। तदा सुप्रीतो वसिष्ठो राजानमब्रवीत्। तव शासनाद् राजान उपागता मया यथार्हं सत्कृताश्च। यज्ञसंबन्धि कार्यमस्मत्पुरुषैः कृतं च। भवान् यष्टुं

---

+ cr यज्ञकर्मसु येऽव्यग्राः। यज्ञकर्मसु ये व्यग्राः इति पाठ्यः।

समीपस्थितं सर्वकामैरुपहृतैरुपेतं यज्ञायतनं गच्छतु। तदा वसिष्ठर्ष्यशृङ्गयोर्वचनाद् राजा शुभनक्षत्रयुतशुभदिने निर्ययौ। ततो वसिष्ठप्रमुखा विप्रमुख्या ऋष्यशृङ्गं पुरस्कृत्य यज्ञकर्मारभन्त।

१-३

संवत्सरे पूर्णे यज्ञीयोऽश्वः प्रत्यावृत्तः। तदा राज्ञो यज्ञः प्रारब्धः। महाराजस्याश्वमेधे महायज्ञे ऋष्यशृङ्गं पुरस्कृत्य श्रेष्ठा द्विजाः कर्म चक्रुः। वेदपारगा ऋत्विजो यथाविधि क्रममनुसृत्य कर्म चक्रुः। द्विजा अश्वमेधाङ्गभूतं प्रवर्ग्यमुपसदं तदधिकं च कर्म यथाशास्त्रं चक्रुः। तत्पश्चात्तत्तत्कर्माङ्गभूतदेवतापूजां कृत्वा मुनिपुङ्गवा यथाविधि प्रातःसवनमध्यन्दिनसवनतृतीयसवनकर्माणि चक्रुः । तत्र दोषयुतहोमः स्खलितं वा किमपि नाभवत्। सर्वं मन्त्रयुतं क्षेमयुक्तं चादृश्यत। तेषु यज्ञदिनेषु श्रान्तः क्षुधितो वा तत्र न बभूव । विद्याहीनः शतशिष्यरहितो वा ब्राह्मणस्तत्र नासीत्। नित्यं तत्र ब्राह्मणक्षत्रियवैश्यशूद्रा मुनयः संन्यासिनश्च भुञ्जते स्म। वृद्धा रुग्णाः स्त्रियो बालाश्च तत्र भुञ्जते स्म। अन्नस्य मधुरत्वाद् निरन्तरं भुञ्जानानामपि तृप्तिर्नाजायत। परिवेषकाणामपि दशरथस्य च तृप्तिर्नाभवत्। राजाधिकारिभिरन्नं दीयतां विविधानि वासांसि च दीयन्तामिति पुनः पुनः प्रचोदिताः कार्यकर्तारस्तथैव चक्रुः। तत्र प्रतिदिनं विधिवत् सिद्धस्यान्नस्य विविधभोजनपदार्थानां च पर्वतोपमा राशयो दृश्यन्ते स्म। यथाविधि पक्वं स्वाद्वन्नं ब्राह्मणाः प्रशंसन्ति स्म। अहो वयं तृप्ता इति तेषां वचनानि राघवः शुश्राव। सुष्ठु अलङ्कृताः पुरुषा ब्राह्मणान् पर्यवेषयन् । विशुद्धमणिकुण्डलधारिणः अन्ये पुरुषास्तेषां परिवेषकाणां सहायतां चक्रुः। कर्मणां मध्यकाले सुवक्तारः स्थिरबुद्धयो विप्राः परस्परजिगीषया बहून् शास्त्रवादानकुर्वन्। यज्ञकुशला ब्राह्मणा वसिष्ठादिभिः प्रेरिताः प्रतिदिनं सर्वकर्माणि चक्रुः। तत्र कोऽपि सदस्यो व्याकरणादिषडङ्गानामज्ञाता नासीत्। अव्रतः अबहुश्रुतश्च नासीत्। अवादकुशलो वा ब्राह्मणो नासीत् । यूपस्थापनसमये

षड् बिल्वदारुयूपाः तत्समीपे षट् खदिरदारुयूपाः षट् पलाशदण्डयूपाश्च स्थापिताः। श्लेष्मातकयूपश्चाश्वमेधयज्ञे निर्दिष्टः। तथैव द्वौ देवदारुयूपौ परस्परं व्यामदूरे स्थापितौ। एते सर्वे च यज्ञकोविदैः शास्त्रज्ञैर्निर्मिताः। यज्ञशोभार्थं ते यूपाः काञ्चनेनालङ्कृता अभवन्। सर्वे ते यूपस्तम्भा विधिवत् शिल्पिभिः सुकृता दृढाश्चासन्। अष्टकोणाकारास्ते यूपाः स्पर्शे मसृणा आसन्। ते वस्त्रैराच्छादिताः पुष्पैर्गन्धैश्च भूषिता गगने दीप्तिमन्तः सप्तर्षय इव व्यराजन्त। शास्त्रोक्तप्रमाणेनेष्टकाः कारिताः। शुल्बकर्मकुशलैर्ब्राह्मणैरग्निवेदी स्वर्णपक्षगरुडाकारेण निर्मिता। शुक्लयजुर्वेदशाखीयानामन्ययज्ञसमये षट्प्रस्तारा होमवेदी* भवति स्म। परन्तु दशरथस्यास्मिन्नश्वमेधयज्ञे ततस्त्रिगुणा अर्थात् अष्टादशप्रस्तारा वेदी बभूव। तेषु यूपेषु शास्त्रानुसारेण पशव उरगाः पक्षिणश्च तत्तद्देवता उद्दिश्य बद्धाः। पशुविशसने प्राप्ते अश्वो जलचराश्च ऋत्विग्भिर्निबद्धाः**। एवं पशूनां त्रिशतं दशरथस्याश्वमेधीयो हयश्च यूपेषु बद्धाः। तदा कौसल्या शास्त्रोक्तप्रकारेण प्रदक्षिणमप्रदक्षिणं च तं हयं परिक्रम्य परमेण मोदेन त्रिभिः कृपाणैस्तं3* विशशास । तत्पश्चात् सुस्थिरचित्ता सा तदश्वेन सह धर्माचरणश्रद्धया रात्रिमेकामवसत्4*। होता अध्वर्युरुद्गाता च महिष्या परिवृत्त्या वावातया5* च हयस्य स्पर्शमकारयन्। ऋत्विगश्वस्य

---

* कृष्णयजुर्वेदीयानामन्ययज्ञे पञ्चप्रस्तारा वेदी अश्वमेधयज्ञे पञ्चदशप्रस्तारा च। ततोऽनुमीयते दशरथः शुक्लयजुर्वेदीय इति।(गोविन्दराजः)

** यज्ञे अरण्यमृगा ग्राम्यमृगाश्च बध्यन्ते। अरण्यमृगा अग्निप्रदक्षिणानन्तरं मुच्यन्ते। अन्ये विशस्यन्ते।

3* स्वर्णसूचिभिः। सुमित्रा कैकेयी च इति गोविन्दराजः।

4* द्रष्टव्या गोविन्दराजस्य व्याख्या।

5* दशरथस्य क्षत्रियजातीया भार्या महिषी। वैश्यजातीया वावाता। शूद्रजातीया परिवृत्तिः इति गीताप्रेस्। राजपत्नीषु अभिषिक्ता महिषी। पुराप्रिया सम्प्रत्युपेक्षिता परिवृत्तिः। अधुना प्रिया वावाता। एतास्तिस्रः पालाकल्या (अनुक्तया पात्रप्रदया) सह ब्रह्मणा (अनुक्तेन) सह चतुर्भ्य ऋत्विग्भ्यो देयाः किल। ते ता हस्ते गृहीत्वा (हयेन इति पाठस्य स्थाने हस्तेन इति अन्यप्रकाशनेषु पाठः) द्रव्यविनिमयेन पुना राज्ञे ददति किल । इति गोविन्दराजः।

वपामुद्धृत्य शास्त्रानुसारेण श्रपयामास। पश्चात् पक्वा वपा आहुतिः कृता। दशरथो यथासमयमात्मनः पापापनोदाय तं धूमगन्धमाजिघ्रत्। हयस्य सर्वाण्यङ्गानि षोडश ऋत्विजो ब्राह्मणा अग्नावाजुहुवुः। अन्ययज्ञानां हविः प्लक्षशाखासु स्थाप्यते। अश्वमेधीयो हविर्वेतसशाखायां स्थापयित्वा संस्क्रियते। अश्वमेधयागः कल्पसूत्रप्रकारेण त्रिषु दिनेषु कार्य इति ब्राह्मणैः कथितम्। प्रथमाहस्य सवनं चतुष्टोमं द्वितीयाहस्य उक्थं तृतीयदिवसस्यातिरात्रं च कथितम्। शास्त्रानुसारेणाश्वमेधयागान्तर्गता बहवः क्रतव ऋत्विग्भिः कारिताः। ज्योतिष्टोमः आयुर्यागः द्वौ अतिरात्रयागौ अभिजिद्यागः विश्वजिद्यागः अप्तोर्यामाख्यो महाक्रतुश्च कृताः। यज्ञे पूर्णे दक्षिणारूपेण राजा होत्रे प्राचीं दिशमध्वर्यवे प्रतीचीं ब्रह्मणे दक्षिणामुद्गात्रे चोत्तरां ददौ। पुरा ब्रह्मणा विहिते अश्वमेधमहायज्ञे एषैव दक्षिणा निर्दिष्टा। क्रतुं समाप्य दशरथ इत्थं सर्वां भुवमृत्विग्भ्यो ददौ। तदा सर्वे ऋत्विजो पवित्रीकृतं दशरथमिदमूचुः। भवानेक एव कृत्स्नां धरां रक्षितुमर्हति। भूम्या अस्माकं कार्यं नास्ति न च पालने वयं शक्ताः। वयं स्वाध्यायकरणे नित्यं रताः। तस्मादस्या भूम्याः स्थाने किमपि धनं भवान् प्रयच्छतु। तदा नृपो गवां शतसहस्राणि दश, सुवर्णस्य दशकोटीः ततश्चतुर्गुणं रजतस्य च तेभ्यो ददौ। तदा सर्वे ऋत्विजो वसु ऋष्यशृङ्गाय वसिष्ठाय च ददुः। पश्चान्न्यायतः प्रविभागं कृत्वा ते ब्राह्मणाः प्रीता भूत्वा वयं भृशं मुदिताः स्म इति प्रत्यूचुः। पापापहं स्वर्नयनं श्रेष्ठमन्यपार्थिवदुष्प्रापं च तं यज्ञं पूर्णं कृत्वा दशरथः प्रीतमना बभूव। ततो दशरथ ऋष्यशृङ्गं प्राह । सुव्रत! मम वंशस्य वर्धनं त्वं कर्तुमर्हसि। स विप्रोत्तमो दशरथवचनमङ्गीकृत्य चत्वारः कुलोद्वहाः पुत्रास्तव भविष्यन्तीति उवाच।

१४

मेधावी वेदज्ञ ऋष्यशृङ्गः पश्चात् किं कर्म करणीयमिति किञ्चिद्ध्यात्वा तत् कर्म स्मृत्वा राजानमब्रवीत्। तव पुत्रप्राप्त्यर्थमथर्ववेदमन्त्रैः

सिद्धां पुत्रोत्पादनसमर्थामिष्टिं शास्त्रानुसारेण करिष्यामीति। पश्चाद् ब्रह्मतेजस्वी स ऋष्यशृङ्गः पुत्रोत्पादिकामिष्टिं प्रारभ्य मन्त्रोक्तेन कर्मणा अग्नौ जुहाव। देवता गन्धर्वाः सिद्धाः परमर्षयश्च शास्त्रोक्तप्रकारेण भागान् ग्रहीतुं तत्र समीयुः। ता देवतास्तस्मिन् यज्ञसदसि (मानवानामदृश्याः) समेत्य लोकस्रष्टारं ब्रह्माणमब्रुवन्। भगवन्! त्वत्प्रसादेन रावणो नाम राक्षसः स्ववीर्यान्नो बाधते । तं शासितुं न शक्नुमः। प्रीतेन त्वया तस्मै वरो दत्तः। तं वरं मानयन्तस्तस्य दुष्टत्वं नित्यं क्षमामहे। स दुर्मतिस्त्रीन् लोकानुद्वेजयति। लोकपालान् द्वेष्टि। देवराजमिन्द्रमवमन्तुमिच्छति। वरदानेन मूढः स ऋषीन् यक्षान् गन्धर्वान् ब्राह्मणानसुरांश्चावमन्यते। सूर्यस्तं न तपति। वायुस्तस्य पार्श्वे न वाति। चलत्तरङ्गपङ्क्तिः समुद्रश्च तं दृष्ट्वा न कम्पते। घोरदर्शनात् तस्माद्राक्षसादस्माकं महद् भयमस्ति। कृपया तस्य वधार्थमुपायं कुरु। सर्वैः सुरैरेवमुक्तश्चिन्तयित्वा ब्रह्माब्रवीत्। हन्त तस्य दुरात्मनो वधोपाय एवं विहितः। देवगन्धर्वयक्षराक्षसानामवध्यो–ऽस्मीति तेनोक्तं मया च तथास्तु इत्युक्तम्। अनादरेण मनुष्यान् तदा स नाकीर्तयत्। तस्मात् स मानुषाद् वध्यो नान्येन। ब्रह्मणः प्रियं वाक्यं श्रुत्वा सर्वे देवा महर्षयश्च प्राहृष्यन्। तदन्तरे तत्र विष्णुरागतश्च ब्रह्मणा सह तत्र तस्थौ। तं नत्वा स्तुत्वा च ते ऊचुः। विष्णो! लोकानां हितकामनया त्वां नियोक्ष्यामहे। धर्मज्ञस्य वदान्यस्य महर्षिसमतेजसः अयोध्याधिपतेर्दशरथस्य ह्रीश्रीकीर्तिसमासु तिसृषु भार्यासु आत्मानं चतुर्विधं कृत्वा पुत्रत्वं प्राप्नुहि। तथा त्वं मानुषो भूत्वा प्रवृद्धं लोककण्टकं देवैरवध्यं रावणं जहि। वीर्योत्सेकेन स मूर्खो राक्षसो रावणो देवगन्धर्वसिद्धान् ऋषींश्च बाधते। तमुद्दण्डमुग्रतेजसं महादर्पं शक्रद्वेषिणं लोकरोदनकारकं साधुतपस्विकण्टकं तपस्विभयावहमुन्मूलय।

१५

नारायणः सुरसत्तमै रावणवधार्थं नियुक्तस्तद्वधोपायं जानन्नपि तानेवं मधुरेण वचनेन पप्रच्छ। हे सुराः! रावणवधे कोऽसावुपायो येन

ऋषिकण्टकं तमहं हन्याम् । तदा सुरा विष्णुं प्रत्यूचुः। मानुषीं तनुं धृत्वा तं जहि। स निशाचरो दीर्घकालं तीव्रं तपस्तताप। तेन लोककृद् ब्रह्मा तुतोष। संतुष्टो ब्रह्मा मानुषादन्यत्र नानाविधेभ्यो भूतेभ्योऽभयं वरं तस्मै ददौ। अनेन वरप्रतिग्रहेण तेन मानवा दुर्बला इत्यवज्ञाताः। तस्मात् तस्य वधो मानुषेभ्यो दृष्टः। सुराणामेतद् वचनं श्रुत्वा जीवात्मनां प्रभुर्विष्णुः पितरं दशरथं नृपं रोचयामास। स दशरथस्तस्मिन् काले अपुत्रः सन् पुत्रेप्सुः पुत्रीयामिष्टिमयजत । ततो यजमानस्य दशरथस्य पावकादतुलप्रभं महावीर्यं महाबलं महद् भूतं प्रादुर्भूतम्। कृष्णवर्णं रक्तवस्त्रधरं रक्तास्यं दुन्दुभिस्वनं सिंहरोमवन्मृदुश्मश्रुकेशपाशं शुभलक्षणसंपन्नं दिव्याभरणभूषितं शैलशृङ्गोन्नतं दृप्तशार्दूलविक्रमं सूर्यसमाकारं दीप्तानलशिखोपमं च तद् भूतमभवत्। तद् भूतं रजतपिधानां दिव्यपायससंपूर्णां मायानिर्मितामिव दृश्यमानां विपुलां स्वर्णपात्रीं प्रियां पत्नीमिव दोर्भ्यां प्रगृह्य प्रादुरभवद् दशरथमभिवीक्ष्योवाच। नृप! मां प्रजापतिलोकादागतं पुरुषं जानीहि । दशरथः कृताञ्जलिः प्रत्युवाच। भगवन्! ते स्वागतमस्तु। उच्यतां किमहं ते करवाणि। प्राजापत्यः पुरुषः पुनरिदं बभाषे। राजन्! देवानर्चयता त्वयाद्येदं प्राप्तम्। नरश्रेष्ठ! देवनिर्मितमिदं पायसं सन्तानकरं धनारोग्यवर्धनं च गृहाण। यूयमिदं पायसमश्नीतेति अनुरूपाणां भार्याणां प्रयच्छ। येषां कृते त्वं यजसे तान् पुत्रान् तासु त्वं प्राप्स्यसि। प्रीतो नतशिरा दशरथस्तां देवान्नसंपूर्णां देवदत्तां स्वर्णपात्रीं प्रतिगृह्याद्भुतं प्रियदर्शनं तद् भूतमभिवाद्य परमेण मोदेन तस्य प्रदक्षिणं चक्रे। देवनिर्मितं पायसं प्राप्य दशरथो वित्तं प्राप्याधन इव परमप्रीतो बभूव। तत्पश्चात् तदद्भुताकारं परमतेजस्वद् भूतं तत् कर्म परिसमाप्य तत्रैवान्तर्दधे। दशरथस्य पत्न्यः अभिरामशारदचन्द्रकिरणैर्नभ इव हर्षोल्लासेन प्राकाशन्त। दशरथः अन्तःपुरं प्रविश्यात्मनः पुत्रोत्पत्तिकारणं पायसं प्रतिगृहाणेति

कौसल्यामब्रवीत्। पायसस्यार्ध भागं* राजा कौसल्यायै ददौ। शिष्टार्धादर्धभागं (चतुर्थभागं) सुमित्रायै ददौ। शेषचतुर्थभागादर्धं (अष्टमभागं) कैकेय्यै प्रायच्छत्। शिष्टमष्टमभागं पुनश्च विचिन्त्य राजा सुमित्रायै ददौ। एवं राजा भार्याणां पायसं विभज्य ददौ। ताः पत्न्यः पायसं प्राप्य प्रहर्ष-पूर्णमानसा आत्मनः सम्मानं मेनिरे।

१६

यदा विष्णुर्दशरथस्य पुत्रत्वं प्राप्तुं निर्णिनाय तदा ब्रह्मा देवता इदमूचे। सत्यसंधस्य पराक्रमशालिनः सर्वेषां नो हितैषिणो विष्णोः सहायकरान् बलिनः कामरूपिणो मायाविदः शूरान् जवे वायुवेगसमान् नयविदो बुद्धिसपन्नान् विष्णुतुल्यपराक्रमान् सर्वास्त्रगुणसंपन्नान् अमृताशनतुल्यान् हन्तुमशक्यान् उपायज्ञान् दिव्यशरीरान् सृजत । प्रधानाप्सरस्सु गन्धर्व-स्त्रीषु यक्षपन्नगऋक्षविद्याधरकन्यासु किन्नरीषु वानरीषु च वानररूपान् पुत्रांस्तुल्यपराक्रमान् सृजत । भगवता एवमुक्ता देवतास्तस्याज्ञां स्वीकृत्य वानररूपिणः पुत्रान् जनयामासुः। महात्मान ऋषयः सिद्धा विद्याधरा उरगाश्चारणाश्च वनचारिणो वीरान् सुतान् ससृजुः। तथा सृष्टास्ते वीराः कामरूपिणो विक्रान्ता अप्रमेयबला बहुसाहस्रा दशग्रीववधोद्यता आसन्। गजपर्वतसंकाशा महाकाया महाबला ऋक्षवानरगोलाङ्गूलजातीयाः शीघ्रमुत्पन्नाः। यस्य देवस्य य आकारो वेषः पराक्रमश्च तस्य सुतः पृथक् तेन समः अजायत। श्लाघ्यविक्रमास्ते वानरा गोलाङ्गूलीषु ऋक्षीषु

* न तावता रामो विष्णोरर्धभागो लक्ष्मणश्चतुर्थभागो भरतशत्रुघ्नौ अष्टमभागाविति व्याख्येयम्। परमात्मा अव्ययः। तस्य विभागो लौकिकः। पूर्णादर्धग्रहणानन्तरं शिष्टं पुनः पूर्णमेव भवति पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते इति ईशावास्योपनिषद्वचनात्।

किन्नरीषु चोत्पन्नाः। ते युद्धे शिलाः पादपान् स्वनखदंष्ट्राश्चायुधत्वेनोपयुञ्जते स्म । सर्वे ते सर्वास्त्रकोविदा आसन्। ते वेगेन महापर्वतान् विचालयेयुः स्थिरान् वृक्षान् भेदयेयुः सरित्पतिं समुद्रं च क्षोभयेयुः। पद्भ्यां क्षितिं दारयेयुः समुद्रं लङ्घयेयुर्नभस्तलं प्रविशेयुर्मेघांश्च गृह्णीयुः। वने प्रचलतो मत्तमातङ्गान् गृह्णीयुर्घोरशब्दं कुर्वाणान् विहङ्गमानपि आक्रोशमात्रेण पातयेयुः। एवंविधानि कामरूपिणामधिकधैर्यवतां सेनानायकानां बहुशत-सहस्राणि प्रसूतान्यभवन्। ते प्रधानेषु मुख्या भूत्वा वीरान् हरीनजनयन्। तेषां केचन ऋक्षवत्पर्वतप्रस्थानध्यूषुः। अन्ये नानापर्वतान् काननानि च भेजिरे। सर्वे ते सूर्यपुत्रं सुग्रीवमिन्द्रपुत्रं वालिनं चासेवन्त। तौ वालिसुग्रीवौ भ्रातरौ बभूवतुः। मेघसमूहैः पर्वतशिखरैश्च समानैर्महाबलैस्तैर्भयं-करशरीराकारैर्वानरसेनानायकै रामसहायार्थं भूमिः समावृता बभूव।

१७

महात्मनो दशरथस्याश्वमेधक्रतौ निर्वृत्ते स्वस्वभागान् प्रतिगृह्य सुराः स्वस्थानानि न्यवर्तन्त। दीक्षानियमं परिसमाप्य पत्नीभिः सह सभृत्य-सैन्यवाहनो दशरथः पुरीं प्रविवेश। राज्ञा यथार्हं पूजिताः पृथिवीश्वरा मुदिता मुनिपुङ्गवं वसिष्ठं प्रणम्य स्वदेशान् प्रययुः। तेषु पृथिवीशेषु गतेषु दशरथो ब्राह्मणश्रेष्ठान् पुरस्कृत्य पुनश्च पुरीं प्रविवेश। सुपूजित ऋष्यशृङ्गः शान्तया सह सपरिवारेण दशरथेनानुगम्यमानः प्रययौ। दिव्यलक्षणसंयुतमिक्ष्वाकुवंशानन्दकरं विष्णोरर्धं महाभागं पुत्रं कौसल्या जनयामास। तेनामिततेजसा पुत्रेण कौसल्या तथा शुशुभे यथा देवानां प्रवरेणेन्द्रेणादितिः। सत्यपराक्रमः सर्वैर्गुणैः संपन्नः अवतारं प्राप्तस्य विष्णोः (रामस्य) चतुर्थभागो भरतो नाम पुत्रः कैकेय्यां जातः। अथ

विष्णोरंशौ वीरौ सर्वास्त्रकुशलौ लक्ष्मणशत्रुघ्नौ* सुतौ सुमित्रा जनयामास। एवं राज्ञश्चत्वारः अनुरूपा गुणवन्तो महात्मानः कान्त्या भाद्रपदानक्षत्रसमुदायोपमाः** पुत्रा जाताः। एकादशाहानन्तरं दशरथः पुत्राणां नामकरणं चकार। ज्येष्ठस्य राम इति कैकेयीपुत्रस्य भरत इति सुमित्रापुत्रयोरेकस्य लक्ष्मण इति अपरस्य शत्रुघ्न इति परमसम्मोदेन वसिष्ठो नामानि चकार। तेषां यथाकालं जातकर्मनाम-करणान्नप्राशनचौलोपनयनादीन् सर्वान् संस्कारान् कृतवान्। चतुर्णां पुत्राणां कुलकीर्तिपताकावद् ज्येष्ठो रामस्तथा पितुः प्रीतिकरोऽभवद् यथा सर्वेषां प्राणिनां ब्रह्मा। सर्वे ते पुत्रा विद्वांसः शूरा लोकक्षेमासक्ता ज्ञानगुणसंपन्नाश्चासन्। चतुर्णां तेषां भ्रातॄणां महातेजाः सत्यपराक्रमो राम उत्कृष्टो बभूव। संपद्वृद्धिकरो लक्ष्मणो बाल्यात् प्रभृति नित्यं ज्येष्ठभ्रातुर्लोकाभिरामस्य रामस्य सुस्नेहवानभवत्। स स्वस्मिन् शरीरेऽपि तथा न प्रीणाति यथा रामसेवायाम् । स लक्ष्मणो रामस्य बहिः प्रवर्तमानो द्वितीयः प्राण इव स्थितः। तं विना रामो निद्रां न लभते उपानीतं श्रेष्ठं भोजनं नाश्नाति। यदा रामो हयारूढो मृगयां याति तदा धनुरादाय

---

* पायसदानक्रमेण (१५-२५,२६) रामलक्ष्मणभरतशत्रुघ्नानां स एव भ्रूणीभावक्रमो भवेत्। प्रसूतिक्रमस्तु (१७,७-९) रामभरतशत्रुघ्नलक्ष्मणाः। (रामायणमु, बालकाण्डमु-1 आन्ध्रग्रन्थः कालूरि व्यासमूर्तिः।) तत्र कारणं लक्ष्मणशत्रुघ्नयोर्यमलत्वम्। यमलयोः कनीयान् प्रथमं जायते इति साम्प्रदायिको विश्वासः। हिरण्यकशिपुहिरण्याक्षयोर्हिरण्याक्षो मातृगर्भात् प्रथमं जातः कनीयांश्च परिगणितः। (दृश्यताम् भागवतम्, गीताप्रेस् ३.१७.१८ हिन्दी व्याख्या)। अतो भ्रूणीभावे रामादेव कनीयान् लक्ष्मणो जन्मक्रमे सर्वेषामन्तिमः नामकरणक्रमः रामभरतलक्ष्मणशत्रुघ्नाः (१७-११,१२)। विवाहक्रमः रामलक्ष्मणभरतशत्रुघ्नाः (७२,१७-२०)। लक्ष्मणो भरतानुजः कथितः (युद्ध ४७, १०६)। भरतो लक्ष्मणमार्यं कथयति (अयो ७६, १७) अत्र गोविन्दराजः कनिष्ठे लक्ष्मणे आर्यशब्दप्रयोगो ज्येष्ठानुवर्तनधर्मनिरतत्वात् इति।

** भाद्रपदानक्षत्रे पूर्वाभाद्रपदा उत्तराभाद्रपदेति नक्षत्रद्वयं वर्तते । तद्द्वये च पृथक् पृथक् नक्षत्रद्वयं भवति। इत्थं भाद्रपदानक्षत्रं चतुस्तारासमुदायः। (गीताप्रेस्)

तं परिपालयन् लक्ष्मणः पृष्ठतोऽनुयाति। तथा शत्रुघ्नो भरतस्य प्राणैः प्रियतरो नित्यमभवत् स च तस्मिन् तथा प्रियोऽभवत्। तैश्चतुर्भिर्महाभागैः प्रियैः पुत्रैर्दशरथस्तथा परमप्रीतो बभूव यथा चतुर्भिर्दिक्पालैः पितामहः। ते यदा ज्ञानगुणसंपन्ना ह्रीकीर्तिमन्तो दीर्घदर्शिनश्चाभवन् तदा दशरथः सोपाध्यायबान्धवस्तेषां विवाहं प्रति चिन्तयामास। मन्त्रिमध्ये तस्मिन् महात्मनि चिन्तयति महामुनिर्विश्वामित्रस्तत्राजगाम । राजदर्शनकाङ्क्षी स मुनिर्मां कौशिकं गाधिसुतं प्राप्तं शीघ्रमाख्यातेति द्वाराधिकारिणः प्राह। तद्वाक्येन प्रचोदितास्ते सर्वे संभ्रान्तमनसो राजवेश्म प्रदुद्रुवुः। गत्वा ते विश्वामित्रं मुनिं प्राप्तं राज्ञे निवेदयामासुः। तत् तेषां वचनं श्रुत्वा संहृष्टः सावधानो दशरथः पुरोहितेन सह ब्रह्माणं वासव इव विश्वामित्रं प्रत्युज्जगाम। कठोरनियमं तं तापसं दीप्त्या ज्वलितं दृष्ट्वा राजा प्रहृष्टमुखस्तस्यार्घ्यमुपाहरत्। तदर्घ्यं शास्त्रोक्तविधानेन स्वीकृत्य मुनिः राजानं कुशलं मङ्गलं च पर्यपृच्छत्। ततो वसिष्ठमन्यांश्च ऋषीन् समागम्य तेषां कुशलं पर्यपृच्छत्। सर्वे ते हृष्टचित्ता राज्ञो निवेशनं विविशुः। राज्ञा यथार्हं पूजिता उपविविशुः। अथ हृष्टचित्तो राजा विश्वामित्रं पूजयन्नुवाच। यथामृतस्य संप्राप्तिर्यथा निर्जलस्थले वर्षं यथा सन्तानहीनस्य स्वेषु अनुरूपदारेषु पुत्रजन्म प्रणष्टस्य निधेर्यथा लाभो यथा च महोत्सवे हर्षस्तथैव तवागमनं मन्ये। महामुने! ते स्वागतम्। इत्थं हर्षितोऽहं कां ते परमां कामनां कुर्याम्? मम समस्तप्रकारसेवां प्राप्तुं त्वं योग्योऽसि। अद्य मम जन्म सफलमस्ति जीवितं च धन्यम्। पूर्वं राजर्षिरिति सूचितप्रभावः पश्चात् तपसा ब्रह्मर्षित्वं त्वं प्राप्तोऽसि। वहुधा मया पूज्योऽसि। हे विप्र! तस्मात् तवागमनमद्भुतं मम परमपवित्रं चास्ति। तव संदर्शनादहं पुण्यक्षेत्रगत इवास्मि। तवागमनकारणं ब्रूहि। अनुगृहीतोऽहं तव कार्याभिवृद्धये

प्रवर्तितुमिच्छामि। कार्यं सेत्स्यति नवेति विमर्शो मा भूत्। अशेषेणाहं कर्तास्मि। त्वं मम दैवतमसि। इति मतिमता दशरथेनोक्तं श्रवणानन्दकरं विनीतं वाक्यं श्रुत्वा महर्षिः परमं हर्षं प्राप।

१८

आश्चर्यकरं विस्तृतं च दशरथस्य तद् वाक्यं श्रुत्वा पुलकितो विश्वामित्रोऽभ्यभाषत। त्वं महावंशप्रसूतः। वसिष्ठस्तवोपदेशकः। एतद् वचनं तवैव युक्तं नान्यस्य। मम मनोगतं यत् कार्यं वक्तव्यमस्ति तत् पूरय। महाराज! सत्यप्रतिज्ञो भव। अहं सिद्ध्यर्थं नियमं करोमि। परन्तु कामरूपिणौ द्वौ राक्षसौ तस्य विघ्नं कुरुतः। मम व्रतस्याधिकांशश्चीर्णः। समाप्तिसमये सुशिक्षितौ वीर्यवन्तौ मारीचः सुबाहुश्च मांसरक्तप्रवाहेण तां वेदीमभ्यवर्षताम्। मम दीक्षासंकल्पो भ्रष्टस्तथा व्यर्थश्च संजातः। श्रमं कृत्वापि निरुत्साहोऽहं तस्माद् देशादपक्रम्यागतः।परन्तु क्रोधमुत्स्रष्टुं मम मतिर्न भवति। मम व्रतचर्या तादृशी। तस्मिन् यागसमये शापो न मोक्तव्यः। राजश्रेष्ठ! शूरं सत्यपराक्रमं ज्येष्ठं स्वपुत्रं काकपक्षधरं रामं मे दातुमर्हसि। मया रक्षित एष रामो दिव्येन स्वेन पराक्रमेण यज्ञविघ्न-कराणां सर्वेषां च रक्षसां विनाशने शक्तोऽस्ति। तस्मै बहुविधं श्रेयश्च प्रदास्यामि। तेन स त्रिषु लोकेषु कीर्तिमवाप्स्यति। अस्मिन् विषये संशयो नास्ति। रामस्य सम्मुखे स्थातुं तौ राक्षसौ कथमपि समर्थौ न स्तः। रामादन्यः कोऽपि पुमान् तौ हन्तुं साहसं कर्तुं न शक्नोति। वीर्यदर्पितौ तौ पापौ कालपाशवशं प्रापतुः। तौ महात्मनो रामस्य न पर्याप्तौ। राजन्! पुत्रगतस्नेहेन मा संशयं गमः। तौ राक्षसौ हतौ विद्धि। एतत् ते प्रतिजानामि। महात्मनो रामस्यामोघपराक्रममहं वेद्मि। महातेजा वसिष्ठो जानाति। इमे तापसाश्च जानन्ति। यदि त्वं भुवि स्थिरां धर्मप्राप्तिं परमकीर्तिं चेच्छसि तर्हि रामं मे दातुमर्हसि। यदि तव मन्त्रिणो

वसिष्ठप्रमुखा उपदेशकाश्चानुमन्यन्ते तर्हि रामं मे विसर्जय। मया काङ्क्षितं तव पुत्रं रामं यज्ञरक्षार्थं दशदिनमविलम्बितं दातुमर्हसि। यथा मम यज्ञस्य समयो नातिक्राम्यति तथा कुरुष्व। तव भद्रमस्तु। शोके मनो मा मज्जय। धर्मार्थसहितं वचनमेवमुक्त्वा महामुनिर्विश्वामित्रो विरराम। चित्तविदारकं मुनिवचनं राजा श्रुतवान्। महद् भयं प्राप्य व्यथितमना आसनात् प्रचचाल।

१९

विश्वामित्रस्य तद् भाषितं श्रुत्वा राजश्रेष्ठो दशरथः क्षणं निस्संज्ञः पुनश्चेतनां प्राप्येदमब्रवीत्। मम पुत्रो रामः षोडशवर्षादूनः। राक्षसैः सह तस्य युद्धयोग्यतामहं न पश्यामि। इयं पूर्णा अक्षौहिणी सेना अस्ति यस्या अहं पतिर्नियामकश्चास्मि। अनया सेनयाहं तौ निशाचरौ योत्स्ये। इमे मम सैनिकाः पराक्रमवन्तो रक्षोगणैर्योद्धुं योग्याः। रामं नेतुं तव न युज्यते। अहमेव धनुर्धृत्वा तव यज्ञं रक्षिष्यामि। यावत् प्राणान् धरिष्यामि तावद् राक्षसैर्योत्स्ये। अहं तत्र गमिष्यामि। तव व्रतचर्या निर्विघ्ना सुरक्षिता भविष्यति। रामं नेतुं ते न युज्यते । रामो बालः अकृतविद्यश्च। शत्रूणां बलमबलं च न जानाति। तस्यास्त्रबलं नास्ति। स न युद्धविशारदः। स राक्षसैः सह योद्धुमयोग्योऽस्ति यतस्ते कपटयुद्धाः। रामेण विप्रयुक्तः क्षणकालमपि जीवितुं नोत्सहे। न त्वं रामं नेतुमर्हसि। यदि रामं नेतुमिच्छसि तर्हि चतुरङ्गबलेन मया च सह तं नय। कौशिक! मम जातस्य षष्टिर्वर्षसहस्राणि व्यतीयुः। रामः कष्टेनोत्पादितः। अतो रामं त्वं नेतुं नार्हसि। चतुर्णामात्मजानां च मम महती प्रीतिरस्ति। तेषां ज्येष्ठं धर्मविषये प्रधानं रामं न नेतुमर्हसि। ते राक्षसाः किंवीर्याः? कस्य पुत्राः? किंप्रमाणाः? तान् के रक्षन्ति? तैः कपटयोधिभिः सह रामेण कथं प्रतियोद्धव्यम्? मामकैर्बलैर्मया वा तैः सह कथं योद्धव्यम्? दुष्टभावानां

तेषां रणे कथं मया स्थातव्यम्? एतत् सर्वं शंस । राक्षसाः शौर्यदर्पिता भवन्ति । दशरथस्य तद् वचनं श्रुत्वा विश्वामित्र आह । पौलस्त्यवंशजातो रावणो नाम राक्षसोऽस्ति। स ब्रह्मणा दत्तवरो महाबलवीर्यो बहुभी राक्षसैर्वृतस्त्रैलोक्यं भृशं बाधते। राक्षसाधिपो महावीर्यो रावणो मुनेर्विश्रवसः पुत्रः कुबेरस्य भ्राता चेति श्रूयते। स यदा यज्ञं विघ्नयितुं स्वयं नायाति तदा तेन प्रेरितौ तौ महाबलौ राक्षसौ मारिचश्च सुबाहुश्च यज्ञविघ्नं कुरुतः। इत्युक्तो मुनिना राजोवाच। तस्य दुरात्मनो रावणस्याग्रे युद्धे स्थातुमशक्तोऽस्मि। धर्मज्ञ! अतस्त्वं मम पुत्रके प्रसादं कुरुष्व। अल्पभाग्यस्य मम भवान् दैवतं गुरुश्च। देवा दानवा गन्धर्वा यक्षाः पतगाः पन्नगाश्च रावणं रणे सोढुमशक्ताः। किं पुनर्मानवाः? स राक्षसो रणे वीर्यवतां वीर्यमादत्ते। अतोऽहं सबलो वा आत्मजैः सह वा तेन वा तस्य बलैर्वा योद्धुमशक्तोऽस्मि। सुन्दोपसुन्दयोः पुत्रौ कालोपमौ सोढुमशक्तौ स्तः। मारीचश्च सुबाहुश्च वीर्यवन्तौ सुशिक्षितौ स्तः। ससुहृद्गणोऽहं तयोरन्यतरेण सह योत्स्ये।

२०

पुत्रप्रेमव्याकुलं दशरथवचनं श्रुत्वा विश्वामित्रः सकोपो महीपतिमुवाच। पूर्वं प्रतिज्ञाय प्रतिज्ञां हातुमिच्छसि । राघवाणां वंशस्यायं प्रतिज्ञाभङ्गो न युज्यते। यदि त्वमिदमेव ते युक्तं मन्यसे यथागतमहं गमिष्यामि। हे काकुत्स्थ! मिथ्याप्रतिज्ञो भूत्वा सबान्धवस्त्वं सुखी भव। एवं रोषपूर्णे विश्वामित्रे कृत्स्ना वसुधा चचाल। सुरान् भयमाविशत्। सर्वं जगद् भृशं त्रस्तं विज्ञाय महर्षिर्वसिष्ठो नृपतिमिदमब्रवीत्। त्वं साक्षाद् द्वितीयो धर्म इव इक्ष्वाकूणां कुले जातो धैर्यवान् सुव्रतः श्रीमांश्च । त्वं धर्मं हातुं नार्हसि। राघवो धर्मात्मेति त्रिषु लोकेषु विख्यातः। अतस्त्वं स्वकुलधर्मं प्रतिपद्यस्व। अधर्मं शिरसि मा वह। करिष्यामीति संश्रुत्याकुर्वत

इष्टापूर्तविनाशो भवेत्। तस्माद् रामं विसर्जय। कृतास्त्रमकृतास्त्रं वा विश्वामित्रेण रक्षितं रामं राक्षसाः किमपि कर्तुं न शक्ष्यन्ति यथा ज्वलनेन रक्षितममृतं कोऽपि स्प्रष्टुं न शक्ष्यति। एष विश्वामित्रो मूर्तीभूतो धर्मः। वीर्यवतां श्रेष्ठः। बुद्ध्या सर्वातिगः। तपसो निधिः। सचराचरे त्रैलोक्ये विश्वामित्रः सर्वाण्यस्त्राणि वेत्ति। विश्वामित्रस्य विविधप्रभावानहमेक एव सम्प्रति वेद्मि। अन्यो न जानाति न च ज्ञास्यति। देवा ऋषयः असुरा राक्षसा गन्धर्वा यक्षाः किंनरा महोरगा अपि न जानन्ति। सर्वास्त्राणि च परमधार्मिका कृशाश्वपुत्राः सन्ति। पुरा यदा विश्वामित्रो राज्यं प्राशात् तदा तस्मै दत्तानि। कृशाश्वस्य ते पुत्रा दक्षप्रजापतेः सुतयोः पुत्राः सन्ति। तान्यस्त्राणि बहुरूपाणि महावीर्याणि दीप्तिमन्ति जयावहानि च सन्ति। दक्षस्य जया सुप्रभेति द्वे सुते सुन्दर्यावास्ताम्। ते शतमस्त्रशस्त्राणि सुषुवाते। असुरसैन्यानां वधायामेयान् कामरूपिणो श्रेष्ठान् पुत्रान् पञ्चाशतं जया पुरा लेभे। सुप्रभा च दुर्धर्षान् बलीयसः संहारान् नाम पुत्रान् पञ्चाशतं लेभे। एष धर्मज्ञो विश्वामित्रः सर्वाणि तान्यस्त्राणि वेत्ति। अपूर्वाणामस्त्राणां जनने च स समर्थः। महातेजा महातपा विश्वामित्र एवंप्रभावोऽस्ति। राजन्! रामगमने संशयं प्राप्तुं नार्हसि।

२१

एवमुक्तवति वसिष्ठे प्रहृष्टवदनो दशरथः सलक्ष्मणं राममाजुहाव। मात्रा पित्रा च तयोः स्वस्त्ययनं पुरोहितेन वसिष्ठेन यात्रासम्बन्धि मङ्गलकार्यं च कृतम्। मूर्ध्न्युपाघ्राय सुप्रीतेन मनसा विश्वामित्राय दशरथस्तौ ददौ। विश्वामित्रेण सह गतं राजीवनेत्रं रामं दृष्ट्वा रजोरहितः सुखस्पर्शो वायुर्ववौ। महती पुष्पवृष्टिः पपात। देवा दुन्दुभीन् नादयामासुः। राजप्रासादे शङ्खदुन्दुभिनिर्घोषो बभूव। अग्रे विश्वामित्रो ययौ। तमनु काकपक्षधरो धन्वी रामो जगाम। लक्ष्मणस्तमन्वगात्। स्कन्धे तूणीरं हस्ते

धनुश्च धृत्वा त्रिशीर्षौ सर्पाविव भासमानौ दशदिशः शोभयमानौ महारूपपराक्रमप्रभावौ रामलक्ष्मणौ अश्विनौ पितामहमिव विश्वामित्र-मनुजग्मतुः। बद्धगोधाङ्गुलित्राणौ खड्गवन्तौ महाद्युती तौ अचिन्त्यप्रभावं महेश्वरं वह्निपुत्रौ स्कन्दविशाखाविवानुसस्रतुः*। अयोध्यायाः सार्धयोजनं दूरं गत्वा सरय्वा दक्षिणे तटे विश्वामित्रो राम इति मधुरस्वनेन व्याहृत्योवाच। जलं गृहाण। आचमनं कुरु। कालपर्ययो मास्तु। मन्त्रसमुदायं बला अतिबला इति द्वे विद्ये च गृहाण। तव श्रमो ज्वरो रूपपरिणामो वा न भवति। सुप्तं प्रमत्तं वा त्वां राक्षसा न धर्षयिष्यन्ति। बाहुबले तव समः पृथिव्यां त्रिषु लोकेषु च न भवेत्। सौभाग्ये चातुर्ये ज्ञाने बुद्ध्यां निश्चयकरणे कस्यापि प्रश्नस्य समाधानप्रदाने तव समो लोके न भवेत्। बला अतिबला च सर्वज्ञानस्य मातरौ स्तः। एतद्विद्याद्वयलाभेन तव समो न भवति न च भविष्यति। बलामतिबलां चैव पथि पठतस्ते क्षुत्पिपासे न भविष्यतः विद्याद्वयमधीयानस्य तवातुलं यशो भुवि भविष्यति। एतद्विद्याद्वयप्रदानाय त्वमेव योग्यः। बहुगुणास्त्वयि सन्ति। तत्र संशयो नास्ति। त्वया तपसा वर्धिते इतोऽपि बहुरूपे भविष्यतः। ततो रामो जलमाचम्य शुचिर्भूत्वा प्रहृष्टवदनः शुद्धान्तः-करणान्महामुनेस्ते विद्ये प्रतिजग्राह। विद्यासंपन्नो रामो भूरिविक्रमः शुशुभे**। ततो रामलक्ष्मणौ विश्वामित्रे गुरुसेवां चक्रतुः। ते त्रयः सरयूतीरे सुसुखं रात्रिमूषुः।

## २२

शर्वर्यां प्रभातायां पर्णसंस्तरे शयानं रामं महामुनिर्विश्वामित्रोऽ

---

* कुमारस्वामी चतुर्मूर्तिः। ततोऽभवच्चतुर्मूर्तिः क्षणेन भगवान् प्रभुः स्कन्दो विशाखः शाकश्च नैगमेषश्च पृष्ठतः। इति भारतोक्तेरिति गोविन्दराजः।

** अत्र रामाय विद्यादानं लक्ष्मणस्याप्युपलक्षणमिति गोविन्दराजः।

भ्यभाषत। हे कौसल्यासुपुत्र राम!+ पूर्वा संध्या प्रवर्तते। नरश्रेष्ठ! उत्तिष्ठ। देवतासम्बन्धि दैनिकं कर्म करणीयम्। मुनेः परमोदारं तद् वचः श्रुत्वा रामलक्ष्मणौ स्नात्वा अर्घ्यं प्रदाय गायत्रीं जेपतु :। आह्निककर्माणि कृत्वा विश्वामित्रमभिवाद्य हर्षेण गमनाय सन्नेहतुः। किञ्चिद् दूरं गत्वा तौ सरयूगङ्गयोः शुभसङ्गमे दिव्यां गङ्गानदीं ददृशतुः। तत्र बहुवर्षसहस्राणि परमं तपः तपतामुग्रतेजसां महर्षीणां पुण्यमाश्रमपदं ददृशतुः। पवित्रं तमाश्रमं वीक्ष्य परमप्रसन्नौ रामलक्ष्मणौ विश्वामित्रमिदमूचतुः। भगवन्! कस्यायं पवित्र आश्रमः? अस्मिन् को निवसति? एतद् ज्ञातुमावयोर्महती उत्कण्ठा विद्यते। अतः श्रोतुमिच्छावः। तदा प्रहस्य मुनिरब्रवीत्। पूर्वं यस्यायमाश्रमस्तस्य परिचयः श्रूयताम्। पूर्वं कन्दर्पो देहवानासीत्। बुधैः स काम इत्युच्यते। नियमेनेह तपस्यन्तं कृतविवाहं देवगणैः सह गच्छन्तं देवेशं शङ्करं मूढः कामो धर्षयामास। शिवेन स हुंकृतः। शिवस्य रौद्रेण चक्षुषा स दग्धः। दुर्मतेस्तस्य सर्वगात्राणि व्यशीर्यन्त। क्रोधाद् देवेश्वरेण निर्दग्धः कामः अशरीरः कृतः। तदा-प्रभृति सः अनङ्ग इति विख्यातः। यत्र कामः स्वाङ्गं मुमोच सोऽयमङ्गविषयः*। तस्य शिवस्यायं पुण्य आश्रमः। इमे धर्मपरा मुनयः पुरा तस्य शिष्याः**। तेषां पापं न विद्यते। शुभदर्शन राम! इह पुण्ययोः सरितोर्मध्ये रात्रिं वसेम। श्वस्तरिष्यामः। तत्र संभाषमाणान् तान् तपसा प्राप्तेन दूरदर्शनेन विज्ञाय मुनयो जहृषुः। अर्घ्यं पाद्यमातिथ्यं च विश्वामित्राय निवेद्य पश्चात् ते रामलक्ष्मणयोरातिथ्यं चक्रुः। एवं सत्कारं प्राप्य कथाभिरभ्यरञ्जयन्। तत्र कामाश्रमपदे सुसुखं ते न्यवसन्।

---

+ cr कौसल्या सुप्रजा राम। कौसल्यासुप्रजा राम इति पठितव्यः।

* कुमारसम्भवकथनादिदं कथनं भिद्यते। कुमारसम्भवे विवाहात् पूर्वं हिमवत्पर्वते शिवः कामेन धर्षितः। अस्मिन् कथने कृतविवाहस्तपस्यालग्नः शिवःअङ्गदेशे मन्मथेन धर्षितः। सम्भवत इयं कथा कुमारसम्भवकथायाः प्राचीना।

** एते मुनयः शिवस्य परम्पराशिष्याः अर्थात् शिवशिष्यपरम्परागताः स्युः।

२३

ततो विमले प्रभाते कृताह्निकं विश्वामित्रं पुरस्कृत्य रामलक्ष्मणौ गङ्गातीरमासेदतुः। तीव्रतपश्शालिनो महात्मानः सर्वे मुनयः सुन्दरां नावमानीय विश्वामित्रमूचुः। राजपुत्राभ्यां पुरस्कृतो भवान् नावमरोहतु। पथि ते निर्विघ्नमस्तु। कालविलम्बो न भवतु। तथेत्युक्त्वा विश्वामित्र-स्तानृषीन् संपूज्य रामलक्ष्मणसमेतः समुद्रगामिनीं गङ्गानदीं ततार। नदीमध्ये वारिणो बलवत्सम्मेलनस्यायं ध्वनिः किं प्रवर्तते इति रामो विश्वामित्रं पप्रच्छ। कौतूहलसमन्वितं रामस्य बचः श्रुत्वा मुनिः रामं कथयामास। कैलासपर्वते ब्रह्मणा मनसा सरो निर्मितम्। तस्मात् तत् सरो मानसं कथितम्। तस्माद् ब्रह्मसरसः पुण्यनदी सरयूः सुस्राव। सा नदी अयोध्यां परिवेष्टते। अत्र सरयूर्गङ्गां प्रविशति। जलसंसर्गजोऽयं महान् ध्वनिः। राम! भक्त्या नदीसंगमस्य प्रणामं कुरु। ताभ्यां नदीभ्यां रामलक्ष्मणौ प्रणम्य गङ्गानद्या दक्षिणतीरं प्राप्य शीघ्रपदक्रमेण जग्मतुः। तत्र भयंकरं जनसंचारशून्यं वनं दृष्ट्वा रामो विश्वामित्रं पप्रच्छ। अहो! वनमिदं दुर्गं झिल्लिकागणनादितं घातुकमृगैः क्रूरभासपक्षिणामारवैश्च व्याप्तमस्ति। भैरवनादै रुवद्भिर्विविधैः पक्षिभिराकुलं सिंहव्याघ्र-वराहवारणैः शोभितं चास्ति। धवाश्वकर्णककुभबिल्वतिन्दुकपाटलबदरीभिः संकुलं किमिदं दारुणं वनम्? तं विश्वामित्र उवाच। श्रूयतां यस्यैतद् दारुणं वनम्। पूर्वमस्मिन् देशे मलदाः करूषा इति देवनिर्मितौ जनपदावास्ताम्। पुरा वृत्रवधादशुचिं क्षुधापूर्णमिन्द्रं ब्रह्महत्या समाविशत्। तमिन्द्रं देवास्तीर्थोदकैरस्नापयन्। तपोधना मुनयः कलशैः स्नापयामासुः। इत्थं तस्य मलं प्रामोचयन्। इह प्रदेशे इन्द्रस्य मलं क्षुधां च दत्वा ते हर्षं प्रपेदिरे। यदा निर्मलो गतक्षुधश्चेन्द्रो बभूव तदा सुप्रीतः अस्य देशस्यातुलं वरं ददौ। मम शरीरमलधारिणाविमौ जनपदौ समृद्धौ भूत्वा मलदाः

करूषा इति विख्यातौ भविष्यतः। तथा शक्रस्य देशस्य कृतां पूजां दृष्ट्वा देवाः साधुवादांश्चक्रुः। एतौ जनपदौ दीर्घकालं धनधान्यसमृद्धावास्ताम्। अथ कस्यचित् कालस्य सुन्दस्य भार्या ताटका नाम यक्षी कामरूपिणी नागसहस्रबलधारिणी बभूव। शक्रतुल्यपराक्रमो मारीचस्तस्याः पुत्रः। दुष्टचारिणी ताटका मलदान् करुषांश्च जनपदौ नित्यं विनाशयति। इतः सार्धयोजनदूरे मार्गमावार्य वसति। अस्माकमस्मिन्नेव मार्गे गन्तव्यमस्ति। स्वबाहुबलमुपयुज्य दुष्टचारिणीमिमां जहि। मन्नियोगादिमं देशं पुनर्निष्कण्टकं कुरु। घोरया दुस्सहया यक्षिण्या उत्सादितमीदृशमिमं देशं न कोऽप्यागन्तुं शक्नोति। यथैतद् दारुणं वनं यक्ष्या उत्सादितं सर्वं च तत् ते आख्यातम्। अद्यापि सा अस्माद् वनान्न निर्गच्छति।

२४

अगणितप्रभावशालिनो विश्वामित्रस्य तदुत्तमं वचनं श्रुत्वा पुरुषोत्तमो रामः शुभं वचनमिदमाह। मुनिश्रेष्ठ! यक्षा अल्पवीर्याः श्रूयन्ते। कथं स्त्री हस्तिसहस्रस्य बलं धारयति? विश्वामित्रोऽब्रवीत्। राम! शृणु येन कारणेन सा महाबला संजाता। एषा अबला वरदानकृतं वीर्यं बलं च धारयति। पूर्वं सुकेतुर्नाम महायक्षो वीर्यवान् शुभाचारो बभूव। अनपत्यः स महत् तपस्तताप। सुप्रीतो ब्रह्मा यक्षपतेस्ताटकां नाम कन्यां ददौ तस्या वारणसहस्रबलं च। पुत्रं तु यक्षाय न ददौ। विवर्धमानां रूपयौवनशालिनीं तां पिता जम्भपुत्राय सुन्दाय भार्यां ददौ। कस्मिंश्चित् काले गते यक्षिणी मारीचं नाम दुर्धर्षं पुत्रमजनयद् यः शापाद् राक्षसोऽभवत्। (अगस्त्यशापेन) सुन्दे निहते पुत्रेण सह ताटका मुनिसत्तममगस्त्यं प्रधर्षयितुमिच्छति। राक्षसत्वं भजस्वेति मारीचं शप्त्वा परमक्रुध्दस्ताटकामप्यगस्त्यः शशाप। त्वं नरभक्षिणी महायक्षी विरूपा विकृतानना भवसि। इदं रूपं विहाय दारुणं रूपं प्राप्नुहीति। सैषा ताटका शापात् क्रोधोद्रिक्ता यत्रागस्त्यो

निवसति तं शुभं देशमुत्सादयति। एनां यक्षीं परमदारुणां दुर्वृत्तां दुष्टपराक्रमां गोब्राह्मणहितार्थं जहि। शापग्रस्तामेनां निहन्तुं त्वामृते त्रिषु लोकेषु न कश्चित् समर्थोऽस्ति। स्त्रीवधे करुणा त्वया न कार्या। लोकहितार्थं राजसूनुना सर्वं कर्तव्यमस्ति। राज्यपालने नियुक्तानामेष एव सनातनो धर्मः। अधर्म्यामिमां ताटकां जहि। अस्या धर्मो न विद्यते। एवं श्रूयते यत् पुरा विरोचनसुतां मन्थरां पृथिवीं हन्तुमिच्छन्तीं शक्रो जघान। पुरा विष्णुना च भृगुपत्नी शुक्रमाता दृढव्रता लोकमनिन्द्रं कर्तुमिच्छन्ती निषूदिता। एतैरन्यैश्च बहुभिर्महात्मभिरुत्तमपुरुषैरधर्मलग्ना नार्यो हताः।

२५

शौर्यसंपन्नं मुनेर्वचनमाकर्ण्य दृढव्रतो रामः प्राञ्जलिर्भूत्वा प्रत्युवाच। पितुराज्ञया तद्वचनगौरवात् कौशिकस्य वचनमिति चैतदविशङ्कया मया कर्तव्यम्। अयोध्यायां गुरुमध्ये महात्मना पित्रा दशरथेन (विश्वामित्रनिदेशं सर्वथा कुरु इति) अनुशिष्टोऽस्मि। तद्वचो मम नावज्ञेयम्। ततोऽहं पितुर्वचनाद् वेदाध्ययनसंपन्नस्य तव शासनाच्च ताटकावधमुत्तमं विज्ञायावश्यं करिष्यामि। गोब्राह्मणहितार्थायास्य देशस्य सुखाय चापरिमितप्रभावस्य तव वचनमहं कर्तुमुद्यतोऽस्मि। एवमुक्त्वा शत्रुसंहारको रामो धनुर्मध्ये मुष्टिं बध्वा दिशः शब्देन पूरयन् तीव्रं धनुर्ज्याटङ्कारमकरोत्। तेन शब्देन ताटकावनवासिनः सर्वे प्राणिनो वित्रेसुः। ताटका च प्रथमं विमुह्य पुनः कोपाविष्टा समजनि। तं शब्दं श्रुत्वा क्रोधोद्रिक्ता राक्षसी विचिन्त्य यतः शब्दो विनिःसृतस्ततो वेगादभ्यद्रवत्। तां क्रुध्दां विकृतदेहां विकृतमुखीं महाप्रमाणां च दृष्ट्वा रामो लक्ष्मणमिदमाह। लक्ष्मण! यक्षिण्या भयंकरं क्रूरं वपुः पश्य। अस्या दर्शनादेव भीरूणां हृदयानि भिद्येरन्। दुराधर्षां मायाबलसमन्वितामेनां कर्णनासाग्रखण्डनेनेदानीं

विनिवर्तयामि। निहतां भूमौ पतितां रुधिरेण परिप्लुतां च करिष्यामि। महादुष्कृतकारिणीयं राक्षसी मच्छराग्निदग्धा धूतपापा भविष्यति+। एवं वदति रामे क्रोधपूर्णा ताटका हस्तावुद्यम्य राममेवाभ्यधावत्। अशनीमिव वेगेनापतन्तीं तां रामः शरेणोरसि विव्याध। सा पपात ममार च। भयंकरां तां हतां दृष्ट्वा सुरपतिः सुराश्च साधुवादै रामं समपूजयन्। परमसंहृष्ट इन्द्रः सुराश्च विश्वामित्रमूचुः। मुने विश्वामित्र! तव कल्याणमस्तु। अनेन कर्मणा सेन्द्राः सर्वे सुराः संतोषिताः। रामे प्रीतिमिदानीं प्रदर्शय। कृशाश्वस्य (अस्त्ररूपान्) पुत्रानमोघपराक्रमान् तपोबलभृतान् राघवाय प्रयच्छ। ब्रह्मन्! तवानुगामी रामः अस्त्रदानाय पात्रभूतः। अनेन सुराणां महत् कर्म कर्तव्यं च। एवमुक्त्वा सर्वे सुरा हृष्टा विश्वामित्रं पूजयित्वा यथागतं जग्मुः। ततः संध्या प्रावर्तत। ताटकावधतोषितः प्रीतो मुनिवरो रामं मूर्ध्न्युपाघ्रायोवाच। राम! इहाद्य रजनीं वसेम। श्वः प्रभाते ममाश्रमपदं गमिष्यामः।

२६

तां रजनीं तत्रोषित्वा विश्वामित्रः प्रहस्य रामं मधुरमुवाच। राजपुत्र! परितुष्टोऽस्मि। परमया प्रीत्या सर्वाण्यस्त्राणि ददामि। देवासुरगणान् गन्धर्वानुरगानपि शत्रून् प्रसह्य समरे वशीकृत्य जेष्यसि। तानि दिव्यान्यस्त्राणि ते दास्यामि। क्षिप्रं गृहाण* । इत्युक्त्वा मुनिवरः शुचिः प्राङ्मुखः स्थितो महान्तं मन्त्रसमुदायं रामाय ददौ। जपतो विश्वमित्रस्याग्रे सर्वाणि महास्त्राणि राममुपतस्थुः। सर्वाणि तान्यञ्जलिं बध्द्वा वयं ते किंकरा इति राममूचुः। रामस्तानि प्रतिगृह्य पाणिना स्पृष्ट्वा मम मनसि निवसतेति तान्यभ्यचोदयत्। ततः प्रीतो रामो विश्वामित्रमभिवाद्य गमनायोपचक्रमे।

---

+ cr 12 श्लोकस्थाने अधःसूचिकातः पङ्क्तित्रयं ग्राह्यम्। निहतां पतितां भूमौ रुधिरेण परिप्लुताम्। इयं हि राक्षसी घोरा महादुष्कृतकारिणी। मच्छराग्निविनिर्दग्धा धूतपापा भविष्यति।

* श्लोकाः ४–२० वाक्ये संक्षिप्ताः।

२७

शुचिः काकुत्स्थः अस्त्राणि प्रतिगृह्य प्रहृष्टवदनो गच्छन् विश्वामित्रमब्रवीत्। भगवन्! गृहीतास्त्रः सुरैरपि दुराधर्षोऽस्मि। अस्त्राणां संहारमिदानीं ज्ञातुमिच्छामि। रामेणैवं पृष्टः पवित्रो विश्वामित्रः संहारं व्याजहार। पश्चादुवाच। राम! भद्रं ते। पात्रभूतोऽसि। अन्यानि चास्त्राणि ते दास्यामि*। कृशाश्वतनयान् भास्वरान् कामरूपिणो गृहाण। बाढमिति रामो हर्षेण जग्राह। दिव्यप्रकाशमानदेहास्ते मूर्तिमन्तः प्राञ्जलयो रामं मधुरस्वनेनोचुः। वयमुपस्थिताः। किं ते करवाम? शाधि। रामस्तान् सम्प्रति यथेष्टं गम्यताम्। मम चित्ते स्थिताः कार्यकालेषु मे साहाय्यं करिष्यथ इत्याह। ततस्ते राममामन्त्र्य प्रदक्षिणं कृत्वा एवमस्त्वित्युक्त्वा यथागतं जग्मुः। रामश्च तान् ज्ञात्वा गच्छन् विश्वामित्रं मधुरं श्लक्ष्णमब्रवीत्। पर्वतस्याविदूरतो मेघसंकाशं वृक्षषण्डं भाति। किंन्वेतत्? ज्ञातुमुत्कण्ठितोऽस्मि। अतीव मनोहरं मृगाकीर्णं नानाविधैर्वल्गुभाषैः पक्षिभिरलंकृतं च। देशस्यानया सुखवत्तया भयंकरात् कान्तारान्निःसृता वयमित्यवगच्छामि। कस्येदमाश्रमपदं सर्वं मे शंस। इहैव पापा ब्रह्मघ्ना दुष्टचारिणः संप्राप्ताः**।

२८

अथ तद् बनमुद्दिश्य पृच्छन्तं रामं विश्वामित्रो बभाषे। एष महात्मनो वामनस्य पूर्वाश्रमः। काश्यपोऽत्र वाञ्छासिध्दिं प्राप येनायं सिध्दाश्रम इति ख्यातः। इह तपश्चरितुं विष्णुर्बहूनि वर्षाणि उवास+। एतस्मिन्नेव काले विरोचनपुत्रो लोकत्रयविख्यातो राजा बलिः समरुद्दैवतगणमिन्द्रं

---

* श्लोकाः ४-८ वाक्ये सक्षिप्ताः। ** पङ्क्तिरियमसंबध्दा तिष्ठति। +ग्राह्याः पङ्क्तयः। इह राम महाबाहो विष्णुर्देववरः प्रभुः वर्षाणि सुबहूनीह तथा युगशतानि च तपश्चरणयोगार्थमुवास सुमहातपाः।

निर्जित्य तद्राज्यं चकार। एकदा बलौ यज्ञं कुर्वति अग्निं पुरस्कृत्य देवाः समागम्येहाश्रमे विष्णुमूचुः। हे विष्णो! बलिर्महायागं करोति। अपूर्णे तस्मिन् क्रतौ अस्मत्कार्यं संपादय। ये केऽपि याचितार इतस्तत आगत्य यद् यत्र यथावद् याचन्ते तत्तत्र तथावत् तेभ्यः सर्वं स प्रयच्छति। तस्मात् हे विष्णो! त्वं सुरहितकार्यार्थं मायया युक्तो वामनत्वं प्राप्यास्माकं महत् कल्याणं कुरु। यतोऽस्मत्कर्मेह सेत्स्यति ततोऽयं तव प्रसादात् सिध्दाश्रमो नाम भविष्यति। भगवन्नित उत्तिष्ठ। अथ विष्णुरदित्यां समजायत। वामनं रूपं धृत्वा बलिमुपजगाम। त्रीन् क्रमान् याचित्वा प्रमाणतः प्रतिगृह्य लोकस्वरूपः सर्वप्राणिहिते रतो विष्णुस्त्रीन् लोकानाक्रम्य बलिमोजसा नियम्य महेन्द्राय सर्वं पुनर्ददौ। एवं महातेजा विष्णुस्त्रैलोक्यं पुनः शक्रसात् चक्रे। शोकनाशनोऽयमाश्रमः पूर्वं वामनेनाधिष्ठितः। तस्यैव भक्त्या मयाप्यत्रोष्यते। यज्ञविघ्नकारिणो राक्षसा इममाश्रममायान्ति। अत्र ते दुष्टचारिणस्त्वया हन्तव्याः। उत्तमं सिध्दाश्रममिदानीं प्रविशामः। यथेदमाश्रमपदं ममास्ति तथा तवापि। इति प्रविशन्तं विश्वामित्रं दृष्ट्वा सिध्दाश्रमनिवासिनः सर्वे मुनयः सहसो – त्पत्योत्पत्य तमपूजयन् राजपुत्रयोरतिथिक्रियां च चक्रुः। किञ्चित्कालं विश्रम्य रामलक्ष्मणौ प्राञ्जली मुनिश्रेष्ठमूचतुः। हे मुनिपुङ्गव! तव भद्रमस्तु। अद्यैव दीक्षां प्रविश। अयं सिध्दाश्रमः सिध्दः स्यात्। अत्र यज्ञविघ्नकरा राक्षसा हन्तव्या इति तव वचनं सत्यमस्तु। एवमुक्तो महर्षिर्विश्वामित्रो नियतेन्द्रियो नियमानुसारेण दीक्षां प्रविवेश। कुमारौ च सावधानचित्तौ तां रात्रिमुषित्वा प्रभातकाले उत्थाय विश्वामित्रमवन्देताम्।

२९

ततो रामलक्ष्मणौ विश्वामित्रमिदमूचतुः। भगवन्! यस्मिन् काले यज्ञविध्वंसात् तौ मारीचसुबाहू निवारणीयौ तत्कालमादेशय येन स क्षणो

नातिवर्तेत। एवं ब्रुवाणौ नृपात्मजौ युयुत्सया त्वरमाणौ सर्वे ते मुनयः प्रीत्या प्रशशंसुः। ते राघवावूचुः। अद्यप्रभृति षड्रात्रं यज्ञं रक्षतम्। दीक्षां गतो विश्वामित्रो मौनं स्थास्यति। तद्वचनं श्रुत्वा तौ राजपुत्रौ षड्दिनानि षड्रात्रीश्च अनिद्रौ तपोवनमरक्षताम्। सन्नध्दौ तौ महाधन्विनौ समीपे स्थित्वा विश्वामित्रं ररक्षतुः। काले गते षष्ठं दिनं प्राप्तम्। तदा सौमित्रिं रामः सन्नध्दः सावधानश्च भवेति प्राह। यावद् युध्दकाङ्क्षात्वरितो राम एवमुक्तवान् तावदृत्विक्पुरोहितसहिता होमवेदिः (राक्षसागमनोत्पातं सूचयन्ती) प्रजज्वाल। स यज्ञो मन्त्रवत् शास्त्रवच्च संप्रवर्तते स्म। तदा गगने भयावहो महान् शब्दः प्रादुर्बभूव। यथा प्रावृषि गगनमावार्य मेघो निर्गच्छति तथा मायां विकुर्वाणौ तौ राक्षसौ यज्ञभूमिमभ्यधावताम्। भयंकरौ मारीचसुबाहू तयोरनुचराश्चागम्य रक्तधारा ववर्षुः। सहसापतन्तौ तौ दृष्ट्वा रामो लक्ष्मणं वीक्ष्योवाच। दुराचारान् पिशिताशनान् राक्षसान् वायुना मेघानिव मानवास्त्रसमाधूतानचिरेण पश्य। महाप्रकाशमानं मानवं महास्त्रं परमक्रुध्दो रामो मारीचस्योरसि चिक्षेप। स तेन महास्त्रेण समाहतः पूर्णं योजनशतं समुद्रप्रवाहे क्षिप्तः। मानवास्त्रबलपीडितं निरस्तं विचेतनं विघूर्णमानं मारीचं वीक्ष्य रामो लक्ष्मणमब्रवीत्। पश्य लक्ष्मण! धर्मसंबध्दं शीतेषुनामकं मानवास्त्रम्। एतदस्त्रमेनं मोहयित्वा नयति। न तु प्राणैर्वियोजयति। इमान् निष्करुणान् दुराचारान् पापकर्मस्थान् यज्ञनाशकान् रक्तभोजिनो राक्षसान् हनिष्यामि। इत्युक्त्वा राम आग्नेयं महास्त्रं गृहीत्वा सुबाहोरुरसि चिक्षेप। स विध्दो भुवि पपात। ततो मुनीनां मोदं जनयन् रामो वायव्यास्त्रेण शेषान् निजघान। यज्ञघ्नान् सर्वान् राक्षसान् हत्वा रामस्तथा ऋषिभिः पूजितो यथा पुरा असुरान् जित्वा देवेन्द्रः। यज्ञे समाप्ते विश्वामित्रो विघ्न-बाधारहिता दिशो दृष्ट्वा राममाह। हे महाबाहो! अहं कृती संवृत्तः। पितुर्वचनं त्वया कृतम्। सिध्दाश्रममिदं त्वया सार्थकं कृतम्।

३०

ततः कृतार्थौ मुदितौ रामलक्ष्मणौ तां रात्रिं तत्रोषतुः। प्रभाते पौर्वाह्णिकक्रियाः कृत्वा सहितौ विश्वामित्रस्यान्येषामृषीणां च समीपं जग्मतुः। ज्वलन्तं पावकमिव स्थितं विश्वामित्रं प्रणम्य मधुरमूचतुः। हे महामुने! किंकरावावामुपस्थितौ। यथेष्टमाज्ञापय। किं ते शासनं करवाव। तदा सर्वे महर्षयो विश्वामित्रानुज्ञाता राममूचुः। मैथिलस्य जनकस्य परमधर्ममयो यज्ञो भविष्यति। तत्र वयं यास्यामः। हे नरशार्दूल! त्वं चास्माभिः सह गमिष्यसि। तत्र त्वमद्भुतं धनूरत्नं द्रष्टुमर्हसि। घोरं परमभास्वरमप्रमेयबलं तद् धनुः पूर्वं यज्ञे आगतैर्दैवतैर्जनकस्य कस्मैचित् पूर्वपुरुषाय सदसि दत्तम्। तस्य धनुषो ज्यारोपणं कर्तुं देवा गन्धर्वा असुरा राक्षसाश्च न शक्ताः। मनुष्याणां का कथा? तस्य धनुषः शक्तिं परीक्षमाणा महाबला राजानो राजपुत्राश्च तदारोपयितुं न शेकुः। तत्र गत्वा महात्मनो जनकस्य तद् धनुः आश्चर्यकरं यज्ञं च द्रक्ष्यसि। शोभनलस्तकं तदुत्तमं धनुः सर्वदैवतेभ्यो यज्ञफलरूपेण मैथिलेन देवरातेन याचितम्। एवमुक्त्वा विश्वामित्रो वनदेवता आमन्त्र्य रामलक्ष्मणाभ्यां मुनिभिश्च सह प्रतस्थे। स आह। भो वनदेवताः! स्वस्ति वोऽस्तु। यज्ञकार्यं सिध्दं कृत्वा सिध्दाश्रमाद् गङ्गाया उत्तरे तीरे हिमवत्पर्वतमहं गमिष्यामि। इत्युक्त्वा श्रेष्ठं सिध्दाश्रमं प्रदक्षिणं कृत्वा स उत्तरदिशमुद्दिश्य प्रययौ। व्रजन्तं तं मुनिवरं वेदाध्ययनसंपन्नाः शतेन शकटैरनुसस्रुः। सिध्दाश्रमनिवासिनो मृगपक्षिगणाश्च तं महात्मानमनुजग्मुः। दूरमध्वानं गत्वा मुनिगणा अस्तं गच्छति सूर्ये शोणतीरे सर्वे एकत्र वासं चक्रुः। सूर्यास्तमयानन्तरं ते स्नात्वा अग्निहोत्रकार्यं निर्वर्त्य विश्वामित्रं पुरस्कृत्य निषेदुः। सलक्ष्मणो रामो मुनीनभिपूज्य विश्वामित्राभिमुखमुपविवेश। ततो रामः कुतूहलयुतो विश्वामित्रं पप्रच्छ। भगवन्! समृध्दवनशोभितोऽयं

देशः कः? तत्त्वतो वक्तुमर्हसि। रामप्रश्नेन प्रेरितो विश्वामित्रस्तस्य देशस्य समस्तं वृत्तान्तं कथयामास।

३१

ब्रह्मणः पुत्रो महातपा महात्मा कुशो नामासीत्। स विदर्भराजपुत्र्यां स्वतुल्यांश्चतुरः पुत्रान् जनयामास। ते कुशाम्बः कुशनाभः आधूर्तरजसो वसुश्च। दीप्तियुक्तान् महोत्साहान् धर्मिष्ठान् सत्यवादिनस्तान् पुत्रान् क्षत्रधर्मचिकीर्षया कुश उवाच। पुत्राः! प्रजापालनं क्रियताम्। तेन पुष्कलं धर्मं प्राप्स्यथ। कुशस्य वचनं श्रुत्वा लोकश्लाघिताश्चत्वारश्च पुराणि निर्ममुः। कुशाम्बः कौशाम्बीं पुरीं कुशनाभो महोदयमाधूर्तरजसो धर्मारण्यं वसुर्गिरिव्रजं च चक्रुः। अयं भूभागो महात्मनो वसोरस्ति। अस्य परितः पञ्च महाशैलाः प्रकाशन्ते। रम्या प्रसिध्दा मगधदेशभवा शोणनदी मगधदेशमाययौ। सा पञ्चानां शैलानां मध्ये मालेव शोभते। सैषा शोणनदी वसोरस्ति। सा पूर्वोत्तराभिमुखं प्रसरति। तस्यास्तीरप्रान्तेषु सुक्षेत्राणि सस्यपङ्क्तयश्च सन्ति। कुशनाभो घृताच्यामुत्तमं कन्याशतं जनयामास। ता यौवनवत्यो रूपवत्यः स्वलङ्कृताश्च प्रावृषि तटित इवोद्यानभूमिमागम्य गायन्त्यो नृत्यन्त्यो वादयन्त्यश्च परममामोदं जग्मुः। सर्वाङ्गसुन्दर्यः अप्रतिमरूपा उद्यानभूमिमागम्य मेघान्तरे तारा इव चकासाञ्चक्रुः। सर्वगुणसंपन्ना रूपयौवनसंयुतास्ता दृष्ट्वा सर्वव्यापी वायुरिदमब्रवीत्। अहं सर्वा वः कामये। मम भार्या भविष्यथ। मानुषो भावस्त्यज्यताम्। (देवाङ्गनावद्) दीर्घमायुरवाप्स्यथ। अप्रतिहतकर्मणो वायोस्तद् वचनं श्रुत्वा अपहस्य कन्या ऊचुः। सुरोत्तम! सर्वेषां भूतानामन्तश्चरसि। सर्वा वयं तव प्रभावं जानीमः। किमस्मानवमन्यसे? वयं कुशनाभसुतास्त्वां (शापेन) स्थानात् च्यावयितुं समर्थाः। परन्तु तपो रक्षन्त्यस्तथा न कुर्मः। दुर्मते! सत्यवादिनं पितरमवमन्य+ स्वेच्छया

---

+ cr नावमन्यस्व धर्मेण। नावमन्य स्वधर्मेण इति पाठद्यः।

स्वयंवरं वयं न ग्रहीष्यामः। स कालो मा भवतु। पिता अस्माकं प्रभुःपरमं दैवतं च। यस्मै अस्मान् पिता दास्यति स नो भर्ता भंविष्यति। तद्वचनैः परमकोपनो वायुस्तासां सर्वावयवान् प्रविश्य बभञ्ज। वायुना भग्नास्ताः कन्याः पितुर्गृहं विविशुः। भग्नास्ता दृष्ट्वा संभ्रान्तो राजा इदमब्रवीत्। पुत्र्यः! किमिदम्? को धर्ममवमन्यते? केन कुब्जाः कृता वेष्टमाना न प्रतिभाषध्वे? अतः सर्व कथ्यताम्।

३२

कुशनाभस्य तद् वचनं श्रुत्वा शिरोभिस्तस्य चरणौ स्पृष्ट्वा कन्या ऊचुः। सर्वव्यापी वायुरमङ्गलमार्गमवलम्ब्यास्मान् प्रधर्षयितुमिच्छति। तस्य धर्मदृष्टिर्नास्ति। सोऽस्माभिरुक्तः। भद्रं ते। वयं पित्रधीनाः स्मः। न स्वच्छन्दाः। पितृद्वारास्मान् वृणीष्व। यदि स नो दास्यति तर्हि वयं ते भविष्यामः। इति।परन्तु तेन पापलग्नेनास्मद्वचनमस्वीकुर्वता वायुना एवं भाषमाणा वयं भृशं पीडिताः। तच्छ्रुत्वा परमधार्मिको राजा अत्युत्तमं कन्याशतं प्रत्युवाच। क्षमावतां कर्तव्यमनुसृत्य यद् भवतीभिः क्षान्तं तत् सुमहत् कृतम्। ऐकमत्यं प्राप्य मम कुलगौरवं च रक्षितम्। स्त्रीणां पुरुषाणां वा क्षमैव भूषणम्। रूपैश्वर्यगर्वितानां सुराणां क्षमा दुष्करैव। (अप्सरःपुत्रीभिरपि भवतीभिः) एकरूपेण क्षमा प्रदर्शिता। क्षमैव दानं यज्ञः सत्यं यशो धर्मश्च। क्षमायां सर्वं जगन्निष्ठितमस्ति। इत्युक्त्वा राजा कन्या अन्तःपुरं प्रेषयामास। पश्चान्मन्त्रिभिः सह कन्याप्रदानं प्रति मन्त्रयामास। प्रतिपादनविषये देशकालौ वरस्य सदृशत्वं च विचारितवान्। एतस्मिन् काले चूली नाम शुभाचारो नैष्ठिकब्रह्मचारी वेदोक्तं तपश्चचार। तपस्यन्तं तं सोमदा नाम गन्धर्वी ऊर्मिलातनया अनुग्रहार्थं सेवते स्म। सा तस्य शुश्रूषणपरायणा प्रणतोवास। स च तस्यास्तुष्टोऽभवत्। सुकाले प्राप्ते स तां प्रोवाच। तव शुभमस्तु।तुष्टोऽस्मि। ब्रूहि किं

ते प्रियं करोमि। तदा गन्धर्वी परमप्रीता मधुरस्वरेण प्राह। त्वं ब्रह्मतेजश्शाली महातपा ब्रह्मभूतोऽसि। ब्रह्मज्ञानेन तपसा युक्तं धार्मिकं पुत्रं त्वत्तोऽहमिच्छामि। अहमपतिरस्मि। त्वां सेवमानाया मम तपोबलेन पुत्रं दातुं प्रार्थये। तस्याः प्रसन्नो ब्रह्मर्षिश्चूली स्वमनःकल्पितं सुतं ब्रह्मदत्तनामानं तस्या ददौ। यदा कुशनाभः स्वपुत्रीविवाहविचारपर आसीत् तदायं ब्रह्मदत्तो राजा बभूव। देवराजो दिवमिव ब्रह्मदत्तः परया लक्ष्म्या काम्पिल्यां पुरीमध्यवसत्। स कुशनाभः कन्याशतं ब्रह्मदत्ताय दातुं मतिं चकार। स ब्रह्मदत्तमाहूय महाप्रीतचित्तेन कन्याशतं ददौ। देवपतितुल्यो ब्रह्मदत्तो यथाक्रमं तासां पाणिग्रहणं चकार। स्पृष्टमात्रे तदा पाणौ शतं कन्या विकुब्जा नीरोगाः परमया शोभया युक्ताश्च बभूवुः। वायुना मुक्ताः सुता दृष्ट्वा कुशनाभः परमसंहृष्टो बभूव। कृतोद्वाहं ब्रह्मदत्तं भार्याभिः पुरोहितैश्च सह स्वराज्यं प्रेषयामास। सोमदा च पुत्रस्य योग्यविवाहं दृष्ट्वा स्नुषाः प्रत्यनन्दत्।

३३

विवाहानन्तरं ब्रह्मदत्ते गते अपुत्रः कुशनाभः पुत्रलाभाय पुत्रेष्टिं चकार। यज्ञे क्रियमाणे ब्रह्मसुतः कुशः कुशनाभमुवाच। पुत्र! तव सदृशः सुधार्मिकः पुत्रस्ते भविष्यति। गाधिं पुत्रं प्राप्स्यसि तेन लोके शाश्वतीं कीर्तिं च। एवं कुशः कुशनाभमुक्त्वा आकाशं प्रविश्य शाश्वतं ब्रह्मलोकं जगाम। अथ कस्यचित् कालस्य कुशनाभस्य परमधर्मिष्ठो गाधिरिति पुत्रो जज्ञे। परमधार्मिको गाधिर्मम पिता। कुशवंशप्रसूतः कौशिकोऽस्मि। मम पूर्वजा भगिनी सुव्रता नाम्ना सत्यवती ऋचीकाय दत्ता। भर्तारमनुवर्तिनी सा सशरीरा स्वर्गं गता। परमोदारा सा महानदी कौशिकी च प्रवृत्ता। मम भगिनी लोकहिताय हिमालयमाश्रित्य नदीरूपेण प्रवहति। सा पुण्यसलिला दिव्या नदी रमणीयास्ति। भगिन्याः कौशिक्याः

स्नेहयुक्तोऽहं नियममाश्रित्य हिमवत्पार्श्वे सुखं वसामि। पुण्यमयी सत्यवती सत्ये धर्मे च प्रतिष्ठिता। परमसौभाग्यशालिनी पतिव्रता सात्र सरितां वरायाः कौशिक्या रूपेण विद्यते। यागनियमात्तां हित्वा सिध्दाश्रममहमागतः। तव शक्त्या सिध्दोऽस्मि। शोणनदीतटदेशं प्रति तव प्रश्नस्योत्तरं मया कथितम्। राम! तत्संबध्दा मम वंशस्य चोत्पत्तिः कथिता। मयि कथाः कथयति अर्धरात्रो गतः। निद्रां प्राप्नुहि। तव भद्रमस्तु। निद्राभावान्मार्गे नो विघ्नो मा भवतु। सर्वे तरवो निष्पन्दाः सन्ति। मृगपक्षिणो निलीनाः। रात्र्यास्तमसा दिशो व्याप्ताः। शनैः सन्ध्या अपगता। नक्षत्रैरश्विन्यादितारागणैश्च ज्योतिर्भिरावृतं नभो नेत्रपूर्णमिव भाति। लोकतमो नुदन् प्राणिनां मनांसि प्रभया ह्लादयन् शशी उत्तिष्ठति। निशासंचारशीला यक्षराक्षससंघा रौद्राः पिशिताशनाश्च ततस्ततः प्रसरन्ति। इत्युक्त्वा विश्वामित्रो विरराम। सर्वे मुनयः साधु साधु इति तं प्रशशंसुः। लक्ष्मणसहितो रामः किञ्चिद्विस्मितो मुनिश्रेष्ठं प्रशंस्य निद्रामध्यगच्छत्।

३४

महर्षिभिः सह शोणतीरे उषित्वा विश्वामित्रः प्रभाते उक्तवान्। राम! निशा सुप्रभाता। प्रातःसंध्या प्रवर्तते। उत्तिष्ठ। तव भद्रमस्तु। गमनाय सज्जो भव। तद् वाक्यं श्रुत्वा रामः पौर्वाह्णिकीं क्रियां निर्वर्त्य गमनमभिलषन् इदमुवाच। शुभजलः पुलिनमण्डितोऽयं शोणः अगम्भीरः। कतरेण मार्गेण संतरिष्यामः? विश्वामित्र उवाच। मया निश्चितो मार्गो येन महर्षयो यान्ति।(नदं तरन्तः) ते दूरमध्वानं गत्वा अर्धदिवसे मुनिसेवितां श्रेष्ठां नदीं जाह्नवीं ददृशुः। हंससारससेवितां पुण्यजलां तां दृष्ट्वा रामलक्ष्मणाभ्यां सह सर्वे मुनयो मुमुदिरे। तस्यास्तीरे आवासं चक्रुः। ते स्नात्वा यथाशास्त्रं पितृदेवताः संतर्प्याग्निहोत्राणि हुत्वामृततुल्यं हविः प्राश्य विश्वामित्रं परिवार्य शुचौ जाह्नवीतीरे उपविविशुः। तदा

संप्रहृष्टमना रामो विश्वामित्रमब्रवीत्। भगवन्! त्रिमार्गगाया गङ्गानद्या वृत्तान्तं श्रोतुमिच्छामि। सा कथं त्रैलोक्यमाक्रम्य समुद्रं गता? रामवाक्येन प्रेरितो विश्वामित्रो गङ्गाया जन्म वृध्दिं च कथयितुमुपचक्रमे। पर्वतराजो हिमवानस्ति यो धातूनां महानाकरः।तस्याप्रतिमरूपं कन्याद्वयमस्ति। मेरुदुहिता सुन्दरी मेना नाम हिमवतः प्रिया पत्नी अस्ति। तस्यां हिमवतो द्वे पुत्र्यौ स्तः। ज्येष्ठा गङ्गा द्वितीया उमा च। ज्येष्ठां गङ्गां सर्वे सुराः स्वप्रयोजनार्थं हिमवन्तं ययाचिरे। धर्ममतिर्हिमवान् लोकपावनीं स्वच्छन्दमार्गगां तनयां गङ्गां त्रैलोक्यहितमिच्छन् देवेभ्यो ददौ। कृतार्था देवा गङ्गां प्रतिगृह्य जग्मुः। अन्या शैलदुहिता महातपस्विनी उग्रं व्रतं गृहीत्वा तपस्तताप। उग्रतपस्विनीं सुतामुमां लोकनमस्कृतां हिमवान–प्रतिरूपाय रुद्राय ददौ। सरितां श्रेष्ठा गङ्गा देवी उमा च लोकपूजिते हिमवतो द्वे सुते स्तः। कथं त्रिपथगा नदी प्रथमं खं गता तद् राम ते आख्यातम्।

३५

मुनेः कथनमभिनन्द्य रामलक्ष्मणावूचतुः। ब्रह्मन्! परमं धर्मयुक्तमिदं त्वया कथितम्। देवलोके मनुष्यलोके च हिमवतो ज्येष्ठसुताया यद् वृत्तं तत् कृपया कथय यतस्त्वं पूर्ववृत्तानि जानासि। लोकपावनी गङ्गा केन हेतुना त्रीन् मार्गान् पावयति? कथं सा त्रिपथगेति विश्रुता? तिसृभिर्धारा–भिस्त्रिषु लोकेषु कानि कानि कार्याणि करोति? रामेणैवं पृष्टो विश्वामित्र ऋषिमध्ये तां कथां निखिलेन कथयामास। पुरा शङ्करः कृतपरिणयो देवीमुमां सस्पृहं दृष्ट्वा मैथुनायोपचक्रमे। तथा दिव्यं वर्षशतमगमत्। उमायां तस्य पुत्रो नासीत्। ततः पितामहप्रमुखा देवा यो महान् प्राणी उमायामुत्पत्स्यते कस्तं सहिष्यते इति समुद्विग्ना बभूवुः। सर्वे शिवमभिगम्य प्रणिपत्याब्रुवन्। देवदेव! त्वं लोकहिते रतः। सुरास्त्वां प्रणिपतन्ति। तेषां

प्रसीद। तव तेजो लोका न धारयिष्यन्ति। देव्या सह ब्राह्मं तपश्चर। त्रैलोक्यहितार्थं तेजस्तवैव तेजसि धारय। देवानां वचनं श्रुत्वा शिवो बाढमित्युक्त्वा पुनरुवाच। हे सुराः! उमया सह तेजो मम तेजस्येव धारयिष्यामि। पृथिवी सुखमधिगच्छतु। यदिदं मम वीर्यं स्थानात् क्षुभितं कस्तद् धारयिष्यति? सुरसत्तमा ब्रुवन्तु। देवाः प्रत्यूचुः। यत्तेजः क्षुभितं तद् धरा धारयिष्यति। एवमुक्तः शिवः स्वतेजो महीतले प्रमुमोच। तत्तेजसा सगिरिकानना पृथिवी व्याप्ता। पुनर्देवा हुताशनमूचुः। वायुसमन्वितस्त्वं तन्महत्तेजः प्रविश। एवं कृते तत्तेजः अग्निना व्याप्तं श्वेतपर्वतः संजातः। पावकादित्यसन्निभं दिव्यं शरवणं चैव संजातं यत्र महातेजाः कार्तिकेयः अग्निसंभवः संजातः। तदोमां शिवं च ऋषिगणैः सह देवाः प्रीत्या पूजयामासुः। तदा समन्युः शैलसुता सर्वान् देवानशपत्। पुत्रकाम्यया संगताहं यस्मान्निवारिता तस्मात् स्वेषु दारेषु अपत्यं नोत्पादयितुमर्हथ। अद्यप्रभृति युष्माकं पत्न्यः असंतानाः सन्तु। सुरानेवं शप्त्वोमा भूमिं चाशपत्। अवने! नैकरूपा त्वं बहूनां भार्या भविष्यसि। महादुर्मते! मम पुत्रमनिच्छन्ती त्वं मत्क्रोधकलुषिता पुत्रकृतां प्रीतिं न प्राप्स्यसि। उमाशापात् सर्वांस्तान् व्रीडितान् दृष्ट्वा महेश्वरः पश्चिमां दिशं जगाम। हिमवत्पर्वतोत्तरभागे कस्मिंश्चिच्छिखरे देव्या उमया सह महेश्वरस्तप आतिष्ठत्। अयं हिमवत्पुत्र्या उमाया वृत्तान्तः कथितः। सहलक्ष्मणो गङ्गाया उत्पत्तिकथां शृणु।

३६

पुरा देवे शिवे तपस्यति ऋषिगणसहिता देवाः सेनापतिमभिलषन्तः पितामहमुपागमन्। अग्निं पुरस्कृत्य गता इन्द्रसहिता देवाः पितामहं प्रणिपत्य शुभं वाक्यमब्रुवन्। भगवन्! पुरा त्वया यो नः सेनापतिर्दत्तः स शिव उमया सह परमे तपसि लग्नः। हे उपायज्ञ! लोकहितमिच्छन्

अनन्तरकार्यं कुरु। त्वमेव नः परमा गतिः। सुराणां वचः श्रुत्वा ब्रह्मा तान् मधुरैर्वाक्यैः सान्त्वयन्निदमब्रवीत्। यतः शैलपुत्र्या उक्तं ततो यूयं स्वपत्नीषु संतानं न जनयिष्यध्वे। तस्या वचनममोघं सर्वथा सत्यमेव। किन्तु अस्यामाकाशगङ्गायामग्निः पुत्रं देवानां सेनापतिं जनयिष्यति। गङ्गा स्वभगिन्याः पुत्रमङ्गीकरिष्यति। उमायाश्च तद् बहुमतं भविष्यति। अत्र सन्देहो नास्ति। तद् वचनं श्रुत्वा कृतार्थाः सर्वे सुराः प्रणिपत्य पितामहमपूजयन्। धातुमण्डितं कैलासं पर्वतं ते+ गत्वा पुत्रोत्पत्त्यर्थं वह्निं नियोजयामासुः। हे हुताशन! देवकार्यमिदं समाचर। महेश्वरस्य तेजः शैलसुतायां गङ्गायामुत्सृज। तदाग्निर्देवतानां प्रतिश्रुत्य गङ्गामभ्येत्य देवि! गर्भं धारय। इदं देवतानामिष्टमित्युवाच। तद् वचः श्रुत्वा गङ्गा दिव्यं रूपं दधार। अग्निस्तस्या महिमानं दृष्ट्वा समन्ताद् व्याप्तवान्। ईश्वरतेजसा पावको देवीं गङ्गामभ्यषिञ्चत्। गङ्गायाः सर्वे अवयवास्तेन पूर्णा बभूवुः। ततो गङ्गा सर्वदेवपुरःस्थितमग्निमुवाच। विजृम्भितं तव तेजो धर्तुमशक्तास्मि। तत्तेजसा दह्यमानाहं भृशं व्यथितचेतना संवृत्ता। तदाग्निर्गङ्गामब्रवीत्। हिमवत्पर्वतमूले गर्भोऽयं स्थाप्यताम्। अग्निवचनं श्रुत्वा महातेजा गङ्गा अतिभास्वरं तं गर्भं स्वावयवेभ्य उत्ससर्ज। अस्या यत्तेजस्तप्तजाम्बूनदकान्ति निर्गतं भूमिं प्राप्तं च तस्मात् शुभं काञ्चनं श्वेतं रजतं चाजायेताम्। तत्तैक्ष्ण्याद् दूरस्थितेषु वस्तुषु ताम्रं कार्ष्णायसं चाजायेताम्। तत्तेजसो मलं त्रपु सीसकं च परिणतम्। तत्तेजो धरणीं प्राप्य नानाधातुरूपेणावर्धत। निक्षिप्तमात्रे गर्भे सर्वं पर्वतसंरूढं वनं तेजोभिरभिरञ्जितं सुवर्णमयमभवत्। यतः सुवर्णस्य तेजस्वि रूपं प्रकटितमभवत् ततस्तदाप्रभृति वह्निसमप्रभं सुवर्णं जातरूपमिति ख्यातम्। ततो युगपत्[2+]

---

[+] cr ते...देवताः। ग्राह्यः– ते... दैवताः। दैवतशब्दः पुल्लिङ्गोऽप्यस्ति दैवतानि पुंसि वेत्यनुशासनादिति गोविन्दराजः। मृच्छकटिकम् ९.१५ [2+] cr सहमरुद्गणाः। सह मरुद्गणाः इति पाठ्यः।

सेन्द्रा देवगणा जातस्य कुमारस्य क्षीरदानार्थं कृत्तिकाः समयोजयन्। ताः कृत्तिका अयमस्माकं सर्वासां पुत्रो भवेदिति समयं कृत्वा निश्चित्य च जातमात्रस्य क्षीरं ददुः। ततो देवताः सर्वा अयं पुत्रः कार्तिकेयस्त्रैलोक्यविख्यातो भविष्यति। संशयो नास्तीत्यब्रुवन्। देवतानां वचनं श्रुत्वा गर्भपरिस्रवात् स्कन्नं वह्निवत् परया लक्ष्म्या प्रकाशमानं तं शिशुं कृत्तिका अस्नापयन्। गर्भपरिस्रवात् स्कन्नं कार्तिकेयं स्कन्द इति देवा अब्रुवन्। ततः कृत्तिकानामुत्तमं क्षीरं प्रादुर्भूतम्। षण्णां तासां स्तनजं पयः कार्तिकेयः षडाननो भूत्वा युगपत् पपौ। एकदिनमात्रं क्षीरं पीत्वा स सुकुमारशरीरोऽपि स्वेन वीर्येण दैत्यसैन्यगणानजयत्। ततः अग्निप्रमुखाः सुरगणाः समेत्य तं सुरसेनानायकपदव्यामभ्यषिञ्चन्। राम! गङ्गाया एष कथाविस्तरो मया कथितः। कुमारसंभवश्चोक्तो येन श्रोतारो धन्याः पुण्याश्च भवन्ति।

३७

इमां कथामुक्त्वा विश्वामित्रो रामं पुनः प्राह। पूर्वमयोध्याधिपतिः सगरो नाम धर्मात्मा बभूव। अप्रजाः सन् स सन्तानार्थी बभूव। विदर्भदेशराजस्य दुहिता केशिनी नाम ज्येष्ठा सगरपत्नी बभूव। सा धर्मात्मा सत्यवादिनी चासीत्। अरिष्टनेमि (काश्यप) दुहिता अप्रतिमरूपा सुमतिर्नाम सगरस्य द्वितीया पत्नी बभूव। राजा सगरः पत्नीभ्यां सह हिमालयपर्वतस्य भृगुप्रस्रवणशिखरे तपस्तताप। वर्षशते पूर्णे तपसा सं-तोषितः श्रेष्ठः सत्यवादी मुनिर्भृगुः सगराय वरं प्रददौ। तव बहवः पुत्रा भविष्यन्ति। लोके अप्रतिमां कीर्तिं च प्राप्स्यसि। तवैका भार्या वंशविस्तारकरमेकं पुत्रं जनयिष्यति। अपरा षष्टिं पुत्रसहस्राणि जनयिष्यति। तथा भाषमाणं तं राजपत्न्यौ प्रसाद्य परमहर्षेणाञ्जलिं बध्द्वोचतुः। ब्रह्मन्! आवयोरेकः पुत्रः कस्या भविष्यति? का बहून् जनयिष्यति? एतच्छ्रोतुमिच्छावः। तव वचनं सत्यमस्तु। तयोस्तद् वचनं

श्रुत्वा परमधार्मिको भृगुरुत्तमां वाचमाह। अस्मिन् विषये स्वेच्छा क्रियताम्। वंशकर एकः पुत्रो वास्तु महाबलाः कीर्तिमन्तो महोत्साहा बहवो वा सन्तु। का वा कं वरमिच्छति? मुनिवचनं श्रुत्वा नृपसन्निधौ केशिनी वंशविस्तारकमेकं पुत्रं वव्रे। सुपर्णभगिनी सुमतिर्महोत्साहान् कीर्तिमतो षष्टिं पुत्रसहस्राणि ववार। ऋषिं प्रदक्षिणं कृत्वा शिरसा प्रणम्य सभार्यो राजा नगरं जगाम। कस्मिंश्चित् काले गते ज्येष्ठा केशिनी असमञ्जनामानं सगरात्मजं प्रासूत। सुमतिस्तु तुम्बाकारं पिण्डं जनयामास। पिण्डभेदात् षष्टिः पुत्रसहस्राणि विनिःसृतानि। धात्र्यस्तान् घृतपूर्णेषु कुम्भेषु समवर्धयन्। महता कालेन सर्वे ते पुत्रा यौवनं प्रतिपेदिरे। एवं दीर्घेण कालेन सगरस्य रूपयौवनशालिनः पुत्राः षष्टिः सहस्राण्यभवन्। सगरपूत्राणां ज्येष्ठः असमञ्जो बालान् गृहीत्वा नित्यं सरयूजले प्रक्षिप्य मज्जतस्तान् निरीक्ष्य प्रहसति स्म। तथा पौराणामहिते युक्तः स पित्रा पुरान्निर्वासितः। असमञ्जस्यांशुमान्नाम वीर्यवान् पुत्रः सर्वलोकसम्मतः सर्वस्य प्रियंवद आसीत्। ततो महता कालेन यष्टुं सगरस्य मतिर्जाता। एवं निश्चित्य वेदज्ञः सगर उपाध्यायैर्युक्तो यष्टुमारभत।

३८

कथान्ते रामो विश्वामित्रं पप्रच्छ। ब्रह्मन्! इमां कथां विस्तरेण श्रोतुमिच्छामि। मम पूर्वको राजा सगरः कथं यज्ञं कृतवान्? विश्वामित्रः प्रसन्न उवाच। महात्मनः सगरस्य कथाविस्तरः श्रूयताम्। शङ्करश्वशुरः पर्वतोत्तमो हिमवान् विन्ध्यपर्वतश्च तयोर्मध्ये अन्यपर्वताभावात् परस्पर-मभिवीक्षेते। तयोः पर्वतयोर्मध्ये स यज्ञःप्रवृत्तः। स देशो यज्ञकर्मणि प्रशस्तः। सगरस्य मते स्थितो दृढधन्वा महारथः अंशुमान् तद्यज्ञाश्वमनुससार। यजमानस्य तस्य यज्ञीयाश्वं वासवो राक्षसीं तनुं गृहीत्वा उक्थ्यदिवसे*

* महेश्वरतीर्थगोविन्दराजौ।

पर्वणि अपजहार। ह्रियमाणे तस्मिन्नश्वे सर्वे ऋत्विग्गणा यजमानमब्रुवन्। पर्वणि यज्ञीयोऽश्वो वेगेनापनीयते। काकुत्स्थ! हर्तारं जहि। हयं चोपनय। अयं यज्ञापराधः सर्वेषां नः अमङ्गलकरो भवेत्। तस्माद् यथा क्रतुरच्छिद्रो भवेत् तथा क्रियताम्। पार्थिवो यज्ञसदसि ऋत्विग्वचः श्रुत्वा षष्टिं पुत्रसहस्राण्युवाच। अयं क्रतुर्मन्त्रपूतैर्महात्मभिरधिष्ठितः। अतो राक्षसा इह नायान्तीति मम विश्वासः। ततः पुत्रकाः! भद्रमस्तु वः। गच्छत। विचिनुध्वम्। समुद्रवेष्टितां सर्वां पृथिवीमनुगच्छत। एकैक एकैकं योजनं भूमेर्दूरं परीक्षध्वम्। यावत् तुरगो दृश्यते तावन्मेदिनीं खनत। अश्वहर्तारं मृगयध्वम्। एषा ममाज्ञा। दीक्षितोऽहं पौत्रेण ऋत्विग्भिश्च सह तुरगदर्शनं यावदिह स्थास्यामि। पित्रा एवमाज्ञप्ता महाबला राजपुत्रा हृष्टमनसो महीतलं जग्मुः। योजनायामं योजनविस्तारं च धरणीतलमेकैकशो वज्रतुल्यैर्भुजैर्बिभिदुः। अशनिकल्पैः शूलैः सुदारुणैर्हलैश्च भिद्यमाना वसुमती ननाद। हन्यमानानां सर्पाणामसुराणां राक्षसानां निनदो बभूव। षष्टिं योजनानां सहस्राणि भूमिं रसातलीकृत्य बिभिदुः। एवं सगरात्मजाः पर्वतसम्बाधं जम्बूद्वीपं खनन्तः सर्वतः परिचक्रमुः। ततो देवा गन्धर्वैरसुरैः पन्नगैश्च सह संभ्रान्तमनसः पितामहमुपागमन्। परमसंत्रस्ता विषण्णवदनाश्च पितामहमूचुः। भगवन्! सगरात्मजैः सर्वा पृथिवी खन्यते। बहवो जलचारिणो हन्यन्ते। अयमस्माकं यज्ञध्वंसकः*। अनेनाश्वोऽपनीयते इति सगरात्मजाः सर्वभूतानि निघ्नन्ति।

३९

देवतानां वचः श्रुत्वा भगवान् पितामहः सुसंत्रस्तान् जननाशकसगरपुत्र-बलमोहितान्[2*] तान् प्रत्युवाच। इयं समस्ता भूमिर्यस्यास्ति स वासुदेवः कापिलं रूपं गृहीत्वा धरामनिशं धारयति। (अतो भूमिर्विनश्यतीति चिन्ता न कार्या।) पृथिव्या निर्भेदः पुरातनकालादपि दृष्ट एव। अदीर्घजीविनां सगरस्य पुत्राणां विनाशो भविता। पितामहस्य वचः श्रुत्वा त्रयस्त्रिंशद् देवाः[3*]

---

* अयं यज्ञहनः इति पाठः। हन्तीति हनः पचाद्यच् इति गोविन्दराजः। [2*] एवं गोविन्दराजः [3*] अष्टौ वसव एकादश रुद्रा द्वादशादित्या अश्विनौ च।

परमहर्षेण यथागतं तथा जग्मुः। सगरपुत्रैः खन्यमानायां पृथिव्यां भिद्यमानायां निर्घातसमो महास्वनः प्रादुरासीत्। इत्थं महीं भित्वा सर्वत्र परिक्रम्य च सर्वे सागराः सहिता गत्वा पितरमवदन्। पितः! सर्वा भूमिः परिक्रान्ता। सत्त्ववन्तो देवदानवरक्षः पिशाचोरगकिन्नराः सूदिताः। अश्वो वा अश्वहर्ता वा न दृष्टः। किं करणीयमिति विचार्यताम्। तच्छ्रुत्वा सगरः कोपेनेदमुवाच। भूय एव वसुधातलं निर्भिद्य खनत। युष्माकं भद्रमस्तु। अश्वहर्तारं प्राप्य कृतार्था एव निवर्तध्वम्। पितुर्वचने स्थिताः सगरपुत्राः षष्टिः सहस्राणि भूमिं खनन्तो रसातलमभ्यद्रवन्। तं प्रदेशं खनन्तः पर्वतोपमं विरूपाक्षं नाम दिशागजं महीतलं धारयन्तं ददृशुः। पर्वतैर्वनैर्युक्तां समस्तां पृथिवीं विरूपाक्षो महागजः शिरसा धारयामास। यदा स महागजः अवयवसन्धिषु खेदाद्विश्रामार्थं शिरश्चालयति तदा भूमिकम्पो भवति। सगरपुत्रास्तं दिशागजं प्रदक्षिणं कृत्वा पूजयित्वा पुनर्भित्वा रसातलं जग्मुः। ते पूर्वां दिशं भित्वा पुनर्दक्षिणां दिशं बिभिदुः। दक्षिणस्यामपि दिशि सुमहापर्वतोपमं महापद्मं नाम महागजं शिरसा भूमिं धारयन्तं ददृशुर्विस्मयं परमं च प्रापुः। तं प्रदक्षिणं कृत्वा सगरपुत्राः पश्चिमां दिशं बिभिदुः। पश्चिमायामपि दिशि महान्तमचलोपमं सौमनसं नाम दिशागजं ददृशुः। तं प्रदक्षिणं कृत्वा कुशलं पृष्ट्वा खनन्त उत्तरदिशं* प्रापुः। तस्यां दिशि हिमवत् पाण्डुरं भद्रेण वपुषा महीं धारयन्तं भद्रं नाम दिशागजं ददृशुः। तं प्रदक्षिणं कृत्वा सगरपुत्राः पुनश्च महीं बिभिदुः। ततः प्रागुत्तरां दिशं गत्वा ते रोषाद् बिभिदुः। तत्र ते सनातनं वासुदेवं कपिलरूपेण स्थितं ददृशुस्तस्य देवस्य समीपे चरन्तं हयं च। तं कपिलं यज्ञविघ्नकरं मत्वा क्रोधव्याकुलनेत्रास्ते तिष्ठ तिष्ठेति ब्रुवन्तस्तं प्रति दधवुः। त्वमस्माकं यज्ञीयं तुरगं हृतवानसि। दुर्मते!

---

*सोमवतीं दिशम् = कुबेरपालितामुत्तरदिशम्। सोमः= कुबेरः।

सगरात्मजानस्मानागतान् जानीहि इत्यूचुः। तच्छ्रुत्वा महारोषाविष्टः कपिलो हुंकारं कृतवान्। रघुनन्दन! तथा हुंकुर्वता अप्रमेयप्रभावशालिना कपिलेन सगरात्मजा भस्मीकृताः।

४०

बहुकालगतान् पुत्रान् विज्ञाय सगरः पौत्रमुवाच। शूरोऽधिगतविद्यस्तेजसा पूर्वैस्तुल्यश्चासि। पितृव्याणां गतिमन्विच्छ तथा तुरगापहर्तुश्च। भूमेरन्तर्वीर्यवन्ति महान्ति च सत्त्वानि स्युः। तेषां संहारार्थं खड्गं चापं च गृह्णीष्व। वन्दनीयान् वन्दस्व विघ्नकरान् जहि। सिध्दार्थः प्रत्यागत्य मम यज्ञं परिसमापय। महात्मना सगरेण एवमुक्तः अंशुमान् खड्गं धनुश्चादाय शीघ्रं जगाम। महात्मभिः पितृव्यैर्भूमेरन्तः खातं मार्गं स प्रापद्यत। दैत्यदानवरक्षःपिशाचपतगोरगैः पूज्यमानं दिग्गजमपश्यत्। तं प्रदक्षिणं कृत्वा कुशलं पृष्ट्वा पितृणामश्वहर्तुश्च समाचारं पप्रच्छ। अंशुमतो वचः श्रुत्वा प्रीत्या दिग्गज आह। हे आसमञ्ज! सहाश्वस्त्वं कृतार्थः शीघ्रमेष्यसि। तच्छ्रुत्वा स सर्वान् दिशागजान् क्रमश एवमेव पप्रच्छ। सर्वैस्तैः पूजितः सहयो निवर्तिष्यसे इति प्रत्युक्तः। ततः स शीघ्रगत्या यत्र पितृव्या भस्मीकृतास्तत्र जगाम। सः अंशुमान् पितृव्याणां वधेन सुदुःखितः परमार्तश्चुक्रोश। दुःखेन रुदन्स यज्ञीयं हयं च समीपे ददर्श। स तेषां जलक्रियां कर्तुकामः सलिलार्थी जलाशयं नापश्यत्। तदा निपुणां दृष्टिं प्रसार्य पितृव्याणां मातुलं खगपतिमनिलोपमं गरुत्मन्तमपश्यत्। वैनतेयस्तमब्रवीत्। महात्मन्! मा शुचः। लोकसम्मतस्ते पितृव्याणां वधः। महाबला इमे अप्रमेयप्रभावेण कपिलेन दग्धाः। प्राज्ञ! लौकिकं जलमेषां दातुं नार्हसि। हिमवतो ज्येष्ठदुहिता गङ्गास्ति। लोकपावनी सा भस्मराशीकृतानेतान् पावयिष्यति। लोकप्रियया गङ्गया क्लिन्नमिदं भस्म षष्टिसहस्रसगरपुत्रान् स्वर्गं नेष्यति। महाभाग! अश्वं

संगृह्य गच्छ। पितामहस्य यज्ञं निर्वर्तय। सुपर्णवचनं श्रुत्वांशुमान् हयमादाय त्वरितं न्यवर्तत। दीक्षितं राजानमासाद्य यथावृत्तं सुपर्णवचनं च न्यवेदयत्। घोरां तां वार्तां श्रुत्वा (दुःखितः) सगरः कल्पोक्तप्रकारेण यथाविधि यज्ञं निर्वर्तयामास। यज्ञं समाप्य स्वपुरं जगाम। बहु विचार्यापि गङ्गाया आगमे निश्चयं स न प्राप। महतापि कालेन निश्चयमप्राप्य महात्मा सगरस्त्रिंशद्वर्षसहस्राणि राज्यं कृत्वा दिवं गतः।

४१

कालधर्मं गते सगरे मन्त्रिणः प्रजाश्च सुधार्मिकमंशुमन्तं राजानं रोचयामासुः। अंशुमान् महान् राजा बभूव। तस्य पुत्रो दिलीप इति विश्रुतो महानासीत्। राज्यं दिलीपे समावेश्य रम्ये हिमवच्छिखरे अंशुमान् कठोरं तपस्तताप। द्वात्रिंशत्सहस्राणि वर्षाणि तपस्तप्त्वा महायशा अंशुमान् स्वर्गं लेभे। महातेजा दिलीपः पितामहवधवृत्तान्तं श्रुत्वा दुःखपीडितया बुध्द्या निश्चयं न प्राप। कथं गङ्गावतरणं कार्यं कथं तेषां जलक्रिया कथं च तान् तारयेयमिति सततमचिन्तयत्। एवं नित्यं चिन्तयतो धर्मबुध्द्या विख्यातस्य दिलीपस्य परमधार्मिको भगीरथ इति पुत्रो बभूव। बहुयज्ञकृद् दिलीपस्त्रिंशत्सहस्राणि वर्षाणि राज्यं चकार। पितॄणामुध्दरणं प्रति निश्चयमगत्वा राजा दिलीपो व्याधिना ममार। राज्ये पुत्रं भगीरथमभिषिच्य स्वार्जितपुण्यकर्मणा दिलीपो दिवं गतः। धार्मिको राजर्षिर्भगीरथः अनपत्यः सन्तानकामश्चाभवत्। स गोकर्णे* पञ्चाग्निमध्ये** मासाहारो जितेन्द्रिय ऊर्ध्वबाहुर्दीर्घं तपो बहुवर्षसहस्राणि चकार। तदा ब्रह्मा सुप्रीतः सुरगणैः सहागत्य तपस्यन्तं भगीरथमुवाच। त्वया तव सुतपसा प्रीतोऽस्मि। वरं वृणीष्व। भगीरथः कृताञ्जलिः स्थित्वा

---

*गोकर्णः अद्यतनगोमुखीगङ्गोत्रीसमीपे इति cr। **ग्रीष्मे परितः अग्नीन् चतुरः स्थापयित्वा सूर्यं पश्यन् यस्तपः करोति स पञ्चतपाः उच्यते।

ब्रह्माणमाह। भगवन्! यदि मे प्रीतोऽसि यदि च तपसः फलं विद्यते तर्हि सर्वे सगरात्मजा मत्तः सलिलं प्राप्नुवन्तु। गङ्गाजलेन क्लिन्ने तेषां भस्मनि मम प्रपितामहाः स्वर्गं गच्छेयुः। इक्ष्वाकूणां कुले जातस्य मम सन्ततिर्देया येनास्मत्कुलं नावसीदेत्। एष मे द्वितीयो वरोऽस्तु। एवमुक्तवन्तं भगीरथं ब्रह्मा मधुरां वाणीं प्रत्युवाच। भगीरथ! तव मनोरथो महानस्ति। इक्ष्वाकुकुलवर्धन! एवं भवतु। हिमवतो ज्येष्ठां सुतां गङ्गां धारयितुं हरो नियुज्यताम्। गङ्गायाः पतनं पृथिवी न सहिष्यते। तां धारयितुं शङ्करादन्यं न पश्यामि। एवं भगीरथमुक्त्वा गङ्गां च भगीरथमनुग्रहीतुमनुरोध्य मरुद्गणैः सह ब्रह्मा त्रिदिवं जगाम।

४२

गते ब्रह्मदेवे अङ्गुष्ठाग्रस्थितो भगीरथः संवत्सरं शिवमुपास्त। संवत्सरे पूर्णे उमापतिः राजानमब्रवीत्। अहं तव प्रीतोऽस्मि। तव प्रियं करिष्यामि। गङ्गां शिरसा धारयिष्यामि। ततः सर्वलोकनमस्कृता गङ्गा अतिमहद् रूपं दुस्सहं वेगं च कृत्वा आकाशात् शिवे शिवशिरसि पपात। परन्तु शिवजटामण्डले लग्ना मोहिता च निर्गममलब्ध्वा बहून् संवत्सरगणान् तत्रैवाभ्रमत्। अनेन* (गङ्गागर्वभङ्गेन) नितरां तोषितः शिवस्तां बिन्दुसरः** प्रति विससर्ज। गगनाच्छङ्करशिरस्ततो धरणिमागतं तीव्रशब्देन गङ्गाजलं व्यसर्पत्। तदा गगनाद् भूमिं गतां गङ्गां देवर्षिगन्धर्वयक्षसिध्दगणा व्यलोकयन्। नगराकारैर्विमानैः शीघ्रगमनैर्हयैर्गजैश्चागत्य देवास्तां द्रष्टुं स्थिताः। लोके अद्भुतं गङ्गापतनं दिदृक्षवो देवगणास्तथा समेयुः। विगतमेघं गगनं संपतद्भिर्देवगणैस्तेषामाभरणौजोभिश्च शतसूर्यमिवा–भाति स्म। नक्रोरगगणैश्चञ्चलैर्मीनैश्चाकाशं विद्युद्भिर्व्याप्त+ मिवाभवत्।

---

* अन्ये ग्रन्था अत्र तामपश्यन् पुनस्तत्र तपः परममास्थितः इति पङ्क्तिमधिकां पठन्ति। ** पवित्रो ह्रदः गङ्गोत्रीसमीपस्थ इति Cr

+ Cr विक्षिप्तैः। ग्राह्यः – विक्षिप्तम्।

सहस्रधा कीर्यमाणैः पाण्डरैः फेनैर्गगनं हंसगणैः शरन्मेघैश्चाकीर्णमिवादृश्यत। गङ्गा क्वचिद् द्रुततरं क्वचित् कुटिलं क्वचिदायतं क्वचिद् विनतं क्वचिदुत्तुङ्गं क्वचित् शनैः शनैश्च ययौ। क्वचित् सलिलेनैव सलिलमभ्याहतं मुहुरूर्ध्वं गत्वा वसुधातले पपात। तद् गङ्गाजलं शङ्करशिरसो भ्रष्टं भूमितले पतितं निर्मलं गतकल्मषं व्यरोचत। वसुधातलवासिन ऋषयो गन्धर्वाश्च शिवशिरःपतितं तोयं पवित्रमिति स्नानमाचमनं च चक्रुः। शापेन गगनाद् वसुधातलं ये प्रपतितास्ते तस्मिन् जले स्नात्वा गतकल्मषा बभूवुः। तेन तोयेन धूतपापाः पुनराकाशमाविश्य स्वान् लोकान् प्रतिपेदिरे। सर्वे जनास्तेन तोयेन मुमुदिरे। तस्मिन् स्नात्वा गतपापा बभूवुः। दिव्यं रथमास्थितो भगीरथः अग्रे प्रायात्। तं गङ्गा अन्वगात्। देवा ऋषयो दैत्यदानवराक्षसा गन्धर्वा यक्षाः किन्नरा उरगा अप्सरसः सर्वे जलचराश्च प्रीता गङ्गामन्वगमन्। यया दिशा भगीरथो जगाम तया सर्वपापविनाशिनी सरितां श्रेष्ठा गङ्गा जगाम। ततो यजमानस्य महात्मनो जह्नोर्यज्ञवाटं गङ्गा संप्लावयामास। तस्या गर्वेण क्रुध्दः स यज्वा सर्वं गङ्गाजलं पीत्वा अत्यद्भुतं चकार। ततो देवा गन्धर्वा ऋषयश्च सुविस्मितास्तं महर्षिं पूजयामासुर्गङ्गां च तस्य दुहितृत्वे निन्युः। तेन तुष्टो जह्नुस्तां कर्णाभ्यां पुनरसृजत्। तस्माद् गङ्गा जह्नुसुता जाह्नवी प्रोच्यते। पुनश्च गङ्गा भगीरथमनुगम्य सागरं प्राप्य तस्य कर्मसिध्यर्थं रसातलमुपजगाम। भगीरथो यत्नेन गङ्गामादाय भस्मकृतान् पितामहान् ददर्श। अथोत्तमं गङ्गासलिलं भस्मराशिं प्लावयामास। धूतपाप्मानस्ते स्वर्गं प्रापुः+।

४३

गङ्गयानुगतो भगीरथः समुद्रं गत्वा भूमेरधस्तलं प्रविवेश यत्र सगरपुत्रा भस्मसात्कृताः। गङ्गाजलेन भस्मन्याप्लाविते सर्वलोकप्रभुर्ब्रह्मा राजानमाह।

---

+ जह्नुवृत्तान्तो ग्राह्यः। नो चेद्र गङ्गया जाह्नवीनामार्थमन्यो ग्रन्थः अन्वेष्टव्यो भवेत्।

सगरस्य पुत्राः षष्टिसहस्राणि तारिता दिवं गताः। यावत् समुद्रजलं लोके स्थास्यति तावत् सगरपुत्राःस्वर्गे स्थास्यन्ति। इयं गङ्गा तवापि ज्येष्ठा पुत्री भविष्यति तव नामसम्बन्धिना नाम्ना लोके विश्रुता च भविष्यति। दिव्या गङ्गा त्रिपथगा भागीरथीति नामद्वयेन च प्रसिध्दा भवति। आकाशं पृथ्वीं पातालं त्रीन् पथः पवित्रीकुर्वती गच्छतीति सा त्रिपथगेति कथ्यते। सर्वेषां पितामहानां गङ्गाजलेनेह जलतर्पणं कुरु। तव पूर्वेषां च प्रतिज्ञां पूरय। तव पूर्वेणातियशसा धर्मवतां प्रवरेण सगरेणापि मनोरथ एष न प्राप्तः। तथैव लोकेऽप्रतिमतेजसांशुमता नेतुं गङ्गां प्रार्थयता च प्रतिज्ञा न पूर्णा। महर्षिणा मत्तुल्यतपसा क्षत्रधर्मस्थितेन दिलीपेन तव पित्रा गङ्गां नेतुं प्रार्थयता च प्रतिज्ञा पूरयितुं न शकिता+। सा प्रतिज्ञा त्वया पूरिता। लोके परमं यशः प्राप्तोऽसि। गङ्गावतरणकार्येण महतीं धर्मप्रतिष्ठां त्वं प्राप्तः। सदोचिते गङ्गाजले स्नात्वा त्वं शुचिर्भव पुण्यफलं च प्राप्नुहि। पितामहानां सर्वेषां सलिलक्रियां कुरुष्व। स्वस्ति तेऽस्तु। मम लोकमहं गमिष्यामि। त्वं च राजधानीं गच्छ। इत्युक्त्वा पितामहो देवलोकं जगाम। भगीरथश्च यथाविधि सगरपुत्राणां जलतर्पणं कृत्वा शुचिः स्वपुरं प्रविवेश। समृध्दार्थः स्वराज्यं प्रशशास। तं नृपमधिगम्य लोकः प्रमुमुदे नष्टशोको विगतज्वरः समृध्दार्थश्च बभूव। राम! गङ्गावतरणं विस्तरेण कथितम्। भद्रं ते। संध्याकालोऽतिवर्तते। धन्यं यशस्यमायुष्यं स्वर्ग्यं पुत्र्यं चेदमाख्यानं गङ्गावतरणं मया कथितम्।

४४

लक्ष्मणेन सह रामो विश्वामित्रस्य वचः श्रुत्वा परमाश्चर्यं प्राप्य ब्रह्मन्! गङ्गावतरणं सागरस्य पूरणं च परमं पुण्यमत्यद्भुतं त्वया कथितमित्यब्रवीत्। विश्वामित्रोक्तां कथां चिन्तयतो लक्ष्मणसमेतस्य

---

+ cr शङ्किता। ग्राह्यः – शकिता।

रामस्य सर्वा रात्रिर्जगाम। ततो विमले प्रभाते कृताह्निकं विश्वामित्रं राम उवाच। पूज्या रात्रिर्गता। परमं श्रोतव्यं श्रुतम्। इमां कथां चिन्तयतो मे रात्रिः क्षणवद् गता। नदीश्रेष्ठां पुण्यां त्रिपथगां तराम। पुण्यकर्मणामृषीणामेषा सुखास्तीर्णा नौर्भगवन्तं भवन्तमागतं ज्ञात्वा त्वरितमागता। तद् वचनं श्रुत्वा रामलक्ष्मणाभ्यां मुनिसंघेन च सह विश्वामित्रो गङ्गां ततार। उत्तरतीरं प्राप्य मुनिगणं संपूज्य गङ्गाकूलमवस्थाय विशालां पुरीं दूरात् ते ददृशुः। ततो विश्वामित्रो रामलक्ष्मणाभ्यां सह रम्यां स्वर्गोपमां विशालापुरीं ययौ। तत्र रामो बध्दाञ्जलिर्विश्वामित्रमुत्तमां विशालापुरीमुद्दिश्य पप्रच्छ। महामुने! विशालां महापुरीं को राजवंशः परिपालयति? श्रोतुमुत्कण्ठितोऽस्मि। तदा विश्वामित्रो विशालानगरस्य पूर्वेतिहासं कथयितुमुपचक्रमे। राम! इन्द्रस्य कथां तथास्य देशस्य वृत्तं च शृणु। पूर्वं कृतयुगे दितेः पुत्रा महाबला अदितेः पुत्रा वीर्यवन्तः सुधार्मिकाश्च बभूवुः। (अथवा दितेरदितेश्च पुत्रा महाबला वीर्यवन्तः सुधार्मिकाश्च बभूवुः।) तेषां महात्मनां कथं वयममरा निर्जरा रोगहीनाश्च स्यामेति बुध्दिर्बभूव। क्षीरसागरं मथित्वा रसं प्राप्स्याम इति विदुषां तेषां मतिर्जाता। एवं मथनं निश्चित्य ते मन्दरं मन्थानं वासुकिं योक्त्रं च कृत्वा ममन्थुः। ततो धन्वन्तरिः सुवर्चसः अप्सरसश्चोत्पेतुः। यतः अप्सु निर्मथनात् तद्रसाज्जातास्ततस्ता अप्सरसः कथिताः। सुवर्चसः अप्सरसः षष्टिः कोट्योऽभवन्। तासां परिचारिका असंख्येयाः। सर्वे देवदानवास्ता विवाहार्थं न प्रतिजगृहुः। अप्रतिग्रहणात् ताः साधारणा मताः। ततो वरुणस्य कन्या महाभागा वारुणी परिग्रहीतारं मृगयमाणोत्पपात। दितेः पुत्रा वरुणात्मजां न प्रतिजगृहुः। प्रशस्तां तामदितेः सुता जगृहुः। अग्रहणाद् दैतेया असुरा बभूवुः। ग्रहणादादितेयाः सुरा बभूवुः। वारुणीग्रहणात् सुराः प्रमुदिता बभूवुः। ततो हयश्रेष्ठ उच्चैश्रवा

उत्तममणिः कौस्तुभ उत्तमममृतं चोदतिष्ठन्। अथ तस्यामृतस्य कृते महान् कुलक्षयो बभूव। दैतेयादित्ययोस्तस्मिन् घोरे महायुध्दे अदितिपुत्रा दितिपुत्रानसूदयन्। दितिपुत्रान् निहत्य शक्रो मुदितो भूत्वा ऋषिचारणयुतान् लोकान् शशास।

४५

पुत्रेषु हतेषु परमदुःखिता दितिर्भर्तारं मरीचिपुत्रं काश्यपमुवाच। भगवन्! तव पुत्रैर्महाबलैः सुरैर्हतपुत्रास्मि। दीर्घतपसा उपार्जितं शक्रहन्तारं पुत्रमिच्छामि। अतोऽहं तपश्चरिष्यामि। कृपया गर्भं मे देहि। लोकनायकं+ शक्रहन्तारं मे कृपयानुजानीहि। तदा काश्यपः परमदुःखितां दितिं प्रत्युवाच। एवं भवतु। तपोधने! शुचिर्भव। युध्दे शक्रहन्तारं पुत्रं जनयिष्यसि। यदि शुचिर्भविष्यसि तर्हि वर्षसहस्रानन्तरं मत्तस्त्वं त्रैलोक्यविजयिनं पुत्रमवाप्स्यसि। इत्युक्त्वा स तां पाणिना ममार्ज। ततः स्वस्तीत्युक्त्वा तपसे ययौ। तस्मिन् गते परमहर्षिता दितिः कुशप्लवनं नाम क्षेत्रं गत्वा सुदारुणं तपस्तताप। तपस्यन्त्यास्तस्याः शक्र उत्तमगुणसंपत्त्या परिचचार। अग्निं कुशान् काष्ठं जलं फलं मूलं यच्चान्यदपि काङ्क्षितं सहस्राक्षस्तत्तस्या न्यवेदयत्। पादसंवाहनेन श्रमापनयनैश्च सर्वेषु कालेषु शक्रो दितिं परिचचार। अथ वर्षसहस्रे दशोने परमसंप्रीता दितिरिन्द्रमब्रवीत्। मम तपश्चर्यायां दशवर्षाणि शिष्टानि सन्ति। वीरवर! तव भद्रं भवतु। दशवर्षानन्तरं भ्रातरं द्रक्ष्यसि। पुत्र! यदा मम पुत्रस्त्वां जेतुमुत्सुको भविष्यति तदा तं शान्तं करिष्यामि। त्वां प्रति वैरभावमुत्सृज्य भ्रातृस्नेहयुक्तं करिष्यामि। ततस्त्वं तेन सह स्थित्वा निश्चिन्तस्तत्कृतत्रिभुवनविजयसुखं भोक्ष्यसि। एवमिन्द्रमुक्त्वा दितिर्मध्याह्नसमये पादौ शीर्षतः कृत्वा निद्रावशं जगाम। पादस्थाने शिरः शिरःस्थाने पादौ च कृतवतीं तामशुचिं

---

+ cr –ईदृशम्। ग्राह्यः – ईश्वरम्।

दृष्ट्वा शक्रो जहास मुमुदे च। सततसावधानः शक्रस्तस्याः शरीरविवरं प्रविश्य गर्भं सप्तधा बिभेद। शतधारेण वज्रेण भिद्यमानो गर्भ उच्चै रुरोद। ततो दितिरबुध्यत। मा रुदो मा रुद इति शक्रो गर्भमभिभाषमाणो रुदन्तमपि तं बिभेद। न हन्तव्यो न हन्तव्य इति दितिरब्रवीत्। ततः शक्रो मातुर्वचनगौरवान्निष्पपात। वज्रहस्त इन्द्रः प्राञ्जलिर्दितिमाह। देवि! पादयोर्मूर्धजान् कृत्वा अशुचिः सुप्तासि। अहं तदन्तरं लब्ध्वा रणे शक्रहन्तारं सप्तधाभिदम्। तन्मे क्षन्तुमर्हसि।

४६

सप्तधाकृते गर्भे परमदुःखिता दितिः सानुनयमिन्द्रमब्रवीत्। ममापराधादेव मम गर्भः सप्तधा विफलीकृतः। अत्र तवापराधो नास्ति। गर्भस्याचिन्तितपरिणामं संलक्ष्य ममेदं प्रियं कर्तुमिच्छामि। इमे सप्त गर्भखण्डाः सप्तानां मरुतां स्थानपाला भवन्तु। ममेमे दिव्यरूपाः पुत्रका मारुता इति नाम्ना प्रसिध्दा आकाशे वातस्कन्धाना * मधिष्ठानदेवता भूत्वा दिवि चरन्तु। एको ब्रह्मलोकं चरतु। अपर इन्द्रलोकं चरतु। तृतीयो वायुरिति ख्यातो दिवि चरतु। चत्वारस्तव शासनाद् देवभूता दिशः संचरिष्यन्ति। खण्डयन् मा रुदः इति तान् त्वमवोचः। त्वत्कृतेनैव नाम्ना ते मारुता इति विश्रुता भविष्यन्ति। तस्या वचनं श्रुत्वा शक्रो बध्दाञ्जलिरुवाच। यथा त्वयोक्तं तथा सर्वमेतद् भविष्यति। अत्र संशयो नास्ति। भद्रं ते। तव पुत्रा देवभूता विचरिष्यन्ति। एवं तौ मातापुत्रौ तपोवने निश्चयं कृत्वा कृतार्थौ स्वर्गं जग्मतुः। राम! एवं नः श्रुतम्। पुरा महेन्द्राध्युषितः स देश एष एव यत्र तपःसिध्दां दितिं स परिचचार। इक्ष्वाकोरलम्बुषायामुत्पन्नः परमधार्मिको विशाल इति पुत्रो बभूव। तेनास्मिन् स्थाने विशालेति पुरी कृतासीत्।

---

* आवहः प्रवहः संवहः उद्वहः विवहः परिवहः परावहश्च एते सप्तमरुतः वातस्कन्धाः कथ्यन्ते। एते नक्षत्रमण्डलानामाधारा इति विष्णुपुराणे इति गोविन्दराजः।

विशालस्य सुतो हेमचन्द्रो बभूव तस्य पुत्रः सुचन्द्रश्च। तस्य पुत्रो धूम्राक्षो धूम्राक्षपुत्रः सृञ्जयः सृञ्जयपुत्रः सहदेवः सहदेवस्य पुत्रः कुशाश्वः कुशाश्वस्य पुत्रः सोमदत्तः सोमदत्तस्य पुत्रः काकुत्स्थश्चाभवन्। काकुत्स्थस्य पुत्रः सुमतिः समरदुर्जयः सम्प्रतीमां पुरीमावसति। इक्ष्वाकोः प्रसादेन सर्वे विशालापुरनृपा दीर्घायुषो वीर्यवन्तः सुधार्मिकाश्च सन्ति। इहाद्य रजनीं सुखं वत्स्यामः। श्वः प्रभाते जनकं द्रक्ष्यामः। उपागतं विश्वामित्रं श्रुत्वा महातेजाः सुमतिः सोपाध्यायः सबान्धवः प्रत्युद्गम्य परमां पूजां कृत्वा कुशलं पृष्ट्वा प्राञ्जलिर्विश्वामित्रमब्रवीत्। महामुने! यतो मम विषयं संप्राप्तो दर्शनमदास्ततोऽनुगृहीतोऽस्मि। मदपेक्षया धन्यतरो नास्ति।

४७

परस्परसमागमे कुशलं पृष्ट्वा कथान्ते सुमतिर्मुनिं पप्रच्छ। इमौ कुमारौ देवतुल्यपराक्रमौ गजसिंहगमनौ शार्दूलवृषभोपमौ पद्मपत्रविशालाक्षौ खड्गतूणीधनुर्धरौ रूपेणाश्विनीकुमारतुल्यौ समुपस्थितयौवनौ देवलोकाद् यदृच्छया गां प्राप्तौ अमरतुल्यौ कौ कथं पद्भ्यामिह प्राप्तौ किमर्थं प्राप्तौ कस्य वा पुत्राविमौ? चन्द्रसूर्यावम्बरमिवेमं देशं भूषयन्तौ प्रमाणेङ्गितचेष्टितैः परस्परस्य सदृशौ दुर्गमे पथि वरायुधधरौ किमर्थं संप्राप्तौ? यथावत् श्रोतुमिच्छामि। तस्य तद् वचनं श्रुत्वा विश्वामित्रो रामलक्ष्मणयोः सिध्दाश्रमनिवासं राक्षसानां वधं च यथावृत्तं न्यवेदयत्। तच्छ्रुत्वा परमहर्षितो राजा परमावतिथी प्राप्तौ तौ दशरथपुत्रौ सत्काराहौं विधिवत् पूजयामास। सुमतेः परमसत्कारं प्राप्य तत्रैकां निशामुषित्वा राघवौ ततो मिथिलां जग्मतुः। जनकस्य शुभां पुरीं मिथिलां दृष्ट्वा विश्वामित्रादियः सर्वे मुनयस्तां प्रशशंसुः। मिथिलोपवने रामः पुराणं निर्जनं रम्यं चाश्रमं दृष्ट्वा विश्वामित्रं पप्रच्छ। भगवन्! शोभायुक्तमाश्रमतुल्यं मुनिवर्जितं

च किं न्विदम्? अयं कस्य पूर्वाश्रमः? एतच्छ्रोतुमिच्छामि। राघववचनमाकर्ण्य विश्वामित्रः प्रत्युवाच। राम! महात्मना कोपात् शप्तस्यास्याश्रमपदस्य तस्य च वृत्तं यथावत् कथयिष्यामि। शृणु। देवनिलयतुल्यः सुरैरपि सुपूजितोऽयमाश्रमः पूर्वं महात्मनो गौतमस्यासीत्। इह स पुरा अहल्यासहितो बहून् संवत्सरगणान् तप आतिष्ठत्। एकदा मुनिवियुक्ते आश्रमे अयमेवावकाश इति मत्वा शक्रो गौतममुनिवेषधरः अहल्यामाह। सुन्दरि! कामिन ऋतुकालं न प्रतीक्षन्ते। सुमध्यमे! त्वया सहाहं संगममिच्छामि। सा दुर्मेधा मुनिवेषेणागतं शक्रं विज्ञायापि देवराजगतया आसक्त्या संगममङ्गीचकार। संगमानन्तरं संतुष्टचित्ता सा प्राह। सुरश्रेष्ठ! तव वाञ्छा पूर्णास्ति। प्रभो! इतः शीघ्रं गच्छ। आत्मानं मां च सर्वदा रक्ष। मम मानस्य हानिर्मा भूत्। इन्द्रस्तु प्रहसन् अहल्यामब्रवीत्। सुश्रोणि! परितुष्टोऽस्मि। यथा आगतं तथा गमिष्यामि। एवमहल्यया संगम्य शक्रः पर्णशालाया निष्क्रम्य गौतमागमनं प्रति शङ्कितस्त्वरमाणो ययौ। तस्मिन्नेव क्षणे देवदानवदुर्धर्षं तपोबलसंपन्नं महामुनिं गौतमं तीर्थोदकपरिक्लिन्नमनलवद्दीप्यमानं गृहीतसमिधं सकुशमागच्छन्तं स ददर्श। तं दृष्ट्वा सुरपतिस्त्रस्तो विषण्णवदनश्च बभूव। मुनिवेषधरं दुराचारमिन्द्रं सदाचारसंपन्नो मुनिर्दृष्ट्वा रोषादब्रवीत्। दुर्मते! मम रूपं धृत्वा अकार्यमकरोः। ततस्त्वमफलो भविष्यसि। सरोषेण महात्मना गौतमेनैवमुक्तस्य सहस्राक्षस्य वृषणौ तत्क्षणाद् भूमौ पेततुः। तथा शक्रं शप्त्वा गौतमो भार्यां च शप्तवान्*। अतः परं बहुवर्षसहस्राणि त्वं वायुभक्षा निराहारा तपः कुर्वती भस्मशायिनी सर्वभूतानामदृश्या अस्मिन्नाश्रमे निवत्स्यसि। यदा दशरथात्मजो राम एतद् घोरं वनमागमिष्यति

---

* अत्र बुध्दिपूर्वकव्यभिचारस्य विधीयमानं प्रायश्चित्तं शापापदेशेनोच्यते इति गोविन्दराजः।

तदा पूता भविष्यसि। दुर्वृत्ते! आतिथ्येन तं संतोष्य लोभमोहविवर्जिता मुदा युक्ता मत्सकाशं पुनः प्राप्य स्वशरीरं धारयिष्यसि। दुराचारां पत्नीमेवमुक्त्वा गौतम इममाश्रमं त्यक्त्वा सिध्दचारणसेविते रम्ये हिमवच्छिखरे तपस्तताप।

४८

अथावृषणो भयसूचकमुखः शक्रः अग्निपुरोगान् ऋषिचारणसंघसमेतान् देवानब्रवीत्। महात्मनो गौतमस्य क्रोधमुत्पाद्य तपसो विघ्नं कुर्वता मया यत् सुरकार्यं कृतं तद् वः सर्वेषां ज्ञातमेव। तेनाहमफलः कृतोऽस्मि। अहल्या स्वपत्नी च तेन निराकृता। महता शापमोक्षेण मया तस्य तपः अपहृतम्। हे ऋषिचारणयुताः सर्वे सुरवराः! तस्मात् सुरसहायकरं मां सवृषणं कर्तुमर्हथ। शतक्रतोर्वचः श्रुत्वा अग्निप्रमुखा मरुद्गणयुताः सुराः पितृदेवानुपेत्योचुः। भवद्भ्य उपाहृतोऽयं मेषः सवृषणोऽस्ति। शक्रो वृषणरहितः कृतः। अतोऽस्य मेषस्य वृषणौ गृहीत्वा शीघ्रं शक्राय प्रयच्छत। अवृषणः कृतोऽपि मेषो भवतां तुष्टिं हर्षं च प्रदास्यति। ये मानवा अफलं मेषं दास्यन्ति ते चेष्टफलं लप्स्यन्ते। अग्नेर्वचनं श्रुत्वा समागताः पितृदेवा मेषवृषणावुत्पाटच सहस्राक्षे न्यवेदयन्। तदाप्रभृति पितृदेवा मेषानफलान् भुञ्जते यतो मेषाण्डौ शक्रे योजयामासुः। तदाप्रभृति गौतमतपःप्रभावेणेन्द्रो मेषवृषणः अभवत्। तस्माद् राम! पुण्यकर्मणो गौतमस्याश्रममागच्छ। देवरूपिणीं महाभागामहल्यां तारय। विश्वामित्रवचनानुसारेण लक्ष्मणसमेतो रामस्तमनुगम्याश्रमं प्रविवेश। स तपसा द्योतितप्रभां महाभागां लोकैः सुरासुरैरपि समागम्य दुर्निरीक्षां धात्रा प्रयत्ननिर्मितां दिव्यां मायामयीमिव स्थितां धूमावृतदीप्ताग्निशिखासदृशीं तुषारमेघावृतपूर्णचन्द्रप्रभातुल्यां जलमध्यप्रकाशमानसूर्यप्रभासदृशीमहल्यां ददर्श। गौतमवाक्येन सा रामदर्शनं यावत् त्रयाणां लोकानां दुर्निरीक्षा

बभूव। राघवौ तस्याः पादाभिवन्दनं चक्रतुः। गौतमवाक्यं स्मृत्वा सा तयोरातिथ्यं व्यदधात्। प्रसन्नचित्ता सा पाद्यमर्घ्यमातिथ्यं चार्पयामास। तौ च विधिवत् स्वीचक्रतुः। तदा देवदुन्दुभिनिःस्वनैः सह महती पुष्पवृष्टिः पपात। गन्धर्वाणामप्सरसां च महत् सम्मेलनं बभूव। तपोबलविशुध्दस्वरूपां गौतमेन सह वर्तमानामहल्यां देवाः साधुवादैः समपूजयन्। महातेजा गौतमश्चाहल्यां प्राप्य सुखीभूत्वा रामं विधिप्रकारेण संपूज्य तपस्तताप। रामश्च गौतमकृतां परमां पूजां विधिवत् प्राप्य ततो मिथिलां जगाम।

४९

ततो लक्ष्मणसहितो रामो विश्वामित्रमनुसृत्यैशानदिशं गत्वा जनकस्य यज्ञवाटमुपजगाम। विश्वामित्रं तत्रोवाच। महाभाग! महात्मनो जनकस्य यज्ञसमृध्दिरुत्तमा विद्यते। नानादेशनिवासिनां वेदाध्ययनशालिनां ब्राह्मणानां बहूनि सहस्राणि वर्तन्ते। ऋषीणां निवासप्रदेशाश्च शकटीशतसंकुला दृश्यन्ते। अस्माकं वासयोग्यं स्थानं निश्चीयताम्। तदा विश्वामित्रो विविक्ते जलयुते प्रदेशे निवेशं चकार। मुनिश्रेष्ठं विश्वामित्रमागतं श्रुत्वा नृपतिः पूज्यं पुरोहितं शतानन्दं पुरस्कृत्य विनयेनार्घ्यं गृहीत्वा प्रत्युज्जगाम+। महात्मान ऋत्विजश्चार्घ्यमादाय सत्वरं विश्वामित्राय धर्मेण मन्त्रपुरस्कृतं ददुः। विश्वामित्रस्तां सर्वां पूजां प्रतिगृह्य राज्ञः कुशलं यज्ञस्य निर्बाधस्थितिं च पप्रच्छ। उपाध्यायपुरोहितयुक्तान् मुनींश्च कुशलप्रश्नं कृत्वा हर्षेण यथान्यायं सर्वैः सह समागच्छत्। ततो जनकः कृताञ्जलिर्मुनिश्रेष्ठं भगवन्! मुनिसत्तमैः सहासने आस्तामित्यभाषत। जनकस्य वचनं श्रुत्वा विश्वामित्रो निषसाद। पुरोधा ऋत्विजो राजा मन्त्रिणश्च निषेदुः। अथ राजा आसनस्थान् सर्वानभिलक्ष्य विश्वामित्रमब्रवीत्। अद्य भगवद्दर्शनाद् दैवतैर्मम यज्ञसमृध्दिः सफला कृता मया यज्ञफलं च

---

+ पङ्क्तिर्ग्राह्या- प्रत्युज्जगाम सहसा विनयेन समन्वितः।

प्राप्तम्। मुनिपुङ्गव! मुनिभिः सह मम यज्ञोपसदनं प्राप्तोऽसि। अतो धन्योऽस्मि। अनुगृहीतोऽस्मि। मम यज्ञो द्वादशाहे परिसमाप्यते इति ऋत्विज आहुः। तत्पश्चाद् भागार्थिनो देवान् द्रक्ष्यसि। मुनिवरमेवमुक्त्वा प्रहृष्टवदनो जनकः प्राञ्जलिः प्रयतश्च पुनः पप्रच्छ। महर्षे! इमौ कुमारौ कौ? देवतुल्यपराक्रमौ गजसिंहगती शार्दूलवृषभतुल्यौ पद्मपत्रविशालाक्षौ खड्गतूणीधनुर्धरौ रूपेणाश्विनतुल्यौ प्राप्तयौवनौ देवलोकाद् यदृच्छया गां प्राप्तौ देवाविव भासमानावेतौ कथं पद्भ्यामिह प्राप्तौ? किमर्थं प्राप्तौ? एतौ कस्य संबन्धिनौ? वरायुधधरावेतौ चन्द्रसूर्यावम्बरमिवेमं देशं भूषयन्तौ कस्य पुत्रौ? प्रमाणेङ्गितचेष्टितैः परस्परस्य सदृशौ काकपक्षधरौ वीरौ कौ? मुनीन्द्र! यथावच्छ्रोतुमिच्छामि। तच्छ्रुत्वा विश्वामित्रस्तौ दशरथपुत्राविति न्यवेदयत्। रामलक्ष्मणयोः सिध्दाश्रमनिवासं राक्षसवधं रक्षस्सहस्रावृते मार्गे निर्भयागमनं विशालादर्शनमहल्यादर्शनं गौतमेन समागमं महाधनुषि जिज्ञासां कर्तुं मिथिलागमनं च कथयामास। एतत् सर्वं जनकाय निवेद्य विश्वामित्रो विरराम।

५०

तदा महातपस्वी गौतमस्य ज्येष्ठसुतः शतानन्दो महानन्दभरितो रामसंदर्शनेन परमविस्मितस्तौ नृपात्मजौ सुखासीनौ दृष्ट्वा विश्वामित्रमब्रवीत्। महामुने! अपि मम माता दीर्घकालतपस्विनी रामाय त्वया दर्शिता? अपि मम माता सर्वपूजार्हस्य रामस्यादरसत्कारं फलपुष्पादिभिरकरोत्? अपि मम मातुर्दुर्विधिना दुरनुष्ठितं तत् पुरातनं वृत्तं यथावद् रामाय कथितम्? अपि मम माता रामसंदर्शनानन्तरं मम पित्रा संयुक्ता? अपि रामो मम पित्रा पूजितः पश्चादिहागतः? अपि मम पितरं रामः शान्तेन मनसा संपूज्येहागतः? तच्छ्रुत्वा महामुनिर्विश्वामित्रस्तं प्रत्युवाच। महामुने! यन्मया कर्तव्यं तत् कृतम्। भार्गवेण रेणुकेव गौतमेनाहल्या संयोजिता।

विश्वामित्रवचनं श्रुत्वा शतानन्दो राममाह। दिष्ट्या विश्वामित्रेण सह प्राप्तोऽसि। महातेजा अयं विश्वामित्र ऊहातीतकर्मास्ति। तपः प्रभावेणायं ब्रह्मर्षिः। स्थाने त्वमेनं परमां गतिं वेत्सि। भुवि त्वत्तोऽन्यः कश्चन धन्यतरो नास्ति यतो महातपाः कुशिकपुत्रस्ते रक्षितास्ति। महात्मनः कौशिकस्य बलं चरित्रं च यथावत् कथयिष्यामि। तन्मे शृणु। एष बहुकालं धर्मात्मा शत्रुदमनो विद्यावान् प्रजाहितरतो राजा बभूव। प्रजापतिपुत्रः कुशो महीपतिरासीत्। कुशस्य पुत्रो धार्मिकः कुशनाभः। कुशनाभसुतो विश्रुतो गाधिः। गाधेः पुत्रो महामुनिर्विश्वामित्रः। एष बहुवर्षसहस्राणि धरापालनं राज्यशासनं चाकरोत्। कदाचिद् विश्वामित्रः सेनां योजयित्वा अक्षौहिणीपरिवृतो मेदिनीं परिचक्राम। स नगराणि राष्ट्राणि सरितो गिरीनाश्रमांश्च क्रमशो विचरन् वसिष्ठस्याश्रमपदमाजगाम यद् बहुविधपुष्पफलद्रुमयुतं नानामृगगणाकीर्णं सिध्दचारणसेवितं देवदानवगन्धर्वकिन्नरोपशोभितं प्रशान्तहरिणाकीर्णं पक्षिसंघनिषेवितं ब्रह्मर्षिगणसंकीर्णं देवर्षिगणसेवितं तपस्सिध्दिमद्भिरग्निकल्पैर्महात्मभिः सेवितं वायुभक्षैर्जलभक्षैः शीर्णपर्णाशनैः फलमूलाशनैर्दान्तैर्जितरोषैर्जितेन्द्रियैः ऋषिभिर्वालखिल्यैर्जपहोमपरायणैः सेवितं च। जयतां श्रेष्ठो महाबलो विश्वामित्रः अपरं ब्रह्मलोकमिव स्थितं वसिष्ठस्याश्रमपदं ददर्श।

५१

मुनिवरं वसिष्ठं दृष्ट्वा विश्वामित्रः परमप्रीतो विनयेन प्रणनाम। वसिष्ठस्तस्य स्वागतमुक्त्वा आसनं ददौ। उपविष्टाय तस्मै यथान्यायं फलमूलं समर्पयामास। वसिष्ठात् तां पूजां प्रतिगृह्य राजसत्तमो विश्वामित्रस्तं तपस्यग्निहोत्रे शिष्येषु लतावृक्षेषु च कुशलं पर्यपृच्छत्। वसिष्ठः सर्वत्र कुशलमुक्त्वा सुखोपविष्टं विश्वामित्रं पप्रच्छ। राजन्! कच्चित् ते कुशलम्? कच्चिद् धर्मेण रञ्जयन् राजधर्मानुसारेण प्रजाः

पालयसे? कच्चित् ते भृत्याः सुभृताः? कच्चित् शासने तिष्ठन्ति? कच्चित् ते सर्वे रिपवो विजिताः? कच्चित् ते बले कोशे मित्रेषु पुत्रपौत्रे च कुशलम्? विनयान्वितो विश्वामित्रः सर्वत्र कुशलं प्राह। धर्मिष्ठौ तौ सुचिरं कालं शुभाः कथाः कृत्वा परमेण हर्षेण परस्परमप्रीणयताम्। कथान्ते वसिष्ठो विश्वामित्रं सस्मितं प्राह। राजन्! तव बलस्य तव चातिथ्यं यथार्हं कर्तुमिच्छामि। ममाभ्यर्थनमङ्गीकुरु। त्वं प्रयत्नतः पूजनीयः अतिथिश्रेष्ठः। मया क्रियमाणां सत्क्रियां स्वीकुरु। वसिष्ठेनै-वमुक्तो महामतिर्विश्वामित्र आह। तव पूजावाक्येनैव ममातिथ्यं कृतम्। भगवन्! तवाश्रमे विद्यमानेन फलमूलेन पाद्येनाचमनीयेन भवद्दर्शनेन चाहं सत्कृतः। पूजार्हेण भवताहं सुपूजितः। संप्रति गमिष्यामि। मम नमस्कारं स्वीकुरु। मां स्नेहपूर्णेन चक्षुषा प्रेक्षस्व। एवं ब्रुवन्तं विश्वामित्रं धर्मात्मा महामतिर्वसिष्ठः पुनः पुनर्न्यमन्त्रयत। बाढम्। भगवतो यत् प्रियं तदस्तु इति गाधेयः अन्तत उवाच। विश्वामित्रेणैवमुक्तः प्रीतो मुनिश्रेष्ठो वसिष्ठश्चित्रवर्णां स्वां कामधेनुमाजुहाव। शबले! क्षिप्रमायाहि। मम वचः शृणु। सबलस्यास्य राजर्षेरुत्तमभोजनेन सत्कारं कर्तुं कृतनिश्चयोऽस्मि। मम निश्चयं त्वं कार्यरूपं गमय। हे कामधुक्! यस्य यस्य षड्रसेषु यद्यदभिरुचितं मम वचनमादृत्य तत्तत् सर्वं क्षिप्रमभिवर्ष। रसयुक्तान्नेन पानेन लेह्येन चोष्येण च संयुतं भोजनपदार्थानां निचयं सर्वं सृज। त्वरस्व।

५२

राम! बसिष्ठेनैवमुक्ता कामधुक् शबला यस्य यस्य यथेष्टं तथा कामान् विदधे। इक्षुमधुलाजमैरेयश्रेष्ठासवादिनानाविधोत्तमभक्ष्यपदार्थान् ससर्ज। उष्णोदनस्य पर्वतोपमा राशयः सूपा दधिप्रवाहा नानास्वादुरसषाडवानां पूर्णपात्राणि गुडेन कृतानि मिष्टानि च सहस्रशस्तत्राभवन्। इत्थं

वसिष्ठेनाभितर्पितं विश्वामित्रबलं सर्वं सुसंतुष्टं हृष्टं पुष्टं च बभूव। राजा विश्वामित्रश्च सान्तःपुरजनः सब्राह्मणपुरोहितो हृष्टः पुष्टश्चाभवत्। इत्थममात्यमन्त्रि* भृत्यैः सह पूजितो विश्वामित्रः परेण हर्षेण युक्तो वसिष्ठमाह। ब्रह्मन्! पूजार्हेण त्वयाहं पूजितः सुसत्कृतश्च। अहं किञ्चन वाक्यं वक्ष्यामि। हे वाक्यविशारद! तत् श्रूयताम्। गवां शतसहस्रेण मह्यं शबला दीयताम्। इयं गौः रत्नतुल्यास्ति। रत्नं ग्रहीतुं राजा अधिकारी भवति। तस्मात् शबलां मे देहि। हे द्विज! एषा धर्मतो ममैव। एवमुक्तो वसिष्ठो विश्वामित्रं प्रत्युवाच। अहं शतसहस्रेण कोटिशतैरपि गवां रजतस्य राशिभिरपि शबलां न ददामि। मत्सकाशादियं परित्यागं नार्हति। यथात्मवतः कीर्तिस्तथेयं शबला मह्यं शाश्वती। मम हव्यं कव्यं जीवननिर्वाहः अग्निहोत्रं भूतबलिर्होमः स्वाहाकारवषट्कारौ विविधा विद्याश्च सर्वं चास्यामायत्तमस्ति। यथार्थत इयं मम सर्वस्वं तुष्टिकरी च। इतोऽपि बहुभिः कारणैः शबलां तुभ्यं न दास्यामि। वसिष्ठेनैवमुक्तो विश्वामित्रः अत्यन्ताभिलाषाग्रहेणोवाच। स्वर्णकक्ष्यान् स्वर्णग्रैवेयान् स्वर्णाङ्कुशान् कुञ्जरान्+ चतुर्दशसहस्राणि ते ददामि। हिरण्मयान् चतुःश्वेताश्वयुजः किङ्किणीविभूषितान् रथान् अष्टशतानि ददामि। उत्तमजातीयानुत्तमदेशोत्पन्नान् महौजसो हयानेकादशसहस्राणि च ददामि। किञ्च नानाप्रकारवर्णाः वयःस्थाः गाः कोटिं ददामि। शबला मम दीयताम्। एवमुक्तो वशिष्ठः शबलां कथमपि न दास्यामीति प्राह। एतन्मूलमेव मम रत्नं धनं सर्वस्वं जीवितं च। दर्शयागः पूर्णमासयागः भूरिदक्षिणा यज्ञास्तथा विविधाः क्रियाश्चैतन्मूला एव। किं बहुभिर्व्यर्थोक्तिभिः? कामदोहिनीं न दास्ये।

---

* अमात्याः कर्मणि सहायाः। मन्त्रिणो मन्त्रसहाया इति गोविन्दराजः।

+ cr कुञ्जराणां ते। ग्राह्यः– कुञ्जरांस्तेऽहम्। एवमेव द्वे शते भद्रकांस्तथा। अयो २९.१६ रुक्मनिष्कसहस्रे द्वे षोडशाश्वशतानि च। अयो. ६४.१८. पञ्च दास्यः सहस्राणि सर्वाभरणभूषिताः। सीते परिचरिष्यन्ति भार्या भवसि मे यदि। अर. ४५.२७. ततः शतसहस्राणि द्विपेन्द्रान् हेमभूषितान्। महाभा (गीता) द्रोण. ७०, १८

५३

राम! यदा वसिष्ठः कामधेनुं न ददौ तदा विश्वामित्रस्तामाचकर्ष। राज्ञा बलान्नीयमाना शबला दुःखेन रुदती चिन्तयामास। दीना भृशदुःखिताहं राजभटैर्ह्रिये। किमहं महात्मना वसिष्ठेन परित्यक्तास्मि? पवित्रान्तः-करणस्य महर्षेः किं मयापकृतं येन धार्मिकोऽसौ भक्तामिष्टामनागसं मां त्यजति? इति सा चिन्तयित्वा पुनःपुनर्निःश्वस्य च राजभृत्यान् शतशो निर्धूयानिलवेगेन महात्मनो वसिष्ठस्य पादमूलं जगाम। रुदती क्रोशन्ती च शबला वसिष्ठस्याग्रतः स्थित्वा मेघदुन्दुभिरावेणेदमब्रवीत्। भगवन्! किमहं त्वया परित्यक्तास्मि यस्माद् राजभृता मां त्वत्सकाशान्नयन्ते। एवमुक्तो ब्रह्मर्षिर्दुःखितां स्वसारमिव शोकसंतप्तहृदयां शबलामब्रवीत्। शबले न त्वां त्यजामि। नापि त्वया मेऽपकृतम्। महाबल एष राजा बलान्मत्तस्त्वां नयते। ममानेन तुल्यं बलं नास्ति। विशेषतोऽद्यायं राजास्ति। राजायं बली क्षत्रियः पृथिवीपतिश्चास्ति। वाजिरथसंकुला हस्तिध्वजसमाकीर्णेयं पूर्णा अक्षौहिणी सेना तस्यास्ति। तस्मादसौ बलवत्तरः। वसिष्ठेनैवमुक्ता वचनज्ञा सा विनयेन ब्रह्मर्षिं वसिष्ठं प्रत्युवाच। ब्रह्मन्! क्षत्रियबलं बलमिति नाहुः। ब्राह्मण एव क्षत्रियाद् बलीयान्। ब्राह्मणबलं दिव्यं तस्मात् क्षत्रियबलादधिकम्। तव बलमप्रमेयम्। महापराक्रमो भूत्वापि विश्वामित्रस्त्वत्तो न बलवत्तरः। दुरासदं तव तेजः। त्वद्ब्रह्मबलसंभृतां मां नियुङ्क्ष्व। तस्य दुरात्मनो दर्पं बलं च नाशयामि। तयेत्युक्तो वसिष्ठः शत्रुबलनाशकं बलं सृजेति तदोवाच। तस्या हुम्भारवेणोत्सृष्टाः शतशः पह्लवा विश्वामित्रस्य पश्यतस्तत्सेनां नाशयामासुः। परमक्रोधविस्फारितनयनो विश्वामित्रो बहुविधैः शस्त्रैः पह्लवान्नाशयामास। तद् दृष्ट्वा सा घोरान् शकान् यवनांश्चासृजत्। महावीर्यैः कान्तिमद्भिर्हेमकिञ्जल्क-शरीरवर्णैर्यवनसंयुतैः शकैर्भूमिः संवृता बभूव। दीर्घासिपट्टिशधरैर्हेमवर्णाम्बरावृतै-

स्तैः प्रदीप्ताग्निभिरिव विश्वामित्रबलं सर्वं निर्दग्धम्। ततो महातेजा विश्वामित्रः अस्त्राणि मुमोच।

५४

तदा विश्वामित्रास्त्रमोहितान् व्याकुलान् स्वसैनिकान् दृष्ट्वा वसिष्ठः कामदुहं योगेनान्यान् सैनिकान् स्रष्टुमुवाच। तस्या हुम्भारवाद् रविसन्निभाः काम्बोजा ऊधसः शस्त्रपाणयः पह्लवा योनिदेशाद्यवनाः शकृद्देशात् शका रोमकूपेभ्यो म्लेच्छा हारीताः किरातकाश्च जाताः। तैस्तत्क्षणाद् विश्वामित्रस्य पदातिगजाश्वरथपूर्णं बलं निषूदितं बभूव। स्वसैन्यं वसिष्ठेन निषूदितं दृष्ट्वा विश्वामित्रस्य शतं सुता नानाविधायुधधरास्तमभिदुद्रुवुः। महर्षिर्वसिष्ठः हुंकारेणैव तान् सर्वानश्वरथपदातयुतान् मुहूर्तेन निर्ददाह। विनाशितान् पुत्रान् बलं च वीक्ष्य विश्वामित्रो लज्जितश्चिन्ताक्रान्तश्च बभूवं। निर्वेगसमुद्रवद् भग्नदंष्ट्रोरगवद् राहुग्रस्तसूर्यवत् स सद्यो निष्प्रभतां जगाम। हतपुत्रबलो दीनो लूनपक्षो द्विज इव हतदर्पो हतोत्साहश्च स महद् दुःखं प्राप। राज्यं क्षत्रधर्मेण पालयेति पुत्रमेकं नियुज्य स वनं जगाम। किन्नरोरगजुष्टं* हिमवत्प्रान्तं गत्वा स महादेवप्रसादार्थं तपश्चकार। ततः केनचित् कालेन वरदः शिवो विश्वामित्रं दर्शयामास। राजन्! किमर्थं तपसि? यत्ते विवक्षितं ब्रूहि। वरदोऽस्मि। काङ्क्षितं ब्रूहि। इत्युवाच। विश्वामित्रो महादेवं प्रणिपत्याह। महादेव! यदि तुष्टोऽसि साङ्गोपाङ्गरहस्यो धनुर्वेदो मह्यं प्रदीयताम्। देवदानवमहर्षिगन्धर्वयक्षरक्षस्सु यान्यस्त्राणि सन्ति तानि मम प्रतिभान्तु इति। एवमस्त्वित्युक्त्वा शङ्करो दिवं जगाम। महाबलो विश्वामित्रः अस्त्राणि प्राप्य स्वतो दर्पवानधुना द्विगुणीकृतदर्पो बभूव। पर्वणि समुद्र इव वीर्येण विवर्धमानः स तदा वसिष्ठं हतमेव मेने। स

---

*उरगाः कस्याश्चिज्जातेर्मानवाः स्युः।

आश्रमपदं गत्वा अस्त्राणि मुमोच। अस्त्रतेजसा तपोवनं निर्दग्धं बभूव। विश्वामित्रस्य विजृम्भमाणमस्त्रं दृष्ट्वा सर्वे मुनयो भीताः शतशो दिशो विप्रद्रुताः। वसिष्ठस्य शिष्या मृगाः पक्षिणश्च भीताः सहस्रशो नानादिग्भ्यो विदुद्रुवुः। मा भैष्ट। भास्करो नीहारमिव विश्वामित्रमद्य नाशयामीति मुहुर्मुहुर्वदतो वसिष्ठस्याश्रमपदं शून्यमभवत्। क्षणकाले मरुभूमिवन्निश्शब्दमभवत्। पुनश्च वसिष्ठः सरोषं विश्वामित्रमब्रवीत्। चिरसंवृध्दमाश्रमं विनाशितवानसि। मूढो दुराचारोऽसि। तस्मात् त्वं न भविष्यसि। इत्युक्त्वा विधूमः कालाग्निरिव परमक्रुध्दो यमदण्डतुल्यं दण्डमुद्यम्य तदभिमुखं तस्थौ।

५५

वसिष्ठेनैवमुक्तो विश्वामित्र आग्नेयास्त्रं संधाय तिष्ठ तिष्ठेत्यब्रवीत्। तदा भगवान् वसिष्ठः क्रोधादिदमब्रवीत्। हे दुष्टक्षत्रिय! अहमिह स्थितोऽस्मि। यत्ते बलं तद् विदर्शय। तव ते शस्त्रस्य च गर्वं नाशयामि। क्व च ते क्षत्रबलं क्व च मे महद् ब्रह्मबलम्? मम दिव्यं ब्रह्मबलं पश्य। तदा विश्वामित्रस्य भयंकरमाग्नेयास्त्रं ब्रह्मदण्डेन तथा शान्तं बभूव यथाग्निवेगो जलेन शाम्यति। रुष्टो विश्वामित्रो वारुणरौद्रैन्द्रादीन्यस्त्राणि बहूनि चिक्षेप। सर्वाणि तानि वसिष्ठो दण्डेनाग्रसत्। तदाश्चर्यकरं बभूव। तेष्वस्त्रेषु शान्तेषु गाधिनन्दनो ब्रह्मास्त्रं चिक्षेप। तदस्त्रमुद्यतं दृष्ट्वा अग्निपुरोगमा देवा देवर्षयो गन्धर्वा महोरगाश्च सम्भ्रान्ता बभूवुः। त्रैलोक्यं सन्तत्रास। राम! तदप्यस्त्रं ब्राह्मेण तेजसा वसिष्ठो जग्रास। ब्रह्मास्त्रं ग्रसमानस्य महात्मनो वसिष्ठस्य रूपं त्रैलोक्यमूर्छावहं रौद्रं दारुणं चाभवत्। तस्य सर्वेषु रोमकूपेषु धूमाकुलार्चिषः अग्नेः किरणा निष्पेतुरिव। वसिष्ठस्य करोद्यतो ब्रह्मदण्डश्च विधूमः कालाग्निरिवापरो यमदण्ड इव प्राज्वलत्। ततो मुनिगणा महामुनिं वसिष्ठमस्तुवन्। ब्रह्मन्!

ते बलममोघम्। तव तेजस्तवैव शक्त्या धारय। त्वया विश्वामित्रो निगृहीतः। महामुने! प्रसीद। लोका गतव्यथाः सन्तु। एवमुक्तो वसिष्ठः शशाम। अवमतो विश्वामित्रो विनिश्वस्याह। धिग् धिक् क्षत्रियबलम्। ब्रह्मतेजसा प्राप्तं बलमेव बलम्। एकेन ब्रह्मदण्डेन मे सर्वास्त्राणि विनाशितानि। तस्मादिमां घटनां समवेक्ष्याहं मन इन्द्रियाणि च निर्मलानि कृत्वा महत् तपः अनुष्ठास्यामि यद् ब्रह्मत्वकारकं स्यात्।

## ५६

ततो विश्वामित्रो महात्मना वसिष्ठेन कृतवैर आत्मनः पराजयं स्मरन् संतप्तहृदयो मुहुर्मुहुर्विनिःश्वस्य महिष्या सह दक्षिणां दिशं गत्वा फलमूलाशनो महत् तपश्चचार। तत्र तस्य हविष्पन्दो मधुष्पन्दो दृढनेत्रो महारथ इति सत्यधर्मपरायणाश्चत्वारः पुत्रा जज्ञिरे। पूर्णे वर्षसहस्रे लोकपितामहो ब्रह्मा विश्वामित्रं मधुरं वाक्यमुवाच। कौशिक! तव तपसा राजर्षिलोका जिताः। अनेन तपसा त्वां राजर्षिं विद्मः। एवमुक्त्वा ब्रह्मा त्रिविष्टपं जगाम। विश्वामित्रस्तु तच्छ्रुत्वा ह्रिया किञ्चिदवाङ्मुखो दुःखाविष्टः समन्युरन्तरङ्गे एवमचिन्तयत्। मया सुमहत् तपस्तप्तम्। मां राजर्षिं सर्वे देवा ऋषयश्च विदुः। मन्ये तपसः फलं नास्ति। एवं निश्चित्य महात्मा विश्वामित्रो भूय एव परमं तपश्चचार। एतस्मिन्नेव काले सत्यवादी जितेन्द्रिय इक्ष्वाकुकुलनन्दनस्त्रिशङ्कुरिति विख्यातो राजा बभूव। अहं तादृशं यज्ञं कुर्यां येन स्वशरीरेण देवानां परमां गतिं गच्छेयमिति तस्य बुध्दिः समुत्पन्ना। स वसिष्ठं समाहूय स्वचिन्तितं कथयामास। महात्मा वसिष्ठः अशक्य* मित्युवाच। वसिष्ठेन प्रत्याख्यातः

* अशक्यत्वं च न ऋषेरसामर्थ्यात्। नापि तादृशकर्मविधानाभावात्। सशरीर एव स्वर्गं लोकमेतीति श्रुतेः। किन्तु त्रिशङ्कोस्तादृशस्वर्गप्राप्तिर्नास्तीति ज्ञानादिति गोविन्दराजः।

स दक्षिणां दिशं ययौ यत्र वसिष्ठपुत्रा दीर्घं तपस्तपन्ति स्म। तत्र त्रिशङ्कुस्तपोलग्नान् शतं वसिष्ठपुत्रानपश्यत्। गुरुसुतान् सर्वान् सः अभिगम्यानुपूर्व्येणाभिवाद्य ह्रिया किञ्चिदवाङ्मुखः कृताञ्जलिरब्रवीत्। शरण्यान् वः शरणं प्रपद्ये। महात्मना वसिष्ठेन प्रत्याख्यातोऽस्मि। अहं महायज्ञं यष्टुकामोऽस्मि। तदनुज्ञातुमर्हथ। सर्वान् गुरुपुत्रान् नमस्कृत्य प्रसादये। ब्राह्मणान् वस्तपसि स्थितान् शिरसा प्रणतो याचे। भवन्तः सावधाना मां सिध्द्यर्थं तथा याजयन्तु यथाहं सशरीरो देवलोकमवाप्नु-याम्। वसिष्ठेन निराकृतो गुरुपुत्रानृते काञ्चनान्यां गतिं न पश्यामि। सर्वेषामिक्ष्वाकूणां पुरोधाः परमा गतिः। तस्मादनन्तरं सर्वे भवन्तो मम दैवतम्।

५७

त्रिशङ्कोर्वचनं श्रुत्वा वसिष्ठपुत्राः क्रोधेन त्वमूचुः। दुर्मते! सत्यवादिना गुरुणा प्रत्याख्यातोऽसि। कथं तं समतिक्रम्यान्यमाश्रयसे? सर्वेषामिक्ष्वाकूणां पुरोधा वसिष्ठः परमा गतिः। सत्यवादिनो वसिष्ठस्य वचनमतिक्रमितुं न शक्यम्। भगवान् वसिष्ठः अशक्यमित्युवाच। तं तव क्रतुं समाहर्तुं कथं वयं शक्ताः स्मः? राजन्! त्वं मूढः। स्वपुरं पुनर्गच्छ। त्रैलोक्यस्यापि याजने भगवान् समर्थः। क्रोधपर्याकुलाक्षरं तेषां तद् वचनं श्रुत्वा त्रिशङ्कुः पुनस्तानाह। गुरुणा गुरुपुत्रैश्च प्रत्याख्यातोऽस्मि। अन्यां गतिं गमिष्यामि। तपोधनाः! स्वस्ति वोऽस्तु। घोराभिप्रायं तद् वाक्यं श्रुत्वा वसिष्ठपुत्राः परमसंक्रुध्दाश्चण्डालत्वं गमिष्यसीति तं शेपुः स्वमाश्रमं च विविशुः। अथ रात्र्यां व्यतीतायां राजा चण्डालतां प्राप। नीलवस्त्रधरो नीलवर्णः परुषाङ्गो ह्रस्वमूर्धजः चिताभस्ममाल्यानुलेप आयसाभरणश्च बभूव। चण्डालरूपिणं तं दृष्ट्वा मन्त्रिणस्तेन सहागताः पौराश्च तं त्यक्त्वा प्राद्रवन्। धैर्यवानेको हि राजा दिवारात्रं दुःखेन दह्यमानस्तपोधनं

विश्वामित्रं जगाम। विश्वामित्रस्तं राजानं चण्डालरूपिणं विफलीकृतं दृष्ट्वा कारुण्यं प्राप। परमधार्मिकः स घोरदर्शनं राजानं ते भद्रमस्तु इत्युक्त्वेदं जगाद। अयोध्याधिपते! किं तवागमनकारणम्? व्यक्तं त्वं शापाच्चण्डालतां गतोऽसि। अथ प्राञ्जलिस्त्रिशङ्कुर्विश्वामित्रमुवाच। गुरुणा गुरुपुत्रैश्च निराकृतोऽस्मि। मयाभीष्टं न प्राप्तं प्रत्युत विपरीतपरिणामः प्राप्तः। सौम्य! सशरीरो दिवं यायामिति ममाभिप्रायः। क्रतुशतं मयेष्टं तत्फलं तु नावाप्यते। अनृतं मया नोक्तपूर्वं कृच्छ्रेषु गतोऽपि न वक्ष्ये। क्षत्रधर्मेण ते शपे। मया बहुविधैर्यज्ञैरिष्टं धर्मेण प्रजाः पालिताः शीलेन वृत्तेन च महात्मानो गुरवस्तोषिताः। धर्मनिर्वहणेऽहं प्रयते। यज्ञं कर्तुमभिलषामि। परन्तु हे महामुने! मयि मम गुरवः परितोषं न यान्ति। दैवमेव परं पौरुषं निरर्थकं च मन्ये। दैवेन सर्वमाक्रम्यते। दैवं हि परमा गतिः। तस्य परमार्तस्य प्रार्थयमानस्य दैवोपहतकर्मणो मे प्रसादं कर्तुमर्हसि। त्वन्नान्यां गतिं गमिष्यामि। मम नान्यः शरणमस्ति। कृपया पुरुषकारेण दैवप्रातिकूल्यं निवर्तय।

५८

एवमुक्तवन्तं चण्डालरूपिणं त्रिशङ्कुं विश्वामित्रो मधुरं वाक्यमिदमुवाच। वत्स! त्रिशङ्को! स्वागतम्। त्वां सुधार्मिकं जानामि। तव शरणं भविष्यामि। मा भैषीः। अहं पुण्यकर्मणः सर्वान् महर्षीन् यज्ञसाह्यकरानामन्त्रये। ततो निर्वृतो यक्ष्यसे। गुरुशापकृतं यदिदं चण्डालरूपं त्वयि वर्तते अनेन रूपेण सह सशरीरः स्वर्गं गमिष्यसि। यस्त्वं कौशिकं शरण्यमागम्य शरणं गतस्तस्य ते स्वर्गं हस्तप्राप्तं मन्ये। एवमुक्त्वा विश्वामित्रः परमधार्मिकान् महाप्राज्ञान् पुत्रान् यज्ञसंभारानाहर्तुमादिदेश सर्वांश्च शिष्यान् समाहूयोवाच। वत्साः! ममाज्ञया बहुश्रुतान् सर्वानृषिवरान् शिष्यसुहृद्भिः ऋत्विग्भिश्च सहानयध्वम्। यदि कश्चिन्ममादेशे न तिष्ठति अन्यथा च ब्रूयात्

तत्तदनादरवचनं सर्वं ममाख्येयम्। ते च तदाज्ञया दिशो जग्मुः। सर्वेभ्यो देशेभ्यो ब्रह्मवादिन आजग्मुः। विश्वामित्रशिष्याश्च सर्वेषां ब्रह्मवादिनां वचनं विश्वामित्रायोचुः। तव वचनं श्रुत्वा सर्वदेशेषु स्थिता ब्राह्मणा आगच्छन्ति वर्जयित्वा महोदयम्। वसिष्ठपुत्राः शतं क्रोधपर्याकुलाक्षरं यद् वचनमवदन् तच्छृणु। क्षत्रियो याजको यजमानो विशेषतश्चण्डालः। तस्य यज्ञसदसि सुरा ऋषयश्च* कथं हविर्भोक्तारः? विश्वामित्रेण पालिता ब्राह्मणा अपि चण्डालभोजनं भुक्त्वा कथं स्वर्गं गमिष्यन्ति? महोदयेन सह सर्वे वसिष्ठपुत्राः संरक्तलोचना एतन्निष्ठुरवचनमवदन्। तच्छ्रुत्वा क्रोधेन विश्वामित्र उवाच। उग्रं तपः समास्थितं मामदुष्टं यतो दूषयन्ति ततस्ते दुरात्मानो भस्मीभूता भविष्यन्ति। अत्र संशयो नास्ति। अद्य ते कालपाशेन वैवस्वतक्षयं नीताः। सप्तजन्मशतानि ते शवपालकाः श्वमांसाहारा निर्घृणा विकृता विरूपाश्च नाम्ना मुष्टिका भूत्वा लोके संचरन्तु। दुर्बुध्दिर्महोदयश्च यो मामदूष्यमदूषयत् स सर्वलोकेषु दूषितो निषादत्वं गमिष्यति। स प्राणिवधनिरतो निरनुक्रोशो मम क्रोधाद् दीर्घकालं दुर्गतिं गमिष्यति। एतावद् ऋषिमध्ये उक्त्वा महामुनिर्विश्वामित्रो विरराम।

५९

महोदयेन सह वसिष्ठपुत्रान् तपोबलेन विनाश्य विश्वामित्र ऋषीनुवाच। इक्ष्वाकुवंशोत्पन्नोऽयं त्रिशङ्कुरिति विश्रुतो धर्मिष्ठो वदान्यः स्वशरीरेण स्वर्गं जेतुं मां शरणं गतः।यथायं स्वशरीरेण देवलोकं गमिष्यति तथा मया सह भवद्भिर्यज्ञः प्रवर्त्यताम्। तच्छ्रुत्वा सर्वे धर्मज्ञा महर्षयः समेत्य परस्परं धर्मयुक्तं परामर्शं चक्रुः। कुशिकवंशजोऽयं मुनिः परमकोपनः।

---

*सुराणां देवतात्वेन भोक्तृत्वम् ऋषीणामृत्विक्त्वेन इष्टशिष्टविभागतया भोक्तृत्वम् इति महेश्वरतीर्थः।

अयं यदाह सम्यगेतत् कार्यम्। भगवान् विश्वामित्रः अग्निकल्पः। रोषितश्चेत् शप्स्यति। अतस्तथा यज्ञः प्रवर्त्यतां यथा त्रिशङ्कुर्विश्वामित्रस्य प्रभावेण सशरीरः स्वर्गं गच्छेत्। ततो यज्ञः प्रवर्त्यतां सर्वे च समायात। इत्युक्त्वा महर्षयो यज्ञक्रियाः प्रारभन्त। विश्वामित्रः अध्वर्युर्बभूव। मन्त्रकोविदा ऋत्विजश्च यथाक्रमं यथाकल्पं यथाविधि सर्वाणि कर्माणि मन्त्रोच्चारणपूर्वकं चक्रुः। ततो महातपस्वी विश्वामित्रो महता कालेन भागग्रहणार्थं सर्वदेवतानामावाहनं चकार। परन्तु आहूताः सर्वदेवता नाभ्यागमन्। ततः क्रोधाविष्टो विश्वामित्रः स्रुवमुद्यम्य त्रिशङ्कुमुवाच। नरेश्वर! स्वार्जितस्य मे तपसः प्रभावं पश्य। त्वामिदानीं स्वशरीरेण स्वर्गं नयामि। दुष्प्रापं स्वर्गं स्वशरीरेण गच्छ। यदि मम स्वार्जितं किञ्चित् तपसः फलमस्ति तस्य तेजसा सशरीरो दिवं व्रज। विश्वामित्रेणैवमुक्तमात्रस्त्रिशङ्कुर्मुनिषु पश्यत्सु सशरीरः स्वर्गं ययौ। देवलोकमागतं त्रिशङ्कुं दृष्ट्वा सुरेश्वरः सर्वैः सुरगणैः सहाब्रवीत्। त्रिशङ्को! भूयस्त्वं गच्छ। तव स्वर्गे स्थानं नास्ति। हे मूढ! गुरुशापहतस्त्वमवाक्शिरा भूमिं पत। महेन्द्रेणैवमुक्तस्त्रिशङ्कुस्त्राहीति विश्वामित्रमाक्रोशन् पपात। त्रिशङ्कोराक्रोशं श्रुत्वा विश्वामित्रो रुष्टो बभूव तिष्ठ तिष्ठेति च तमब्रवीत्। ऋषिमध्यस्थितः कोपोद्दीपितो विश्वामित्रः अपरो ब्रह्मेव दक्षिणदिशायामन्यान् सप्तर्षीनन्यां नक्षत्रमालां च ससर्ज। नक्षत्रवंशं सृष्ट्वा क्रोधकलुषीकृतः अन्यमिन्द्रं करिष्यामि अथवा मया विरचितो नूतनः स्वर्गलोकः अनिन्द्रकः स्यादिति निश्चित्य दैवतान्यपि स्रष्टुं समुपचक्रमे। ततः परमसंभ्रान्ता ऋषिभिः सह सुरनायका विश्वामित्रं सानुनयमूचुः।हे महर्षे! गुरुशापहतोऽयं राजा शरीरेण सह स्वर्गं यातुं नार्हत्येवेति। देवानां वचनं श्रुत्वा विश्वामित्रस्तानुदारवचनमब्रवीत्। भोः सुराः! भूपतेस्त्रिशङ्कोः सशरीरस्वर्गारोहणं

प्रतिज्ञायाहं तदनृतं कर्तुं नोत्सहे। सशरीरस्य त्रिशङ्कोः शाश्वतोऽस्तु स्वर्गः। मया सृष्टानि नक्षत्राणि ध्रुवाणि च सन्तु। यावल्लोकाः स्थास्यन्ति तावदेतानि सर्वाणि मत्कृतानि तिष्ठन्तु। तदनुज्ञातुमर्हथ। तत् श्रुत्वा सुराः प्रत्यूचुः। एवं भवतु। भद्रं ते। त्वया सृष्टान्येतानि सर्वाणि नक्षत्राणि ज्योतिश्चक्राद् बहिर्गगने तिष्ठन्तु। तेषां नक्षत्राणां मध्ये जाज्वल्यमानस्त्रिशङ्कुश्चामरसन्निभः अवाक्छिरास्तिष्ठतु। सर्वदेवस्तुतो धर्मात्मा विश्वामित्रो बाढमित्याह। राम! यज्ञान्ते सर्वे देवा मुनयश्च यथागतं जग्मुः।

६०

महात्मा विश्वामित्रः प्रस्थितान् तान् मुनीन् प्रेक्ष्योवाच। दक्षिणस्यां दिशि महान् विघ्नोऽयं प्रवृत्तः। अतः अन्यां दिशं गत्वा तपस्यामि। विशालायां पश्चिमदिशायां पुष्करक्षेत्रे* तपश्चरिष्यामि। श्रेष्ठं तपोवनं तदस्ति। एवमुक्त्वा विश्वामित्रः पुष्करक्षेत्रे मूलफलाशनो भूत्वा उग्रं तपस्तताप। एतस्मिन्नेव काले अम्बरीष इति ख्यातः अयोध्याधिपतिर्यज्ञं प्रारभत। यजमानस्य तस्य पशुमिन्द्रो जहार। पशौ प्रणष्टे पुरोहितो नृपमुवाच। राजन्! यज्ञपशुर्हृतः। तवैवाधर्मेण स नष्टः। यज्ञपशोररक्षितारं राजानं बहवो दोषा घ्नन्ति। यावत् कर्म प्रारभ्यते तावत्पूर्वं यज्ञपशुमन्विष्यानयस्व। अथवा तत्पशोः प्रतिनिधिरूपेण कमपि नरमानयस्व। इदमेव तव दुर्नयस्य प्रायश्चित्तम्। पुरोहितवाक्यमाकर्ण्य राजा गोसहस्रैर्नरपशुमन्वियेष। देशान् जनपदान् नगराणि वनानि पुण्यान्याश्रमाणि च मृगयमाणो नृपो भृगुतुङ्गपर्वते भार्यापुत्रसहितमुपविष्टमृचीकं ददर्श। तपसा दीप्तं तं प्रणम्याभिप्रसाद्य सर्वत्र कुशलं पृष्ट्वा राजा प्राह। हे महाभाग भार्गव! यदि गवां शतसहस्रेण पशोरर्थे तव सुतं विक्रीणीषे तर्हि कृतकृत्यो

---

* आज्मीरसमीपस्थं पुण्यक्षेत्रमिति cr

कथमात्मसुतान् हित्वा अन्यसुतं त्रायसे? भोजने श्वमांसवदिदमकार्यमिव पश्यामः। पुत्राणां वचनं श्रुत्वा विश्वामित्रः क्रोधसंरक्तनेत्रो वक्तुमारभत। मद्वाक्यमतिक्रम्य निर्भयं धर्मापेतं च युष्माभिः प्रोक्तम्। वसिष्ठपुत्रवत् सर्वे श्वमांसभोजिनो मुष्टिकादिकुलेषु वर्षसहस्रमनुवत्स्यथ। एवं पुत्रान् शप्त्वा विश्वामित्र आर्तस्य शुनःशेपस्य निरामयरक्षां कृत्वोवाच। अम्बरीषस्य यज्ञे यदा त्वं कुशादिपवित्रपाशैर्बध्दो रक्तमाल्यो रक्तचन्दनलेपनश्च कारयिष्यसे तदा विष्णुदेवतासंबन्धिनो यूपस्य समीपं गत्वा अग्न्यभिमुखो भूत्वा इन्द्रमिन्द्रानुजं च स्तुहि। इमे द्वे दिव्ये गाथे गायेः। ततो वाञ्छितसिध्दिमवाप्स्यसि। एकाग्रचित्तेन शुनःशेपस्ते द्वे गाथे जग्राह। शीघ्रं गत्वा अम्बरीषमुवाच। राजसिंह! यज्ञसदः शीघ्रं गच्छावः। यज्ञदीक्षां गृहीत्वा यज्ञारम्भं कुरु। तच्छ्रुत्वा नृपतिर्हृष्टः शीघ्रं यज्ञवाटं जगाम। सदस्यानुमतेन राजा शुनःशेपं पवित्रकुशारोपितं रक्ताम्बरं पशुं कृत्वा यूपे बबन्ध। बध्दः शुनःशेप उत्तमवाग्भिर्यथावदिन्द्रमिन्द्रानुजं च तुष्टाव। तदा रहस्यस्तुतितोषितः सहस्राक्षः शुनःशेपाय दीर्घमायुर्ददौ। राम! अम्बरीषश्च देवेन्द्रानुग्रहेण बहुगुणं यज्ञफलं समवाप। धर्मात्मा विश्वामित्रोऽपि पुष्करक्षेत्रे सहस्रवर्षाणि पुनस्तताप।

६२

वर्षसहस्रानन्तरं व्रतं समाप्य स्नातं विश्वामित्रं तपःफलदित्सवः सुरा अभ्यागच्छन्। ब्रह्मा सुरुचिरं वाक्यमब्रवीत्। भद्रं ते। स्वार्जितैः शुभकर्मभिस्त्वमृषिरसि। इत्युक्त्वा ब्रह्मा त्रिदिवं जगाम। विश्वामित्रो भूयो महत् तपस्तताप। बहुकालानन्तरं परमाप्सरा मेनका पुष्करक्षेत्रमागत्य स्नातुमुपचक्राम। तस्मिन् पुष्करतीर्थे जलदे विद्युतमिव रूपेणाप्रतिमां मेनकां विश्वामित्रो ददर्श। तदा कन्दर्पाधीनो मुनिस्तामाह। अप्सरः! स्वागतं तेऽस्तु। इह ममाश्रमे वस। भद्रं ते। मदनेन सुमोहितं

कथमात्मसुतान् हित्वा अन्यसुतं त्रायसे? भोजने श्वमांसवदिदमकार्यमिव पश्यामः। पुत्राणां वचनं श्रुत्वा विश्वामित्रः क्रोधसंरक्तनेत्रो वक्तुमारभत। मद्वाक्यमतिक्रम्य निर्भयं धर्मापेतं च युष्माभिः प्रोक्तम्। वसिष्ठपुत्रवत् सर्वे श्वमांसभोजिनो मुष्टिकादिकुलेषु वर्षसहस्रमनुवत्स्यथ। एवं पुत्रान् शप्त्वा विश्वामित्र आर्तस्य शुनःशेपस्य निरामयरक्षां कृत्वोवाच। अम्बरीषस्य यज्ञे यदा त्वं कुशादिपवित्रपाशैर्बध्दो रक्तमाल्यो रक्तचन्दनलेपनश्च कारयिष्यसे तदा विष्णुदेवतासंबन्धिनो यूपस्य समीपं गत्वा अग्न्यभिमुखो भूत्वा इन्द्रमिन्द्रानुजं च स्तुहि। इमे द्वे दिव्ये गाथे गायेः। ततो वाञ्छितसिध्दिमवाप्स्यसि। एकाग्रचित्तेन शुनःशेपस्ते द्वे गाथे जग्राह। शीघ्रं गत्वा अम्बरीषमुवाच। राजसिंह! यज्ञसदः शीघ्रं गच्छावः। यज्ञदीक्षां गृहीत्वा यज्ञारम्भं कुरु। तच्छ्रुत्वा नृपतिर्हृष्टः शीघ्रं यज्ञवाटं जगाम। सदस्यानुमतेन राजा शुनःशेपं पवित्रकुशारोपितं रक्ताम्बरं पशुं कृत्वा यूपे बबन्ध। बध्दः शुनःशेप उत्तमवाग्भिर्यथावदिन्द्रमिन्द्रानुजं च तुष्टाव। तदा रहस्यस्तुतितोषितः सहस्राक्षः शुनःशेपाय दीर्घमायुर्ददौ। राम! अम्बरीषश्च देवेन्द्रानुग्रहेण बहुगुणं यज्ञफलं समवाप। धर्मात्मा विश्वामित्रोऽपि पुष्करक्षेत्रे सहस्रवर्षाणि पुनस्ततापा।

६२

वर्षसहस्रानन्तरं व्रतं समाप्य स्नातं विश्वामित्रं तपःफलदित्सवः सुरा अभ्यागच्छन्। ब्रह्मा सुरुचिरं वाक्यमब्रवीत्। भद्रं ते। स्वार्जितैः शुभकर्मभिस्त्वमृषिरसि। इत्युक्त्वा ब्रह्मा त्रिदिवं जगाम। विश्वामित्रो भूयो महत् तपस्ततापा। बहुकालानन्तरं परमाप्सरा मेनका पुष्करक्षेत्रमागत्य स्नातुमुपचक्राम। तस्मिन् पुष्करतीर्थे जलदे विद्युतमिव रूपेणाप्रतिमां मेनकां विश्वामित्रो ददर्श। तदा कन्दर्पाधीनो मुनिस्तामाह। अप्सरः! स्वागतं तेऽस्तु। इह ममाश्रमे वस। भद्रं ते। मदनेन सुमोहितं

मामनुगृह्णीष्व। एवमुक्ता सा सुन्दरी तत्रोवास। विश्वामित्रस्य तपसो महान् विघ्नः संजातः। तस्यां तत्र वसन्त्यां दश वर्षाणि सुखेन व्यतिचक्रमुः। तस्मिन् काले गते विश्वामित्रश्चिन्ताशोकपरायणः सव्रीड इव संवृत्तः। मुनेः सामर्षा बुध्दिः समुत्पन्ना। इदं सर्वं मम तपोऽपहरणाय सुराणां कृतं कर्मास्ति। अहोरात्रापदेशेन* दश संवत्सरा गताः। काममोहाभिभूतस्य मम विघ्नः समागतः। इति विनिःश्वसन् मुनिवरः पश्चात्तापेन दुःखितो बभूव। अञ्जलिं बध्द्वा स्थितां भीतां मेनकां मधुरैर्वाक्यैर्विसृज्य विश्वामित्रो हिमवत्पर्वतं जगाम। स महत्या निष्ठया इन्द्रियाणि जेतुं कौशिकीतीरे सुदारुणं तपश्चकार। हिमवत्पर्वते वर्षसहस्रं स घोरं तपश्चकार। तदा देवतानां भयमभवत्। सर्वे सुरा ऋषयश्च समागम्य बाढमयं कौशिको महर्षिशब्दं लभतामिति मन्त्रयामासुः। तेषां वचनं श्रुत्वा ब्रह्मा तपोधनं विश्वामित्रं मधुरं बभाषे। महर्षे त्वामभिनन्दामि** वत्स! उग्रेण तव तपसा तोषितोऽस्मि। महत्त्वमृषिमुख्यत्वं च ते ददामि। ब्रह्मणो वचः श्रुत्वा प्राञ्जलिः प्रणतश्च विश्वामित्रः प्रत्युवाच। स्वार्जितैः शुभैः कर्मभिर्यदि भगवान् मे ब्रह्मर्षिशब्दं वदेत् ततोऽहमात्मानं विजितेन्द्रियं मन्ये। मुनिश्रेष्ठ! न तावत् त्वं विजितेन्द्रियः। यतस्व। इति तं ब्रह्मोक्त्वा त्रिदिवं जगाम। गतेषु देवेषु विश्वामित्र ऊर्ध्वबाहुर्निरालम्बो वायुभक्षश्च

---

* अहोरात्रसमत्वेन अथवा अहःसुखरात्रिसुखव्याजेन।

* महर्षे स्वागतं वत्स इति मूलम्। स्वागतमितिपदमधुना welcome इति आङ्ग्लपदसमानतयोपयुज्यते। प्राचीनसाहित्ये त्वामभिनन्दामि, तव शुभमस्तु इत्याद्यर्थेषु च प्रयुक्तं दृश्यते। साअदं अज्जस्स (स्वागतमार्यस्य) (मृच्छकटिकम्, ५) इति मैत्रेयमाह वसन्तसेना। गृहस्थितो मैत्रेयः। आगता वसन्तसेना। त्वामभिनन्दामीत्येवार्थः। सुस्वागतमिति च दृश्यते। भागवतम् १०,७१,३५. जैमिनीयाश्वमेधम् ४६, ३२ रामायणम्, गीताप्रेस्, आर. ४॥३६ पञ्चतन्त्रम्, काको, १५९.

तपश्चचार। घर्मे पञ्चतपा वर्षासु बहिः स्थितः शिशिरे अहस्सु रात्रिषु च जलस्थायी वर्षसहस्रं तपश्चचार। तस्मिन्नेवं संतप्यमाने वासवस्य सुराणां च महान् संभ्रमो बभूव। सर्वामरगणसमेतो देवेन्द्रः अप्सरसं रम्भां स्वहितकरं कौशिकाहितकरं च वचनमुवाच।

६३

रम्भे! कौशिकस्य काममोहसमन्वितलोभनं नाम सुमहदिदं सुरकार्यं सम्प्रति त्वया कर्तव्यम्। तथा देवेन्द्रेणोक्ता सा अप्सरा लज्जिता प्राञ्जलिर्भूत्वा प्रत्युवाच। सुरपते! महामुनिर्विश्वामित्रो भयंकरः। निस्संशयं मयि घोरं क्रोधमुत्स्रक्ष्यति। ततो मे भयमस्ति। देव! कृपया प्रसीद। तां वेपमानां कृताञ्जलिं शक्र उवाच। रम्भे! मा भैषीः+। भद्रं ते। मम शासनं कुरुष्व। रुचिरद्रुमे वसन्तेऽहं कोकिलो भूत्वा कन्दर्पसहितस्तव पार्श्वतः स्थास्यामि। त्वं परमप्रकाशमानं तव रूपं शृङ्गारचेष्टागुणसंपन्नं कृत्वा ऋषिं कौशिकं तपसो भेदय। सा सुन्दरी तस्य वचनेन श्रेष्ठं रूपं कृत्वा शुचिस्मिता विश्वामित्रं लोभयामास। विश्वामित्रः प्रथमं वल्गु कूजतः कोकिलस्य स्वनं शुश्राव। संप्रहृष्टेन मनसा ततो रम्भामपश्यत्। तदा कोकिलस्य शब्देनाप्रतिमेन गीतेन रम्भाया दर्शनेन च मुनिः सन्दिदेह। तत् शक्रस्य कर्मेति विज्ञाय क्रोधाविष्टो विश्वामित्रो रम्भां शशाप। दुष्टसंकल्पे! यतो मां कामक्रोधजयैषिणं लोभयसे ततस्त्वं दशवर्ष-सहस्राणि शिलाप्रतिमा भूत्वा स्थास्यसि। मत्क्रोधपीडितां त्वां तपोबलसमन्वितः सुमहातेजा ब्राह्मण* उध्दरिष्यति। एवं रम्भां शप्त्वा विश्वामित्रः कोपधारणासमर्थतया मनसि संततापा। तस्य महता शापेन रम्भा शिलाप्रतिमा तदा बभूव। तद् वचः श्रुत्वा मन्मथेन्द्रौ निर्जग्मतुः। महातेजाः स विश्वामित्रः कोपेन तपोऽपहरणे कृते अजितैरिन्द्रियैरात्मनः शान्तिं न लेभे।

---

+ cr भैषि। ग्राह्यः – भैषीः। *वसिष्ठ इत्याहुः इति गोविन्दराजः।

६४

राम! तत्पश्चाद् विश्वामित्र उत्तरां दिशं त्यक्त्वा पूर्वां दिशं प्राप्य कठोरं तपस्तताप। स वर्षसहस्रं मौनव्रतं कृत्वा अतुलं परमदुष्करं तपश्चकार। पूर्णे वर्षसहस्रे स काष्ठभूतः। विघ्नैर्बहुभिराकम्पितमपि तं क्रोधो नाविवेश। ततो देवा गन्धर्वाः पन्नगा असुरा राक्षसाश्च विमोहितास्तस्य तेजसा मन्दरश्मयो व्याकुलाश्च भूत्वा पितामहमूचुः। देव! बहुभिरुपायैर्महामुनिर्विश्वामित्रो लोभितः क्रोधितश्च। परन्तु (स न तद्वशं याति) तस्य तपो वर्धत एव। अस्य सूक्ष्ममपि वृजिनं किञ्चिन्न दृश्यते। यद्यस्य मनोऽभीष्टं न दीयते तदा सचराचरं त्रैलोक्यं तपसा विनाशयति। सर्वा दिशा व्याकुलाः सन्ति। न किञ्चिदपि प्रकाशते। समुद्राः क्षुभिताः। पर्वता विशीर्यन्ते। पृथिवी प्रकम्पते। वायुर्भृशाकुलो वाति। यावदग्निरूपः स महामुनिर्लोकनाशाय बुध्दिं न कुरुते तावत् प्रसाद्यः। यथा पुरा कालाग्निना त्रैलोक्यमदह्यत तथास्य तपोऽग्निना सम्प्रति दह्येत। यदि स देवराज्यमभिलषति तद् वा सर्वं तन्मतं दीयताम्। ततो ब्रह्मादयः सुरगणा विश्वामित्रं मधुरं वाक्यमब्रुवन्। ब्रह्मर्षे! त्वामभिनन्दामः। तपसा सुतोषिताः स्मः। कौशिक! उग्रेण तपसा ब्राह्मण्यं प्राप्तवानसि। (ब्रह्मोवाच) ब्रह्मन्! मरुद्गणैः सह दीर्घमायुस्ते ददामि। स्वस्ति प्राप्नुहि। सुखं गच्छ। तदा मुदितो विश्वामित्रः सर्वान् सुरान् प्रणम्य व्याजहार। यदि ब्राह्मण्यं दीर्घमायुश्च मे प्राप्तं तर्हि ओंकारो वषट्कारो वेदाध्यापनं याजनं च मां वरयन्तु। किञ्च धनुर्वेदादिक्षत्रवेदविदां* ब्रह्मवेदविदामपि श्रेष्ठो ब्रह्मपुत्रो वसिष्ठो मां ब्राह्मणं वदतु। यद्येवं स्यान्मम मनोरथः कृतो भवेत् सुरा ऋषयश्च यान्तु। ततो देवैः प्रसादितो महर्षिर्वसिष्ठो विश्वामित्रेण सह सख्यं कृत्वा एवमस्त्वित्यब्रवीत्। त्वं

---

* क्षत्रवेदः = अथर्ववेदः इति cr

ब्रह्मर्षिः। अस्मिन् विषये नास्ति संदेहः। सर्वं तव संपत्स्यते। इत्युक्त्वा सर्वा देवता यथागतं जग्मुः। धर्मात्मा विश्वामित्रश्च ब्राह्मणत्वं प्राप्य वसिष्ठं पूजंयामास। पूर्णमनोरथस्तपश्चरन् सर्वां महीं विश्वामित्रश्चचार। राम! महात्मनानेनैवं ब्राह्मण्यं प्राप्तम्। एष विश्वामित्रो मूर्तिमत् तपः। नित्यं परो धर्मः। वीर्यस्य च परायणम्। रामलक्ष्मणसन्निधौ शतानन्दस्य कथनं श्रुत्वा जनकः प्राञ्जलिः कौशिकमाह। हे मुनिपुङ्गव! काकुत्स्थसहितो मम यज्ञं प्राप्तोऽसि। अतोऽहं धन्यः अनुगृहीतश्चास्मि। तव दर्शनेनाहं पावितः। मया बहुविधा लाभाः प्राप्ताश्च। तव तपः अप्रमेयं बलं च तथैव। तव गुणा अप्रमेयाः। आश्चर्यभूताना तव कथानां श्रवणे मे तृप्तिर्नास्ति। रविरस्तं गच्छति। कर्मानुष्ठानकाल उपागतः। श्वः प्रभाते पुनस्तव दर्शनं मे देहि। सम्प्रति मामनुज्ञातुमर्हसि। एवमुक्त्वा जनकः पुरोहितबन्धुभिः सह विश्वामित्रं प्रदक्षिणं कृत्वा जगाम। विश्वामित्रश्च रामलक्ष्मणसमेतो महर्षिभिः पूज्यमानः स्वं निवासं प्रति जगाम।

६५

ततो विमले प्रभाते कृतप्रातःकालनित्यकर्मा जनको राघवसमेतं विश्वामित्रमाजुहाव। यथाविधि तानर्चयित्वोवाच। भगवन्! स्वागतं तेऽस्तु। तव किं कार्यं करोमि? भगवानाज्ञापयतु। अहं तवाज्ञापालकोऽस्मि। मुनिः प्रत्युवाच। इमौ दशरथस्य पुत्रौ लोकविश्रुतौ क्षत्रियौ। तव सकाशे स्थितं श्रेष्ठं धनुर्द्रष्टुकामौ। अतस्तद् धनुर्दर्शय। दर्शनात् कृतकामौ नृपात्मजौ यथेष्टं प्रतियास्यतः। जनकः प्रत्युवाच। यदर्थं तद् धनुरिह तिष्ठति तं वृत्तान्तं शृणु। निमेः षष्ठो देवरात इति महीपतिरासीत्। महात्मना शिवेन तस्य हस्ते न्यास इदं धनुर्दत्तम्। पूर्वं दक्षयज्ञवधे रुद्रो धनुरिदं लीलया आयम्य देवान् रोषादब्रवीत्। हे सुराः! यज्ञभागार्थिनो मे भागान् नाकल्पयत। तस्मादनेन धनुषा युष्माकं शिरांसि छिनद्मि।

ततो व्याकुलचित्ताः सुरा देवेशं प्रासादयन्। शिवस्तेषां प्रीतो बभूव धनुश्च तेभ्यो ददौ। तदेतद् धनूरत्नं देवैरस्माकं पूर्वजे देवराते न्यासभूतम्। एकस्मिन् दिने यागार्थं भूमिं शोधयितुं क्षेत्रमकृषम्। तदा लाङ्गलाग्रभागसमीपभूमे कन्या लब्धा। सीताया उत्पन्नत्वात् तस्या नाम सीतेति विश्रुतमभवत्। भूतलादुत्थिता सा ममात्मजा व्यवर्धत। अयोनिजा सा वीर्यशुल्केति मया निश्चिता। तामेतां वर्धमानां राजान आगम्य वरयामासुः। परन्तु वीर्यशुल्केति न ददामि। ततः सर्वे नृपाः समेत्य मिथिलामुपागम्य राजकुमार्याः सीतायाः प्राप्त्यर्थं कीदृशः पराक्रमो निश्चित इति मामपृच्छन्। तेषां जिज्ञासमानानां मया धनुरुपाहृतम्। ते तु धनुर्ग्रहीतुं वा उध्दर्तुं वा न शेकुः। अल्पवीर्यास्ते मया प्रत्याख्याताः। महामुने! श्रूयतां पश्चाद्वृत्तम्। मया तेषां वीर्यं शङ्कितमिति परमकोपेन राजानो मिथिलामरुन्धन्। आत्मानं तिरस्कृतं मत्वा रोषेण ते मिथिलां पुरीमपीडयन्। पूर्णे संवत्सरे युध्दसाधनानि क्षयं जग्मुः। अहं भृशं दुःखितोऽभवम्। तदा सर्वान् देवगणान् तपसा प्रासादयम्। परमप्रीताः सुराश्चतुरङ्गबलं ददुः। ततः अवीर्याः शङ्कितवीर्याश्च नृपतयः सामात्याः पापकारिणो भग्ना दिशः पलायामासुः। महामुने! तदेतत्परमभास्वरं धनुः। रामलक्ष्मणयोश्च दर्शयिष्यामि। यदि रामोऽस्मिन् धनुषि प्रत्यञ्चां योजयेत् तर्हि सीतामयोनिजां तस्मै दद्याम्।

६६

तदा विश्वामित्रो रामाय धनुर्दर्शयेति जनकमुवाच। गन्धमाल्यविभूषितं दिव्यं धनुरानीयतामिति जनकः सचिवानादिदेश। जनकेनादिष्टा मन्त्रिणः पुरीं प्राविशन्। धनुः पुरतः कृत्वा नगराद् बहिर्निर्जग्मुः। बलिनां व्यायतानां नृणां पञ्च सहस्राणि अष्टचक्रां मञ्जूषां कथमपि समूहुर्यस्यां तद् धनुर्न्यस्तम्। यत्र तद् धनुरासीत् तामायसीं मञ्जूषामानीय मन्त्रिणो

जनकमूचुः। राजन्! इदं सर्वराजभिः पूजितं धनुर्वरम्। यदीच्छसि रामलक्ष्मणाभ्यामेतद् दर्शय। तदा जनकः कृताञ्जलिर्विश्वामित्रं रामलक्ष्मणौ चाभाषत। ब्रह्मन्! इदं जनकवंशीयैरभिपूजितं धनुः। एतद् राजभिः पूरयितुमशक्यमासीत्। अस्य धनुषो नामने गुणारोपणे बाणसंधाने चालने उध्दरणे वा सुरा असुरा राक्षसा गन्धर्वयक्षप्रवराः किंनरा महोरगाश्च न शक्नुवन्ति का गतिर्मनुष्याणाम्? तदेतद् धनुषां श्रेष्ठमानीतम्। अनयो राजपुत्रयोर्दर्शय। जनकभाषितं श्रुत्वा विश्वामित्रो वत्स! राम! धनुः पश्येति राममब्रवीत्। विश्वामित्रवचनाद् रामो यत्र धनुर्निहितं तां मञ्जूषामपावृत्य धनुर्दृष्ट्वाभाषत। बह्मन्! इदं धनुर्वरं पाणिना संस्पृशामि। उध्दरणे नामने च यत्नवान् भवामि। बाढमिति मुनिः समभाषत राजा च। मुनेर्वचनात् स लीलया धनुर्मध्ये जग्राह। बहुषु नृसहस्रेषु पश्यत्सु लीलयेव धनुरारोपयत्। मौर्वीमारोप्याकर्णान्तमाचकर्ष। नरश्रेष्ठो रामो तद् धनुर्मध्ये भञ्जयामास। भज्यमानस्य धनुषो वज्रपातसमः शब्दो बभूव। दीर्यतः पर्वतस्येव सुमहान् भूमिकम्पश्च बभूव। मुनिवरं राजानं रामलक्ष्मणौ च वर्जयित्वा सर्वेऽन्ये जनास्तेन शब्देन मोहिता निपेतुः। प्रत्याश्वस्ते तस्मिन् जने विगतसाध्वसो राजा प्राञ्जलिर्विश्वामित्रमुवाच। भगवन्! सम्प्रति दृष्टवीर्यो मे रामः। मयातर्कितमिदमत्यद्भुतमचिन्त्यं चास्ति। रामं दशरथात्मजं भर्तारं प्राप्य मम सुता सीता जनककुलकीर्तिं विस्तारयिष्यति। सीता वीर्यशुल्केति मम प्रतिज्ञा सत्याभूत्। मम प्राणैरप्यधिका सीता रामाय देया। ब्रह्मन्! भवतोऽनुमते मम मन्त्रिणः शीघ्रं रथैरयोध्यां गच्छन्तु। वीर्यशुल्कायाः सीतायाः प्रदानं पूर्णतः कथयन्तु। प्रश्रितैर्वाक्यै राजानं दशरथं मम पुरमानयन्तु। रामलक्ष्मणौ विश्वामित्ररक्षिताविति वार्तां दशरथाय कथयन्तु। प्रीयमाणं तं शीघ्रमानयन्तु। तथेत्याह कौशिकः। राजा मन्त्रिण आभाष्यायोध्यां प्रेषयामास।

## ६७

जनकसमादिष्टा दूता मार्गे रात्रिषु विश्रान्तास्त्रिदिवसप्रयाणेन क्लान्तवाहना अयोध्यां पुरीं प्राविशन्। राज्ञा अनुज्ञातास्ते राजभवनं प्रवेशिता देवसंकाशं वृध्दं नृपं दशरथं ददृशुः। सर्वे दूता विगतभया वध्दाञ्जलिपुटाः प्रयता राजानं मधुरमब्रुवन्। राजन्! मैथिलो जनकः अग्निहोत्रसमेतं+ सोपाध्यायपुरोहितं सपरिवारं त्वां क्षेमं योगं च मुहुर्मुहुर्मधुरया स्नेहसंयुक्तया गिरा पृच्छति। श्रध्दया जनकस्त्वां कुशलं पृष्ट्वा विश्वामित्रसंमत्या भवन्तमिदं वक्ति। ममात्मजा वीर्यशुल्केति पूर्वं मया कृता प्रतिज्ञा सर्वेषां विदिता। अमर्षेणागता राजानो निर्वीर्या इति निर्णीता विमुखीकृताः। सेयं मम सुता विश्वामित्रमनुसृत्य यदृच्छयागतेन तव पुत्रेण* रामेण निर्जिता। महत्यां जनसभायां महात्मना रामेण तद् दिव्यं धनुर्मध्ये भग्नम्। अस्मै महात्मने वीर्यशुल्का सीता मया देया। प्रतिज्ञां तरितुमिच्छामि। तदनुज्ञातुमर्हसि। महाराज! सोपाध्यायः पुरोहितपुरस्कृतश्च शीघ्रमागच्छ। राघवौ द्रष्टुमर्हसि। इहागत्य मम प्रीतिं निर्वर्तयितुमर्हसि। त्वमपि पुत्रयोरुभयोः प्रीतिं लप्स्यसे। एवं विदेहाधिपतिर्विश्वामित्राभ्यनुज्ञातः शतानन्दमते स्थितो मधुरं वाक्यमब्रवीत्। दूतवाक्यं श्रुत्वा परमहर्षितो राजा वसिष्ठं वामदेवं मन्त्रिणश्चाब्रवीत्। कौशिकेन गुप्तो रामो लक्ष्मणसमेतः विदेहेषु वसति। महात्मना जनकेन रामो दृष्टवीर्यः। रामाय सुतायाः संप्रदानं कर्तुमिच्छति। यदि महात्मनो जनकस्य चरितं वो रोचते शीघ्रं मिथिलां गच्छामः। मा भूद्विलम्बः। तदा बाढमिति ऋषिभिः सह मन्त्रिणोऽवदन्। सुप्रीतो राजा श्वो यात्रेति मन्त्रिण आह। समस्तसद्गुणसंपन्ना जनकमन्त्रिणो नरेन्द्रेण सत्कृता वभूवुः। ते प्रमोदेन तां रात्रिमूषुः।

---

+ cr पुरस्कृतः। ग्राह्यः - पुरस्कृतम्। *पुत्रकैः इति पाठः। पूजायां वहुवचनं जामातृत्वाध्यवसायात् महाराजकुमारत्वाद् वा पूजा। अल्पार्थेन कप्रत्ययेन बाल्यं द्योतितम्। इति गोविन्दराजः।

६८

अपरेद्युः प्रभाते उपाध्यायबन्धुजनसमेतो हृष्टो राजा दशरथः सुमन्त्रमब्रवीत्। सर्वे धनाध्यक्षाः पुष्कलं धनं नानारत्नानि चादाय सुरक्षिता अद्याग्रे व्रजन्तु। ममाज्ञया तत्क्षणं चतुरङ्गबलं निर्यातु। रथान्दोलिकादिवाहनानि च निर्यान्तु। वसिष्ठो वामदेवो जाबालिः काश्यपो दीर्घायुर्मार्कण्डेयः कात्यायनश्चैते द्विजा अग्रे प्रयान्तु। मम रथं योजयस्व। कालात्ययो मा भूत्। दूता मां त्वरयन्ति। नरेन्द्रस्य वचनात् चतुरङ्गिणी सा सेना ऋषिभिः सार्धं व्रजन्तं राजानमन्वगात्। चतुरहः-प्रयाणेन दशरथो विदेहान् प्राप। श्रुत्वा राजा जनकस्तस्य पूजामकल्पयत्। राजा जनको वृध्दं नृपं दशरथमासाद्य परमं मोदं प्रापोवाच च। महाराज! स्वागतं ते। अस्मद्भाग्येन प्राप्तोऽसि। उभयोः पुत्रयोः पराक्रमजनितां प्रीतिं लप्स्यसे। भगवान् वसिष्ठः सर्वैर्द्विजवरैः सह देवैः शतक्रतुरिवास्माकं भाग्येनागतः। दिष्ट्या मे विघ्ना निर्जिताः। वीर्यश्रेष्ठैर्महात्मभिः राघवैः सह संबन्धाद् दिष्ट्या मे कुलं पूजितम्। यज्ञस्यान्ते श्वः प्रभाते ऋषिसंमतं विवाहं निर्वर्तयितुमर्हसि। ऋषिमध्ये तद्वचनं श्रुत्वा दशरथो जनकं प्रत्युवाच। प्रतिग्रहो दातृवश इति पुरा मया श्रुतम्। धर्मज्ञ! यथा त्वं वक्ष्यसि तथा वयं करिष्यामहे। सत्यवादिनो दशरथस्य धर्मिष्ठं यशस्करं वचनं श्रुत्वा जनकः परं विस्मितवान्। ततः सर्वे मुनिगणाः परस्परसमागमे महता हर्षेण युक्ता निशां सुखमवसन्। दशरथो द्वौ पुत्रौ दृष्ट्वा हर्षितो जनकेन पूजितः परमया प्रीत्योवास। जनकश्च धर्मानुसारेण यज्ञकर्माणि समाप्य सुतयोर्विवाहार्थं मङ्गलाचारं कृत्वा तां रात्रिमुवास।

६९

ततः प्रभाते महर्षिभिर्निर्दिष्टो जनको यज्ञादिक्रियाः कृत्वा पुरोहितं शतानन्दमुवाच। अतिधार्मिको मे यवीयान् भ्राता कुशध्वज इक्षुमतीनदीतीरस्थितां

पवित्रां पुष्पकविमानसदृशीं शत्रुनिवारणयन्त्रपरिवृतां शुभां साङ्काश्यां पुरीमधिवसति। स मम यज्ञरक्षकोऽभवत्। तमहमिदानीं द्रष्टुमिच्छामि। सीताविवाहसंदर्भे मया सह स प्रीतिमनुभविष्यति। विष्णुमिन्द्राज्ञयेव कुशध्वजं समानेतुं नरेन्द्रस्य शासनात् शीघ्रवाजिभिर्दूताः प्रययुः। नरेन्द्रस्याज्ञया कुशध्वज आगम्य महात्मानं जनकं ददर्श। शतानन्दं जनकं चाभिवाद्य राजार्हं श्रेष्ठमासनमध्यतिष्ठत्। उपविष्टौ भ्रातरौ हे मन्त्रिवर! गच्छ। राजानं दशरथं पुत्रमन्त्रिभिः सहानयस्वेति मन्त्रिश्रेष्ठं सुदामनं प्रेषयामासतुः। स औपकार्यां गत्वा दशरथं ददर्श। शिरसा प्रणम्येदमब्रवीत्। महाराज! मिथिलापतिर्जनकः सोपाध्यायपुरोहितं त्वां द्रष्टुमुत्सुकोऽस्ति। श्रेष्ठमन्त्रिणो वचनान्मुनिबन्धुसमेतो दशरथो जनकसमीपं ययौ। स जनकमिदमाह। महाराज! विदितं ते यदिक्ष्वाकुकुलदैवतं भगवान् वसिष्ठः सर्वेषु कार्येषु अस्मत्कर्तव्योपदेष्टेति। विश्वामित्रेण सर्वैर्महर्षिभिश्चाभ्यनुज्ञातो वसिष्ठो मम वंशक्रमं वक्ष्यति। दशरथवचनानन्तरं भगवान् वसिष्ठः सपुरोहितं जनकमभाषत। अव्यक्तप्रभवः शाश्वतो नित्यः अव्ययो ब्रह्मास्ति। तस्मान्मरीचिर्जातः। मरीचेः सुतः कश्यपः। कश्यपात् सूर्यो जज्ञे तस्य पुत्रो वैवस्वतो मनुरभवत्। मनुः पूर्वं प्रजापतिरासीत्। इक्ष्वाकुर्मनोः सुतः। स एवायोध्यायाः प्रथमो राजा। इक्ष्वाकोः सुतो विकुक्षिः। विकुक्षेः सुतो बाणः। बाणस्य सुतः अनरण्यः। अनरण्यस्य सुतः पृथुः। पृथोः सुतः त्रिशङ्कुः। त्रिशङ्कोः सुतो धुन्धुमारः। धुन्धुमारस्य युवनाश्वः पुत्रः। युवनाश्वस्य पुत्रो मान्धाता। मान्धातुः सुसन्धिः पुत्रः। सुसन्धेर्द्वौ पुत्रौ ध्रुवसन्धिः प्रसेनजिच्च। ध्रुवसन्धेः सुतो भरतः। असितो भरतस्य पुत्रः। असितस्य क्षत्रदेव्यां पुत्रः सगरो व्यजायत[+]। गरेण सह जातः स सगर इति नाम प्राप। सगरस्य पुत्रः

---

[+] पङ्क्तिर्ग्राह्या। असितात् सगरः पुत्रः क्षत्रदेव्यां व्यजायत।

असमञ्जः। असमञ्जस्यांशुमान् पुत्रः। अंशुमतो दिलीपः पुत्रः। दिलीपस्य भगीरथः सुतः। भगीरथपुत्रः ककुत्स्थः। ककुत्स्थस्य पुत्रो रघुः। रघोः पुत्रः प्रवृध्दः। स शापाद् राक्षसो बभूव यः कल्माषपादनाम्ना प्रसिध्दः। तस्य पुत्रः शङ्खणः। शङ्खणस्य पुत्रः सुदर्शनः। सुदर्शनपुत्रः अग्निवर्णः। अग्नि-वर्णपुत्रः शीघ्रगः। शीघ्रगस्य पुत्रो मरुः। मरोः पुत्रः प्रशुश्रुकः। प्रशुश्रुकपुत्रः अम्बरीषः। अम्बरीषपुत्रो नहुषः। नहुषस्य ययातिः पुत्रः। ययातेर्नाभागः। नाभागस्य पुत्रः अजः। अजस्य पुत्रो दशरथः। दशरथस्य पुत्रौ रामलक्ष्मणौ। इक्ष्वाकुकुलोत्पन्नानां राज्ञां वंश आदिकालात् शुध्दः। सर्वे ते धर्मात्मानः सत्यवादिनश्च सन्ति। महाराज! तस्मिन् वंशे जातयो रामलक्ष्मणयोरर्थे त्वत्सुते वरये। सदृशाभ्यां वराभ्यां सदृशे वध्वौ त्वत्सुते दातुमर्हसि।

७0

एवं कथितवन्तं वसिष्ठं कृताञ्जलिर्जनकः प्रत्युवाच। भद्रं ते। वयं चास्मत्कुलं कथयामः। श्रोतुमर्हसि। महामुने!कन्याप्रदानसमये कुलीनेन निरवशेषतः स्वकुलं वक्तव्यम्। तन्निबोध। स्वेन कर्मणा त्रिषु लोकेषु विश्रुतो राजा निमिः परमधर्मात्मा सर्वसत्त्ववतां वर आसीत्। तस्य पुत्रो मिथिः। मिथेः पुत्रो जनकः। सः आस्मत्कुलनृपेषु प्रथमो जनकः*। जनकादुदावसुर्बभूव। उदावसोर्नन्दिवर्धनो जातः। सुकेतुर्नन्दिवर्धनस्य पुत्रः। सुकेतोः पुत्रो देवरातः। देवरातस्य पुत्रो बृहद्रथः। बृहद्रथस्य महावीरः सुतः। महावीरस्य सुधृतिः पुत्रः। सुधृतेर्धृष्टकेतुः सुतः। धृष्टकेतोर्हर्यश्वः सुतः। हर्यश्वस्य पुत्रो मरुः। मरोः सुतः प्रतीन्धकः। प्रतीन्धकस्य कीर्तिरथः पुत्रः। कीर्तिरथस्य देवमीढः पुत्रः। देवमीढस्य विबुधो विबुधस्य महीध्रकः। महीध्रकस्य पुत्रः कीर्तिरातः। कीर्तिरातस्य

---

* तन्नाम्ना सर्वे तद्वंशीया राजानो जनकाः कथिताः।

महारोमा पुत्रः। महारोम्णः स्वर्णरोमा पुत्रः। स्वर्णरोम्णो ह्रस्वरोमा पुत्रः। तस्य पुत्रद्वयं जज्ञे। अहं ज्येष्ठः। ममानुजः कुशध्वजः। मां ज्येष्ठं पिता राज्येऽभिषिच्य कुशध्वजस्य पोषणभारं मयि समावेश्य वनं गतः। वृध्दे पितरि दिवं गते देवतुल्यं भ्रातरं कुशध्वजं स्नेहात् पश्यन् धर्मेण राज्यमपालयम्। अथ कस्यचित् कालस्य सांकाश्यपुरात् पराक्रमी राजा सुधन्वा आगम्य मिथिलापुरमुपरुरोध। शिवधनुस्ते कन्या सीता च मे दीयतामिति स मे दूतं प्रेषयामास। तस्याप्रदानादावयोर्युध्दमभवत्। रणे अभिमुखः स मया हतः। सुधन्वानं निहत्य साङ्काश्ये भ्रातरं कुशध्वजमभ्यषिञ्चम्। अहं ज्येष्ठो मम भ्राता कनीयांश्च। परमप्रीतो ते वध्वौ ददामि। सीतां रामायोर्मिलां लक्ष्मणाय च ददामि। वीर्यशुल्कां सीतां रामाय द्वितीयामूर्मिलां लक्ष्मणाय च त्रिभिः करणैर्ददामि। रामलक्ष्मणयोर्गोदानं कारयस्व नान्दीमुखं च। ततो विवाहं कुरु। प्रभो! अद्य मघा। तृतीये दिने उत्तरफल्गुनीनक्षत्रे वैवाहिकं कुरु। रामलक्ष्मणयोरर्थे दानं कार्यं येन सुखं भविष्यति।

७१

एवमुक्तवन्तं जनकं विश्वामित्रवसिष्ठावब्रूताम्। हे नरश्रेष्ठ! इक्ष्वाकूणां विदेहानां वंशा अचिन्त्या अप्रमेयाश्च सन्ति। कोऽप्येषां तुल्यो नास्ति। रामलक्ष्मणयोः सीतोर्मिलयोः सह विवाहे धर्मसंबन्धः सदृशः। तेषां रूपसंपदा च परस्परसदृशो विवाहः*। मम वक्तव्यं वचनं श्रूयताम्। तव यवीयसो भ्रातुः कुशध्वजस्य रूपवत् सुताद्वयमस्ति। ते कन्ये भरतशत्रुघ्न-योः पत्न्यर्थं वरयामहे। दशरथस्येमे चत्वारः पुत्रा रूपयौवनशालिनो लोकपालोपमा देवतुल्यपराक्रमाश्च सन्ति। राजेन्द्र! तेषां तव ते भ्रातुश्च पुत्रीणां च विवाहेनेक्ष्वाकुकुलं पुण्यकर्मणो भवतः कुलेन दृढमनुबध्यताम्।

* श्लोक (३) स्य अर्थ ऊह्यः। सर्वत्रायं श्लोक एवमेव विद्यते।

वसिष्ठसंमतं विश्वामित्रवचनं श्रुत्वा जनकः प्राञ्जलिस्तावुवाच। यद् भवन्तौ स्वयमाज्ञापयतस्तत् सदृशं मन्यामहे इक्ष्वाकुजनकयोः कुलसंबन्धम्। एवं भवतु। कुशध्वजसुते भरतशत्रुघ्नौ वृणुताम्। एकाहे चतसृणां राजपुत्रीणां पाणीन् चत्वारो राजपुत्रा गृह्णन्तु। ब्रह्मन्! पूर्वफल्गुन्युत्तरफल्गुनीनक्षत्राभ्यां युक्तयोर्दिनयोर्यत्र संतानदाता भगो देवता तस्मिन्नुत्तरफल्गुनीयुक्त उत्तरे दिवसे विवाहं मनीषिणः प्रशंसन्ति। एवं सौम्यं वचनमुक्त्वा जनक उत्थाय कृताञ्जलिर्मुनिवरावुवाच। इत्थं विवाहान् निश्चित्य भवद्भ्यां मह्यं महान् धर्मः संपादितः। अयोध्यामिथि-लासांकाश्यानां सिंहासनानि भवन्तौ अधितिष्ठताम्। यथा दशरथस्य मिथिलायामधिकारोऽस्ति तथा मम चायोध्यायाम्। प्रभुत्वविषये सन्देहो नास्ति। यथार्हं भवन्तौ कर्तुमर्हतः। एवमुक्तवति मिथिलेशे हृष्टो दशरथः प्रत्युवाच। भवान् भवतो भ्राता कुशध्वजश्चागण्यगुणौ। भवद्भ्यामृषयो राजसंघाश्चाभिपूजिताः। स्वस्ति प्राप्नुहि। भद्रं ते। स्वविश्रामस्थानं गमिष्यामि। विधिवन्नान्दीमुखश्राध्दकर्माणि* विधास्ये। ततो जनकस्यानुमतिं प्राप्य विश्वामित्रवसिष्ठसहितो दशरथः स्वमावासं जगाम। तदा विधानतः अभ्युदयश्राध्दं कृत्वा अपरेद्युः प्रातःकाले उत्थाय पुत्राणां स्नातकव्रतं चक्रे। एकैकशः पुत्रानुद्दिश्य दशरथो ब्राह्मणेभ्यो धर्मानुसारेण गवां शतसहस्राणि ददौ। सुवर्णशृङ्गाणां संपन्नानां सवत्सानां भूरि क्षीरं ददानानां गवां चतुरो लक्षानन्यत् सुबहु वित्तं च पुत्राणां स्नातकव्रतवेलायां दशरथो ब्राह्मणेभ्यो ददौ। तदा कृतस्नातकव्रतैः पुत्रैर्वृतो दशरथो लोकपालैर्वृतः प्रसन्नो ब्रह्मेव बभासे।

---

* श्राध्दमशुभकर्म नास्ति। ब्राह्मणदेवतापितृतृप्तिकरं शुभकर्म तत्। पुत्रजननात् श्राध्दकर्म यथा विष्णुपुराणे (गीतप्रेस्) ३-१०-४. जातस्य जातकर्मादिक्रियाकाण्डमशेषतः पुत्रस्य कुर्वीत पिता श्राध्दं चाभ्युदयात्मकम्। तथा३-१३-१. तथा – विषुवे चापि संप्राप्ते ग्रहणे शशिसूर्ययोः समस्तेष्वेव भूपाल राशिष्वर्के च गच्छति नक्षत्रग्रहपीडासु दुष्टस्वप्नावलोकने इच्छाश्राध्दानि कुर्वीत नवसस्यागमे तथा।। ३-१४-५,६.

## ७२

यस्मिन् दिने राजा दशरथः पुत्राणां गोदानव्रतं चक्रे तस्मिन् दिवसे केकयराजस्य पुत्रो भरतस्य मातुलो युधाजित् समुपागम्य राजानं दृष्ट्वा कुशलं पृष्ट्वा इदमब्रवीत्। केकयपतिस्त्वां स्नेहात् कुशलं पृच्छति। येषां त्वं कुशलकामोऽसि ते सर्वे सम्प्रति कुशलिनः। मम पिता+ दौहित्रं द्रष्टुकामोऽस्ति। तं नेतुमयोध्यां गतोऽस्मि। तत्र तव पुत्रान् त्वया सह विवाहार्थं मिथिलामुपगतान्श्रुत्वा स्वसुः सुतं द्रष्टुकामस्त्वरयाभ्युपयातोऽस्मि। ततो दशरथः प्रियातिथिमुपस्थितं दृष्ट्वा परमसत्कारैः पूजयामास। पुत्रैः सह दशरथस्तां रात्रिमुषित्वा अपरेद्युः ऋषिभिः सह जनकस्य यज्ञवाटमुपजगाम। तत्पश्चाद् विजयाख्ये मुहूर्ते कृतकौतुकमङ्गलो रामः सर्वाभरणभूषितैर्भ्रातृभिः सहितो वसिष्ठं महर्षींश्च पुरस्कृत्य पितृसमीपमाययौ++। तदा भगवान् वसिष्ठ एत्य महाराज! राजा दशरथः पुत्राणां मङ्गलकौतुकं परिसमाप्य दातारमभिकाङ्क्षति। एतादृशानि कर्माणि दातृप्रतिग्रहीत्रोः समवायेनैव सिध्यन्ति। अतो विवाहकृत्यं कृत्वा स्वधर्मं समाचर। इति जनकमाह। जनकः प्रत्युवाच। द्वारे भवतां निरोधकः प्रतिहारः कः स्थितः? कस्याज्ञा संप्रतीक्ष्यते? इदं भवतां स्वगृहमेव। यथेच्छं भवद्भिरिहागन्तव्यम्। स्वगृहे विचारो नास्ति। इदं राज्यं तव राज्यसदृशमेव। कृतकौतुकसर्वस्वा मम कन्या दीप्ता वह्नेरर्चिष इव वेदिमूलमुपाश्रिताः सन्ति। विवाहनिर्वहणार्थं सज्जोऽहं वेदीसमीपे प्रतिष्ठितस्त्वां प्रतीक्षे। राजा अविघ्नं विवाहकार्यं कुरुताम्। विलम्बो मा क्रियताम्। जनकेनोक्तं तद् वाक्यं श्रुत्वा दशरथः सुतानृषिगणांश्च प्रवेशयामास। जनको राममब्रवीत्। राम! भद्रं ते। इयं मम सुता सीता तव सहधर्मचरी भवति।

---

+ cr महीपते। ग्राह्यः – महीपतिः। ++ पङ्क्तिर्ग्राह्या–पितुः समीपमाश्रित्य तस्थौ भ्रातृभिरावृतः।

इमां स्वीकुरु। अस्याः पाणिं तव पाणिना गृह्णीष्व। ततो लक्ष्मणमूचे। लक्ष्मण! आगच्छ। भद्रं ते। मया ते दातुं निश्चितामूर्मिलां स्वीकुरु। पाणिं पाणिना गृहाण। कालविलम्बो मास्तु। ततो भरतमभ्यभाषत। भरत! माण्डव्याः पाणिं पाणिना गृहाण। ततो राजा जनकः शत्रुघ्नमाह। श्रुतकीर्त्याः पाणिं पाणिना गृह्णीष्व। भवन्तः सर्वे सौम्याः सुचरितव्रताश्च पत्नीभिः सहिताः सन्तु। कालातिक्रमणं मा भूत्। जनकस्य वचनेन चत्वारस्ते वरा वशिष्ठमते स्थिताश्चतसृणां कन्यानां पाणीन् जगृहुः। महात्मानस्ते रघुवंशकुमारा भार्यासमेता अग्निं वेदिं जनकं दशरथं च प्रदक्षिणीकृत्य वसिष्ठादिभिरुक्तेन प्रकारेण यथाविधि विवाहं चक्रुः। रघुकुमाराणां विवाहे अन्तरिक्षात् सुप्रकाशमाना महती पुष्पवृष्टिः पपात। दिव्यदुन्दुभिनिर्घोषैर्गीतवादित्रनिस्वनैश्च अप्सरःसंघा ननृतुः। गन्धर्वा मधुरं जगुः। तत्सर्वं चाश्चर्यकरं बभूव। ईदृशे तूर्यादीनां निनादे प्रवर्तमाने रामलक्ष्मणभरतशत्रुघ्नास्त्रिरग्निं परिक्रम्य भार्या ऊहुः। ततस्ते रघुनन्दनाः पत्नीभिः सहिता उपकार्यां जग्मुः। ऋषिबन्धुसहितो राजा च पश्यन्ननुययौ।

७३

अपरेद्युः प्रभाते महर्षिर्विश्वामित्रो जनकदशरथावापृच्छ्य हिमवत्पर्वतं जगाम। तत्पश्चाज्जनकस्यानुमतिं प्राप्य दशरथः स्वनगरं यियासुर्बभूव। तदा जनको बहु कन्याधनं ददौ। गवां बहूनि शतसहस्राणि असंख्यानुत्तमकम्बलान् कोटिशः क्षौमवस्त्राणि हस्त्यश्वरथपदातिसमूहान् स्वलंकृतं दिव्यरूपमुत्तमं बहु दासीदासं स्वर्णरजतमुक्ताविद्रुमनिचयांश्च परमसंहृष्टः कन्याधनं ददौ। पश्चाद् दशरथस्याज्ञां प्राप्य जनकः स्वनिलयं मिथिलां प्रविवेश। दशरथः पुत्रैः सह सर्वानृषीन् पुरस्कृत्य ससैन्यानुचरः स्वराजधानीं प्रति प्रतस्थे। ऋषिभिः सह गच्छन्तं नरश्रेष्ठं दशरथं ततस्ततो घोराः पक्षिणो व्याहरन्ति स्म। भूमिगता मृगास्तं

दक्षिणतोऽगच्छन्। तान् दृष्ट्वा दशरथो वसिष्ठं पर्यपृच्छत्। घोराः पक्षिणोऽस्मत्प्रतिकूलाः सन्ति। मृगास्तु अस्मत्प्रदक्षिणा अनुकूलाः सन्ति। कथमेतत्? हृदयं कम्पयत् किमिदमुपस्थितम्? मम मनो विषीदति। महर्षिर्वसिष्ठो मधुरां वाणीं प्रत्युवाच। राजन्! अस्य फलं श्रूयताम्। पक्षिरवैर्घोरं भयं सूचितम्। दक्षिणतो गच्छन्तो मृगास्तद् भयं प्रशमयन्ति। तस्मात् त्यज्यतां सन्तापः। तेषु संवदत्सु तत्र मेदिनीं कम्पयन् सुन्दरान् द्रुमान् पातयंश्च वायुः प्रादुरासीत्। सूर्यस्तमसा संवृतः। सर्वा दिशो न प्रबभुः। धूल्या आवृतं सर्वं तद् बलं संमूढमिवाभवत्। तदा वसिष्ठः अन्ये ऋषयः सुतैः सहितो राजा च तत्र चैतन्ययुता आसन्। सर्वमन्यद् विचेतनमासीत्। तस्मिन् घोरे तमसि भस्मच्छन्नवत् स्थिता सा चमूः भीमं जटामण्डलधारिणं कैलासमिव दुरासदं कालाग्निमिव दुस्सहं तेजोभिर्ज्वलन्तमिव साधारणजनैर्दुर्निरीक्ष्यं स्कन्धे परशुं विद्युद्गणोपमं धनुश्चासज्य श्रेष्ठं शरं प्रगृह्य त्रिपुरघ्नं हरमिव भासमानं राजराजविनाशकं भार्गवं जामदग्न्यं+ ददर्श। भयंकरं तं ज्वलन्तं पावकमिव दृष्ट्वा जपहोमपरायणा वसिष्ठप्रमुखा विप्राः सर्वे मुनयश्च संगता मिथः संजजल्पुः। पितृवधजातकोपोऽसौ कच्चित्क्षत्रं नोत्सादयिष्यति? पूर्वं क्षत्रवधं कृत्वा गतमन्युर्गतमनस्तापश्चासावभवत्। अपि नाम भूयः क्षत्रवधोऽस्य चिकीर्षितः स्यात्? एवमन्योन्यमुक्त्वा अर्घ्यं गृहीत्वा ऋषयो भीमदर्शनं भार्गवं राम रामेति व्याहरन्तः संभाषितुमुपजग्मुः। ऋषिदत्तां तां पूजां प्रतिगृह्य प्रतापवान् जामदग्न्यो दशरथपुत्रं राममभ्यभाषत।

७४

हे वीर! राम! दाशरथे! अद्भुतं तव वीर्यं श्रूयते। शिवधनुर्भेदनं च मया श्रुतम्। त्वया कृतं शिवधनुषो भेदनमाश्चर्यकरमचिन्त्यं चास्ति।

---

+ पङ्क्तिर्ग्राह्या–भार्गवं जामदग्न्यं तं राजराजविमर्दिनम्।

तच्छ्रुत्वापरमुत्तमं धनुर्गृहीत्वाहमागतोऽस्मि। तस्मादिदं घोरं महत् जामदग्न्यस्य धनुः शरेण पूरय स्वबलं च प्रदर्शय। तदाहमस्य धनुषः प्रपूरणे ते बलं दृष्ट्वा ते वीर्यश्लाघ्यं द्वन्द्वयुध्दं प्रदास्यामि। भार्गवरामस्य तद् वचनमाकर्ण्य दशरथो विषण्णवदनो दीनः प्राञ्जलिरब्रवीत्। त्वं क्षत्ररोषात् प्रशान्तो ब्राह्मणश्च। कृपया मम पुत्राणां बालानामभयं देहि। स्वाध्यायव्रतशालिनां भार्गवाणां कुले जातोऽसि। सहस्राक्षसकाशे प्रतिज्ञाय शस्त्रं निक्षिप्तवानसि। स त्वं धर्मपरो भूत्वा काश्यपाय वसुन्धरां दत्वा महेन्द्रपर्वतमधिवससि। अधुना मम सर्वविनाशाय त्वं संप्राप्तः। एकस्मिन् रामे हते वयं सर्वे न जीवामः। एवं दशरथे ब्रुवति प्रतापवान् जामदग्यस्तद् वाक्यमनादृत्य राममेवाभ्यभाषत। इमे द्वे धनुषी श्रेष्ठे दिव्ये लोकविश्रुते बलवती विश्वकर्मणा सुकृते च स्तः। तयोरेकं त्रिपुरघ्नं युयुत्सवे त्र्यम्बकाय सुरैर्दत्तं यत् त्वया भग्नम्। दुर्धर्षमिदं द्वितीयं धनुः सुरोत्तमैर्विष्णोर्दत्तम्। इदं रौद्रेण धनुषा समानसारम्। तदा सर्वा देवताः पितामहमपृच्छन्। विष्णुशिवयोर्बले को ज्यायान् इति। देवतानामभिप्रायं विज्ञाय ब्रह्मा विष्णुशिवयोर्विरोधं जनयामास। विरोधाद् विष्णुशिवयोः परस्परजयैषिणोर्महद् रोमहर्षणं युध्दं बभूव। तदा विष्णोर्हुंकारेण भीमपराक्रमं शैवं धनुः शिथिलं बभूव। त्रिलोचनश्चाथ स्तम्भितः। देवै-र्ऋषिभिरन्यैश्च प्रार्थितौ हरिहरौ प्रशम्य जग्मतुः। विष्णोः पराक्रमेण शिथिलं तद् धनुर्दृष्ट्वा ऋषिगणैः सहिता देवा विष्णुमधिकं मेनिरे। संक्रुध्दो रुद्रस्तु ससायकं धनुर्विदेहेषु देवरातस्य हस्ते ददौ। परपुरंजयमिदं वैष्णवं धनुर्विष्णुर्भार्गवे ऋचीके उत्तमं न्यासं प्रादात्। महातेजा ऋचीकः अतुलकर्मणः स्वपुत्रस्य मम पितुर्जमदग्नेर्ददौ। तपसि लग्ने मम पितरि न्यस्तशस्त्रे पामरबुध्दिः कार्तवीर्योऽर्जुनो मम पितरममारयत्। अतुलं सुदारुणं पितुर्वधं श्रुत्वा रोषात् क्षत्रं जातं जातं बहुशो व्यनाशयम्।

अखिलां पृथिवीं प्राप्य यज्ञं कृत्वा तदन्ते पुण्यकर्मणे काश्यपाय दक्षिणां दत्वा महेन्द्रपर्वते तपोलग्न आसम्। शिवधनुर्भेदं श्रुत्वा द्रुतमागतोऽस्मि। तदिदं महत् पितामहपितृक्रमादागतं वैष्णवमुत्तमं धनुः। क्षत्रधर्मं पुरस्कृत्य गृह्णीष्व। श्रेष्ठे धनुषि परपुरंजयं शरं योजयस्व। राम! यदि तथा कर्तुं शक्नोषि ततस्ते द्वन्द्वं दास्यामि।

७५

जामदग्न्यस्य वाक्यं शृण्वन् रामः पितुर्गौरवात् तावदवाक् स्थित्वा अन्ततो भार्गवमिदमाह। भार्गव! यत् कर्म त्वं कृतवानसि तदस्माभिः श्रुतम्। त्वं पितुरानृण्यमास्थितः। त्वत्कर्मानुरुन्ध्मः। वीर्यहीनं क्षत्रधर्माशक्तमिव मामवजानासि। इदानीं मम बलं पराक्रमं च पश्य। एवमुक्त्वा क्रुध्दः क्षिप्रपराक्रमो राघवो भार्गवस्य हस्ताद् धनुः शरं च गृहीत्वा ज्याबन्धनं कृत्वा बाणं संदधौ। ततो जमदग्निपुत्रं राममुवाच। त्वं ब्राह्मणो मे पूज्योऽसि। विश्वामित्रेण ते संबन्धश्चास्ति। ततस्ते प्राणहरं शरं मोक्तुं न शक्तोऽस्मि। तव सर्वत्र शीघ्रतया गमनागमनशक्तिं वा तपोबलसमार्जिताननुपमपुण्यलोकान् वा यदिच्छसि तद् हनिष्यामि। न ह्ययं परपुरंजयो दिव्यो वैष्णवः शत्रुबलदर्पविनाशनः शरो मोघवीर्यः पतति। तदोत्तमवैष्णवधनुर्धरं रामं द्रष्टुमृषिगणैः सह सुराः पितामहं पुरस्कृत्य तत्राजग्मुः। गन्धर्वा अप्सरसः सिध्दचारणकिंनरा यक्षराक्षसनागाश्च तन्महदद्भुतं द्रष्टुमाजग्मुः। वरधनुर्धरति रामे सर्वो लोको जडीकृतः। निर्वीर्यो जामदग्न्यो रामो दाशरथिं राममुदैक्षत। रामतेजसा हतवीर्यो जडीकृतो जामदग्न्यो रामं मन्दं मन्दमुवाच। यदा पूर्वं मया काश्यपाय वसुन्धरा दत्ता मम विषये त्वया न वस्तव्यमिति स मामाह। तस्मादहं गुरोर्वचः कुर्वन् निशां षृथिव्यां न वसामि। इति काश्यपाय मया प्रतिज्ञा कृता। तदिमां मम शीघ्रगमनशक्तिं हन्तुं नार्हसि। महेन्द्रपर्वतं मनोजवेन

गमिष्यामि। अनुपमाः पुण्यलोका ये मया विजितास्तान् शरमुख्येन सपदि जहि। धनुषोऽस्य सज्यीकरणात् त्वामक्षय्यं विष्णुं जानामि। स्वस्ति तेऽस्तु। अप्रतिमकर्माणं युध्दे अप्रतिद्वन्द्वं त्वामेते सर्वे समागताः सुरगणा निरीक्षन्ते। यदहं त्रैलोक्यनाथेन त्वया पराजितस्तल्लज्जितो न भवामि। हे सुव्रत! राम! अप्रतिमशरं मोक्तुमर्हसि। शरमोक्षे महेन्द्रपर्वतं गमिष्यामि। एवमुक्तवति रामे भार्गवे रामो दाशरथिः शरं मुमोच। ततः सर्वा दिशश्चोपदिशश्च तिमिररहिता बभूवुः। ऋषिगणैः सह सुरा उत्तमायुधधरं रामं प्रशशंसुः। जामदग्न्यो दाशरथिं प्रशंस्य प्रदक्षिणीकृत्य स्वमार्गं जगाम।

७६

जामदग्न्ये गते प्रशान्तात्मा रामो दाशरथिः ससायकं धनुरपारशक्तिशालिने वरुणाय ददौ। ततो रामो वसिष्ठप्रमुखानृषीनभिवाद्य महाविकलं पितरं प्रोवाच। गतो जामदग्न्यो रामः। त्वया संरक्षिता चतुरङ्गिणी सेना अयोध्याभिमुखी प्रयातु। रामस्य वचनं श्रुत्वा दशरथस्तं संपरिष्वज्य मूर्ध्न्याघ्राय हृष्टः सेनां चोदयामास। बहुविधाल्पबृहत्पताकायुतां रम्यां तूर्योद्घोषप्रतिशब्दितां सिक्तराजपथां प्रकीर्णकुसुमोत्करां राजप्रवेशहर्षितैर्मङ्गलवादिभिः पौरैः संपूर्णां जनौघैः शोभमानामयोध्यां पुरीं राजा प्रविवेश। राजपत्न्यः कौसल्या सुमित्रा कैकेयी वधूप्रतिग्रहे युक्ता अन्याश्च सीतामूर्मिलां माण्डवीं श्रुतकीर्तिं च राजसौधे आनयन्। सर्वा वध्वो मङ्गलकरैः शरीरलेपनैः शोभिता आशु देवतायतनानि प्रत्यपूजयन्। सर्वा राजकुमार्यो वन्दनीयानभिवाद्य मुदिता भर्तृभिः सह रहो रेमिरे। विवाहिता अस्त्रविद्यानिपुणाः सधनाः समित्रा दशरथपुत्राः पितरं शुश्रुषमाणा अनुसस्रुः। तेषामतियशाः सत्यपराक्रमो रामः सर्वप्राणिनां ब्रह्मेव गुणवत्तरो बभूव। सीतारामौ परस्परमनोलग्नौ बभूवतुः। रामः

सीतया सार्धं बहूनृतून् विजहार। पितृकृता दारा इति सीता रामस्य प्रिया बभूव। तस्याः शीलाद् रूपगुणाच्च तस्य प्रेमा भूयो व्यवर्धत। सीतायाश्च रामो द्विगुणं प्रियो बभूव। तौ पूर्णतः परस्परहृदयज्ञावास्ताम्। जनकसुता सीता देवतासमरूपा श्रीरिव रूपिणी रामस्य हृदये बहुगुणं वर्तते स्म। दशरथसुतो रामः अभिरामया अत्यन्तस्पृहणीयया सीतया सह श्रिया सह विष्णुरिव शुशुभे।

समाप्तं बालकाण्डम्



# अयोध्याकाण्डम्

## १

अथ कस्मिंश्चित् काले गते दशरथः पुत्रं भरतमुवाच। पुत्रक! केकयराजपुत्रस्तव मातुलो युधाजित् त्वां नेतुमागतः संप्रतीह वसति। दशरथस्य वचनं श्रुत्वा भरतः शत्रुघ्नसहितो गमनाय निश्चिकाय। पितरं रामं मातृश्चापृच्छ्य शत्रुघ्नेन सह भरतो ययौ। सशत्रुघ्नं भरतमधिगम्य प्रहर्षितो युधाजित् स्वपुरं प्राविशत्। युधाजितः पिता च भरतेन तुतोष। मातुलेनाश्वपतिना सत्कृतः पुत्रस्नेहेन लालितो भरतो भ्रात्रा सह तत्र न्यवसत्। तत्र सर्वैः काम्यपदार्थैस्तर्प्यमाणावपि तौ वृध्दं नृपं दशरथं सस्मरतुः। दशरथश्च प्रोषितौ सुतौ भरतशत्रुघ्नौ महेन्द्रवरुणोपमौ स्मरन्नासीत्। ते चत्वारः पुरुषर्षभाः स्वशरीराद् विनिर्गताश्चत्वारो बाहव इव तस्येष्टा बभूवुः। सर्वप्राणिनां ब्रह्मेव तेषां महातेजा गुणवत्तरो रामः पितुरानन्दकरो बभूव। गते भरते रामलक्ष्मणौ पितरं सिषेवाते। पितुराज्ञामनुसृत्य धर्मात्मा रामः प्रियाणि हितानि च सर्वाणि पौरकार्याणि चकार। संयमशाली रामो मातृभ्यो मातृकार्याणि कृत्वा गुरूणां गुरुकार्याणि च यथाकालं समाचरत्। एवं दशरथो ब्राह्मणा वणिजः सर्वे विषयवासिनश्च रामस्य शीलवृत्तेन प्रीता बभूवुः। स रामः सदा मृदु स्वयं पूर्वं च भाषते स्म। परुषमुच्यमानोऽपि न प्रतिभाषते स्म। कथञ्चित्कृतेनैकेनाप्युपकारेण तुष्यति स्म। उदारहृदयतया अपकारशतमपि न स्मरति स्म। अस्त्राभ्याससमयानां प्राप्तेषु अवकाशेषु च स शीलवृध्दैर्ज्ञानवृध्दैर्वयोवृध्दैश्च सज्जनैर्नित्यं संभाषमाणो बभूव। स सद्वंशसंजातः साधुरुदारः सत्यभाषी ऋजुः धर्मार्थदर्शिभिर्वृध्दैर्द्विजैः सुष्ठु शिक्षितश्चाभवत्। स रामो धर्मार्थकामयथार्थस्वरूपज्ञाता स्मरणशक्तिसंपन्नः समयस्फुरणतीक्ष्णमतिमान् तत्तत्समयोपयुक्तलोकव्यवहाराणां सम्यक्कर्ता निपुणश्च। स शास्त्रज्ञः

कृतज्ञः सर्वेषां तारतम्यवेत्ता यथान्यायं दुष्टनिग्रहे शिष्टानुग्रहे विचक्षणश्च। प्रजानां कष्टमददद् धर्मानुसारेण धनार्जने निपुणः शास्त्रवर्णितव्ययकर्मज्ञः शास्त्रेषु व्यामिश्रकेषु* च श्रेष्ठतामधिगतश्च। अर्थधर्मसंग्रहं कुर्वन्नेव तदनुकूलतया सुखासक्तो वभूव न तु अलसः। मनोरञ्जकसंगीतचित्रलेखनादीनां च ज्ञाता। अर्थव्ययवेत्ता। अश्वानां गजानामारोहणे शिक्षणे च निपुणः। धनुर्वेदविदां श्रेष्ठः। अतिरथैरपि सम्मानितविशेषः। शत्रुसेनाक्रमणकर्ता प्रहर्ता सेनासंचालनविशारदश्च। क्रुध्दैः सुरासुरैरपि संग्रामे अप्रधृष्यः। अनसूयो जितक्रोधो न गर्वितो न मत्सरी कमपि प्राणिनं नावमन्यमान आसीत्। कालाधीनो न भवति प्रत्युत कालमेव स्ववशे स्थापयति स्म। एवं श्रेष्ठैर्गुणै रामः प्रजानामुचितस्त्रिषु लोकेषु पूजितश्चासीत्। क्षमागुणैर्वसुधायाः बुध्द्या बृहस्पतेः वीर्येण देवेन्द्रस्य च समो वभूव। तथा सर्वप्रजामनोहरैरानन्दकरैर्गुणैः किरणैर्दीप्तः सूर्य इव रामो विरुरुचे। एवं नियमैः संपन्नमप्रधृष्यपराक्रमं लोकपालोपमं रामं मेदिनी प्रभुमकामयत। राजा दशरथ एतैरनुपमैर्बहुभिर्गुणैर्युक्तं सुतं दृष्ट्वा चिन्तां चक्रे। कदा नाम प्रियं सुतमभिषिक्तं द्रक्ष्यामीति अभिलाषस्तस्य मनसि संपरिवर्तते स्म। जनाभ्युदयकामः सर्वभूतेषु दयावान् रामो वृष्टिमान् पर्जन्य इव मदपेक्षया अधिकलोकप्रियोऽस्ति। वीर्ये यमशक्रसमः मत्यां बृहस्पतिसमः धृत्यां पर्वतसमश्च मदपेक्षया गुणवत्तरोऽस्ति। अहमिमां कृत्स्नां महीमधितिष्ठन्तमात्मजमस्मिन् वार्धके दृष्ट्वा यथा स्वर्गमवाप्नुयां तथा कथं भवति? इति वितर्क्य महाराजो रामं सर्वसद्गुणसमुदयं समीक्ष्य सचिवैः सार्धं निश्चित्य तं युवराजं कर्तुमियेष। मुख्यान् नानानगरवास्तव्यान् जानपदांश्च नृपः पृथक्पृथक् समानिनाय। ते प्रभवो राजवितीर्णेषु

* व्यामिश्रकेषु = संस्कृतप्राकृतमिश्रितनाटकादिषु इति व्याख्यातारः। अपि आदिकाव्यस्य रामायणस्य काले प्राकृतकाव्यानि स्युः? व्यामिश्रका अल्पविद्याः स्युः। D

विविधासनेषु राजाभिमुखा नियता निषेदुः। लब्धगौरवैर्विनयान्वितैर्नृपैः पुरवासिभिर्जानपदैश्चाधिकारिभिः समीपोपविष्टैर्वृतो नृपतिरमरैरावृतः सहस्राक्ष इव बभौ।

२

ततो वसुधाधिपो दशरथः सर्वां परिषदमाहूय दुन्दुभिस्वनतुल्येन गम्भीरेण प्रतिध्वनिमता महता स्वरेण मेघ इव नादयन् हितमानन्दकरं स्पष्टार्थं च वचनमुवाच। ममोत्तमराज्यस्य प्रजा यथा मम पूर्वै राजेन्द्रैः सुतवत् परिपालिता अयं विषयो भवतां विदितः+। अस्मिन्नन्वये जातोऽहमिक्ष्वाकुभिः पूर्वनरेन्द्रैः परिपालितं सुखार्हमखिलं जगत् श्रेयसा योक्तुकामोऽस्मि। अहं पूर्वैराचरितं पन्थानमनुगतोऽस्मि। नित्यमतन्द्रः प्रजा यथाशक्ति रक्षामि। कृत्स्नस्य लोकस्य हितमाचरामि। सर्वमित्थं कुर्वता मयेदं शरीरं पाण्डुरस्यातपत्रस्य छायायां जरितम्। बहुवर्षसहस्रायुः प्राप्य जीवतो++ जीर्णस्यास्य शरीरस्य विश्रान्तिं प्रगाढमिच्छामि। शौर्यधैर्यादिराजप्रभावैरेवावलम्बनीयमजितेन्द्रियैर्दुर्वहं लोकस्य गुरुं धर्मभारं वहन् परिश्रान्तोऽस्मि। सोऽहं समीपवर्तिनामेषां सर्वेषां विप्रश्रेष्ठानामङ्गीकारं लब्ध्वा पुत्रं प्रजाहिते संस्थाप्य विश्रमितुमिच्छामि। पराक्रमे शक्रसमः परपुरविजयी मम ज्येष्ठपुत्रो रामः सर्वैर्गुणैर्मामनुजातः खलु। पुष्यनक्षत्रयुतं चन्द्रमिव स्थितं धर्मभृतां वरं पुरुषश्रेष्ठं तं प्रीतोऽहं यौवराज्येन योजयिष्यामि। अनेन प्रभुणा त्रैलोक्यमपि श्रेष्ठनाथसंयुतं स्यात्। स लक्ष्मीवान् रामोऽस्य राज्यस्यानुरूपः प्रभुः। तस्मिन् सुते राज्यं निवेश्य सद्योऽनेन श्रेयसेमां महीं संयोज्य गतक्लेशो भविष्यामि। इति ब्रुवाणं

---

+ ग्राह्यः श्लोकः। विदितं भवतामेतद् यथा मे राज्यमुत्तमम्। पूर्वकैर्मम राजेन्द्रैः सुतवत् परिपालितम् ।।

++ cr जीवितः। ग्राह्यः – जीवतः।

दशरथं महाराजं नृपा वृष्टिमन्तं नर्दन्तं महामेघं बर्हिण इव मुदिताः प्रत्यनन्दन्। धर्मार्थवेत्तुस्तस्य राज्ञः अभिप्रायं पूर्णरूपेण विज्ञाय नृपमवदन्। हे पार्थिव! त्वं बहुवर्षसहस्राणां वृध्दोऽसि। तस्मात् त्वं रामं युवराजपदे अभिषिञ्चस्व। इति स्वमनःप्रियं तेषां तद् वचनं श्रुत्वा राजा अजानन् जिज्ञासुरिव वचनमुवाच। मयि धर्मेण पृथिवीमनुशासति सति भवन्तो ममात्मजं युवराजं द्रष्टुं कथं नु इच्छन्ति? तदा ते पौरैर्जानपदैश्च सहोचुः। नृप! तव पुत्रस्य बहवः शुभगुणाः सन्ति। सत्यपराक्रमो रामो दिव्यैर्गुणैः शक्रसमोऽस्ति। सर्वेभ्य इक्ष्वाकुभ्यः श्रेष्ठश्च। रामः सत्पुरुषः सत्यधर्मपरायणः शीलवाननसूयकः क्षान्तः दुःखमग्नानां सान्त्वयिता मृदुर्जितेन्द्रियः स्थिरचित्तो भव्यः सर्वेषां प्रियवादी महाविदुषां ब्राह्मणानामुपासिता च। एतद्गुणसंचययुक्तत्वात् तस्य कीर्तिर्यश* स्तेजश्च लोके वर्धन्ते। देवासुरमनुष्याणां ज्ञातेषु सर्वेषु चास्त्रेषु रामस्य प्रावीण्यमस्ति। ग्रामस्य नगरस्य वा रक्षार्थं सौमित्रिसहितो यदा स संग्रामं व्रजति तदा विजित्यैव निवर्तते। कुञ्जरेण रथेन वा संग्रामात् प्रतिनिवृत्य पौरान् नित्यं कुशलं परिपृच्छति। यथा पिता औरसान् पुत्रान् परिपृच्छति तथास्मत्पुत्रविषये दारविषये प्रेष्यशिष्यगणविषये नित्यानुष्ठानेषु च निखिलं क्रमानुसारं च परिपृच्छति। कच्चिद् वः शिष्याः कर्मसु सन्नध्दा इति नः पृच्छति। मनुष्याणां संकटेषु भृशं दुःखितो भवति। तेषामेव विवाहाद्युत्सवेषु प्राप्तेषु तदभिवृध्दिं प्रेक्ष्य पितृवत् परितुष्यति। सत्यवादी महाधानुष्को वृध्दसेवी जितेन्द्रियो रामस्तव भाग्यवशात् प्रजाश्रेयसे ते पुत्रो जातः। मरीचिपुत्रः कश्यप इव दिष्ट्या रामः पुत्रोचितगुणसंपन्नोऽस्ति। राष्ट्रे राजधान्यां च निवासिनस्तथा आगन्तुकाः पौरा जानपदा वृध्दास्तरुण्यः स्त्रियः सर्वे

---

* कीर्तिः औदार्यादिगुणनिमित्ता प्रथा। यशः पराक्रमादिनिबन्धना प्रथा इति गोविन्दराजः।

सायंप्रातरेकाग्रचित्तेन सुविख्यातस्य रामस्य बलमारोग्यमायुष्यं चाशंसन्ते। रामस्यार्थे सर्वान् देवान् नमस्यन्ति। तेषां प्रार्थनं त्वत्प्रसादात् सफलं भवतु। राजश्रेष्ठ! इन्दीवरश्यामं सर्वशत्रुसंहारकं तवात्मजं रामं यौवराज्यस्थं द्रष्टुमभिलषामः। हे वरदायक महाराज! विष्णुसमानं सर्वलोकहिते श्रद्दधानमुत्तमगुणयुतं तमस्माकं हितायानन्देन क्षिप्रमभिषेक्तुमर्हसि।

३

सभासदां बध्दाञ्जलिपद्मानि स्वीकृत्य तेभ्यो हितं प्रियं च वचनं राजोवाच। मम ज्येष्ठं प्रियं पुत्रं यौवराज्यस्थं यदिच्छथ अहो! ततः परमप्रीतोऽस्मि। मम भाग्यं चानुपमं संजातम्। एवं सभास्तारान् सत्कृत्य तेषु शृण्वत्सु वसिष्ठं वामदेवमन्यान् ब्राह्मणांश्चेदमब्रवीत्। शोभायुक्तोऽयं चैत्रो मासः पुण्यः पुष्पितवनोपवनश्च। रामस्य यौवराज्याभिषेकाय सर्वमेवोपकल्प्यताम्। राजवचनात् सर्वाणि कार्याणि कारयित्वा प्रीतौ हर्षयुक्तौ द्विजर्षभौ वसिष्ठवामदेवौ राजानमभिगम्य यथोक्तवचनं कृतमित्यब्रूताम्। ततो राजा शिक्षितबुध्दिः रामः शीघ्रं भवता आनीयतामिति सुमन्त्रमब्रवीत्। स राजशासनाद् रामं रथेन तत्रानयामास (आनेतुं जगाम)।तदा तत्र समासीनाः प्राच्या उदीच्याः प्रतीच्या दाक्षिणात्याश्च राजानो म्लेच्छा आर्या वनशैलप्रान्तीयाश्च राजानो दशरथं नृपं सिषेविरे। देवानां मध्यगतो वासव इव तेषां मध्ये दशरथः प्रासादस्थो रथेनायान्तं रामं ददर्श। गन्धर्वराजसमानं लोके प्रसिध्दपौरुषं दीर्घबाहुं महाबलं मत्तमातङ्गगामिनं चन्द्रवन्मनोहरमुखमतीव प्रियदर्शनं रूपौदार्यादिगुणैर्जनदृष्टि-चित्तापहारिणं समायान्तं रामं पश्यन् दशरथो घर्माभितप्तजना ह्लादयन्तं पर्जन्यं पश्यन्त इव न ततर्प। सुमन्त्रो राघवं श्रेष्ठाद्रथादवतार्य पितुः समीपं गच्छन्तं तं प्राञ्जलिरन्वगात्।सूतेन सह रामो नृपं द्रष्टुं कैलासशृङ्गाभं प्रासादमारुरोह। प्राञ्जलिः पितरमासाद्य प्रणतः स्वं नाम श्रावयन् तच्चरणौ

ववन्दे। तं प्रणतं पार्श्वे कृताञ्जलिपुटं प्रियं पुत्रं दृष्ट्वा नृपः अञ्जलौ गृहीत्वा समाकृष्य सस्वजे। श्रीमान् राजा तस्मै मणिकाञ्चनभूषितं रुचिरं प्रागेव तत्रानीय स्थापितं परमासनं दिदेश। रामस्तत् श्रेष्ठमासनं प्राप्योदये विमलो रविर्मेरुमिव स्वया प्रभया तत् प्रकाशयामास। तेन विभ्राजिता सा सभा विमलग्रहनक्षत्रा शारदी द्यौरिन्दुनेव भृशं व्यरोचत। तं प्रियमात्मजं पश्यन् नृपतिरलङ्कृतमात्मानमादर्शतलसंस्थितं पश्यन्निव तुतोष। स राजा तं सस्मितमाभाष्य कश्यपो देवेन्द्रमिवेदमुवाच। राम! ज्येष्ठायां सदृश्यां मे पत्न्यामुत्पन्नः सदृशः सुतोऽसि। गुणश्रेष्ठस्त्वं मम प्रिय आत्मजोऽसि। यत इमाः प्रजास्त्वया स्वगुणैरनुरञ्जितास्ततस्त्वं पुष्यमीनक्षत्रयुक्ते दिवसे यौवराज्यमवाप्नुहि।त्वं स्वभावत एव भृशं विनीतो गुणवानसि। परन्तु स्नेहाद् गुणवतोऽपि ते हितमुपदिशामि। इतोऽपि विनयमवलम्ब्य नित्यं जितेन्द्रियो भव। कामक्रोधोद्भवानि व्यसनानि त्यज। परोक्षया प्रत्यक्षया च वृत्त्या वर्तमानः अमात्यसेनान्यादीन् सर्वाः प्रजाश्चानुरञ्जय। सन्तुष्टानुरक्तप्रकृतिः सन् यो मेदिनीं पालयति तस्य मित्राणि अमृतं प्राप्यामरा इव नन्दन्ति। तस्मात् त्वमप्यात्मानं नियम्यैवं समाचर। दशरथवचनं श्रुत्वा रामस्य प्रियकारिणः सुहृदः शीघ्रमभ्येत्य कौसल्यायै न्यवेदयन्*। स्त्रीमतल्ली कौसल्या प्रियाख्येभ्यो हिरण्यं गा विविधानि रत्नानि च ददौ। अथ रामो राजानमभिवाद्य रथमारुह्य जनौघैः प्रतिपूजितः शोभाशालि स्वं भवनं ययौ। पौरा नृपतेर्वचनं श्रुत्वा इष्टलाभमधिगम्ये–वातीव हृष्टा राजानमामन्त्र्य गृहाणि गत्वा देवान् समानर्चुः।

४

अथ पौरेषु गतेषु कार्यनिश्चयविधानज्ञो नृपो भूयो मन्त्रिभिः सह मन्त्रयित्वा श्व एव पुष्यो भविता मे सुतो रामः श्वो यौवराज्येऽभिषेच्यतामिति निश्चिकाय। अन्तःपुरमासाद्य रामं पुनरिहानयेति सारथिं सुमन्त्रमादिदेश।

---

* एतावत् कौसल्याया रामाभिषेकवार्ता न ज्ञाता।

तदाज्ञया सूतो रामं पुनरानेतुं शीघ्रं तस्य भवनमाययौ। तस्य पुनरागमनं रामाय द्वाःस्थैरावेदितम्। तत् श्रुत्वा किमयं पुनरागत इति रामः शङ्कान्वितो बभूव। तं त्वरितं प्रवेश्य भूयस्तवागमनकार्यं यदस्ति तदशेषतो ब्रूहीत्यब्रवीत्। राजा त्वां द्रष्टुमिच्छति। ममेदं वचनं श्रुत्वा गमनमगमनं वा स्वयं त्वया निश्चीयतामिति तं सुमन्त्रः प्राह। इति सूतवचः श्रुत्वा रामस्त्वरयान्वितो राजानं पुनर्द्रष्टुं राजभवनं प्रययौ। रामं समनुप्राप्तं श्रुत्वा दशरथ उत्तमं प्रियं वाक्यं विवक्षुस्तं प्रवेशयामास। पितुर्भवनं प्रविशन्नेव रामः कृताञ्जलिर्दूरात् पितरं प्रणिपत्य ददर्श। भूमिपः प्रणमन्तं तं समुत्थाप्य परिष्वज्यं तस्मै रुचिरमासनं प्रदिश्य पुनरब्रवीत्। राम! दीर्घायुरहं वृध्दोऽस्मि। ईप्सिता भोगा मया भुक्ताः। अन्नतर्पणवद्भिर्भूरिदक्षिणैः क्रतुशतैरिष्टम्। पुरुषसत्तम! त्वमद्य भुवि अनुपममिष्टमपत्यं मे जातम्। मया दत्तमिष्टमधीतं च। मयेष्टानि सुखानि चानुभूतानि। यज्ञैर्देवानां स्वाध्यायेन ऋषीणां सन्तानेन पितॄणां दानैविप्राणां चानृणोऽस्मि। एवमात्मनः सर्वथा अनृणोऽभवम्। तवाभिषेचनादन्यन्न किञ्चिन्मम कर्तव्यमस्ति। अतोऽहं यत् त्वां ब्रूयां तत् कर्तुमर्हसि। अद्य सर्वाः प्रजास्त्वां राजानमिच्छन्ति। अतस्त्वां युवराजमभिषेक्ष्यामि*। किञ्च सम्प्रति दारुणानशुभान् स्वप्नानहं पश्यामि। सनिर्घाता महास्वना महोल्काश्चेह पतन्ति। मम जन्मनक्षत्रं सूर्याङ्गारकराहुभिर्दारुणैर्ग्रहैरवष्टब्ध-मिति दैवज्ञा आवेदयन्ति। ईदृशानां शकुनानां समुद्भवे प्रायेण राजा मृत्युं घोरामापदं वा गच्छति। राम! तद् यावदेव मे चेतो न विमुह्यति तावदेवाभिषिक्तो भव। प्राणिनां मतिश्चञ्चला हि। अद्य पुष्यात् पूर्वं पुनर्वसुं चन्द्रोऽभ्युपगतः। श्वः पुष्ययोगमभिषेकाय प्रशस्तं दैवज्ञा आहुः।

---

* अस्य विषयस्य विचारो मया साहितीजगती (1990) ग्रन्थे रामायणसमालोचनम् नाम्नि निबन्धे कृतः। स एव निबन्धो मम सीताहरणनाटके चानुबद्धः।

ततः पुष्येऽभिषिक्तो भव। मनो मां त्वरयति। श्वस्त्वां यौवराज्येऽभिषेक्ष्यामि। तस्मात् त्वयाद्य व्रतिना नियतात्मना सीतया सह दर्भासनशायिना निशायामुपवासः कार्यः। अद्य सुहृदश्चाप्रमत्तास्त्वां समन्ततो रक्षन्तु। एवंविधानि कार्याणि बहुविघ्नानि भवेयुः। यावदेव भरतः अस्मात् पुराद् दूरे तिष्ठति तावदेवाभिषेकस्ते युक्त इति ममाभिप्रायः*। तव भ्राता भरतः कामं सतां वृत्ते खलु स्थितः। ज्येष्ठानुवर्ती धर्मात्मा सानुक्रोशो जितेन्द्रियश्च। किन्तु सतां धर्मस्थिराणां मनुष्याणां शोभितं चित्तमपि अनित्यमिति मे मतिः। इत्युक्तः श्वो भाविन्यभिषेचने व्रतपालनार्थं व्रजेत्यभ्यनुज्ञातो रामः पितरमभिवाद्य गृहमभ्ययात्। राजाभिषेके उद्दिष्टे आत्मनो वेश्म प्रविश्य रामः (तत्र सीतामदृष्ट्वा) तत्क्षणाद् विनिर्गम्य मातुरन्तःपुरं ययौ। तत्र देवतागारे पूजासक्तां क्षौमवासिनीं मौनव्रतां लक्ष्मीप्रार्थनां कुर्वतीं मातरं ददर्श। प्रियं रामाभिषेचनं श्रुत्वा प्रागेव सुमित्रा लक्ष्मणश्चागतौ। सीता चानायिता। रामागमनकाले सुमित्रया लक्ष्मणेन सीतया च सेव्यमाना कौसल्या निमीलितनयना तस्थौ। पुष्येण पुत्रस्य यौवराज्याभिषेचनं श्रुत्वा प्राणायामेन पुरुषोत्तमं जनार्दनं ध्यायन्ती बभूव। तथा नियमवतीमेव मातरमभिगम्य रामस्तां हर्षयन्नुवाच। अम्ब! पित्रा प्रजापालनकर्मणि नियुक्तोऽस्मि। यथा मे पितुः शासनं तथा श्वोऽभिषेको भविता। मम सीतायाश्चास्यां रजन्यामुपवासः कार्यः। ऋत्विगुपाध्यायैः सह पिता मामेवमुक्तवान्। श्वोभाविन्यभिषेचने यानि यानि मङ्गलानि योग्यानि तान्यद्य मम सीतायाश्च कारय। चिरकालाभिकाङ्क्षितां पुत्रपट्टाभिषेकवार्तां श्रुत्वा कौसल्या हर्षबाष्परुध्दकण्ठा अस्पष्टमधुरं

---

*दशरथेन कृतोऽयमेव महान् दोषो यत् स भरतस्यानुपस्थितौ राममभिषेक्तुमियेष। सद्गुणवति भरते विश्वस्य तस्य सम्मत्या यदि स रामाभिषेकमकरिष्यत् तर्हि अभिषेकभङ्गो नाभविष्यत्।

वाक्यं राममभाषत। वत्स! राम! चिरं जीव। हतास्ते शत्रवः। श्रिया युक्तस्त्वं मम सुमित्रायाश्च बन्धून् नन्दय। पुत्रक! त्वं मयि मङ्गलकरे नक्षत्रे जातोऽसि येन त्वया पिता दशरथो गुणैराराधितः। पुण्डरीकाक्षं श्रीमहाविष्णुमाराधयन्त्या मया कृतं व्रतोपवासादिक्लेशसहनं सफलमभवदिति महानानन्दो मे जातः। इक्ष्वाकुराज्यश्रीस्त्वां संश्रयिष्यते इति मात्रोक्तो रामः प्राञ्जलिं प्रह्वमासीनं भ्रातरं लक्ष्मणं स्मयमान उवाच। लक्ष्मण! मया सार्धं त्वमिमां वसुन्धरां प्रशाधि। त्वां द्वितीयं मेऽन्तरात्मानमियं श्रीरुपस्थिता। इष्टान् भोगान् राज्यफलानि च भुङ्क्ष्व। जीवितं राज्यं च त्वदर्थमभिकामये। इति लक्ष्मणमुक्त्वा रामो मातरावभिवाद्य गन्तुं सीतां चाभ्यनुज्ञाप्य (तया सह) स्वं निवेशनमगात्।

५

अपरेद्युर्भाव्यभिषेचनमुद्दिश्योपवासादिकं कर्तुं राममादिश्य दशरथः पुरोहितं वसिष्ठं समाहूयेदमुवाच। हे महर्षे! त्वं गत्वा निश्चितव्रतं रामं श्रीयशोराज्यलाभाय वध्वा सीतया सहोपवासं कारय। तथेत्युक्त्वा भगवान् वशिष्ठः स्वयं रामगृहं ययौ। श्वेतमेघोज्ज्वलकान्तिं रामभवनं प्राप्य स मुनीन्द्रस्तिस्रः कक्ष्या रथेनैव विवेश। मानार्हं तमागतमृषिं मानयिष्यन् त्वरमाणः ससम्भ्रमो रामो निवेशनान्निश्चक्राम। सत्वरं रथाभ्याशमभ्येत्य स्वयं तं परिगृह्य रथादवतारयामास। पुरोहितो वसिष्ठः प्रियार्हं प्रश्रितं रामं कुशलं पृष्ट्वा प्रीतिमुत्पाद्य हर्षयन्नेवमुवाच। राम! ते पिता प्रसन्नोऽस्ति। यौवराज्यमवाप्स्यसि। सीतया सहाद्य भवानुपवासं करोतु। ययातिं नहुष इव प्रातस्त्वां ते पिता यौवराज्येऽभिषेक्ता। इत्युक्त्वा स तं वैदेह्या सह मन्त्रवदुपवासं कारयामास। ततो राजगुरुर्वसिष्ठो रामेण यथावदर्चितः अनुमतश्च तद्गृहाद् ययौ। रामश्च प्रियंवदैः सुहृद्भिः सह तत्रासीन सभाजितस्तैरनुमतः अन्तःपुरं विवेश। तदा हृष्टनारीनरयुतं

रामवेश्म मत्तपक्षिगणपूर्णं प्रफुल्लनलिनं सर इव बभौ। राजभवनतुल्याद् रामनिवेशनान्निर्गत्य वसिष्ठो जनसंवृतं मार्गं ददर्श। अयोध्यायां राजमार्गाः समन्ततो बृन्दबृन्दैः कुतूहलपूर्णैर्जनैर्वृताः संबाधा बभूवुः। जनबृन्दोर्मिसंघर्षवतो जनहर्षस्वनवतो राजमार्गस्य निस्वनः समुद्रघोषवद् बभूव। तस्मिन्नहनि सिक्तसम्मृष्टरथ्या कदलीक्रमुकादिविरचितवृक्षश्रेणी सर्वतः समुच्छ्रितगृहध्वजा चायोध्या नगरी बभूव। तदायोध्यावासी सस्त्रीबालवृध्दो* जनो रामाभिषेकोत्सुकः सूर्योदयमाचकाङ्क्ष+। प्रजानामलंकारभूतमानन्दवर्धनं च तं महोत्सवं द्रष्टुं जन उत्सुको बभूव। एवं जनसंबाधं राजमार्गं (पश्यन्) वसिष्ठो जनौघं विभजमान इव शनै राजकुलं ययौ। सिताभ्रावृतपर्वतशिखरप्रख्यं प्रासादमधिरुह्य स शक्रेण बृहस्पतिरिव नरेन्द्रेण समियाय। तमागतं वीक्ष्य नृपो राजासनं हित्वा सगौरवं पप्रच्छ किं मयोक्तं कृतमिति। स च तत् कृतमिति निवेदयामास। ततो राजा गुरुणाभ्यनुज्ञातस्तं मनुजौघं विसृज्य सिंहो गिरिगुहामिवान्तःपुरं विवेश। श्रेष्ठवेषैः प्रमदाजनैराकुलं महेन्द्रवेश्मप्रतिमं सुन्दरं निवेशनं प्रकाशयन् पार्थिवस्तारागणसंकुलं नभः शशीव विवेश।

६

वसिष्ठगमनानन्तरं स्नात एकाग्रमानसो रामः पत्न्या सह नारायणमुपास्त। नतशिरा हविषः पात्रं विधिवन्नमस्कृत्य महते दैवताय नारायणाय ज्वलितेऽनले आज्यं जुहाव। आत्मन प्रियमाशास्य हविषः शेषं प्राश्य देवं नारायणं ध्यायन् नियतवाङ् नियतमानसश्च विष्णोः शोभिते आलये स्वास्तीर्णे कुशास्तरणे वैदेह्या सह शिश्ये। एकयामावशिष्टायां रात्र्यां विबुध्य वेश्मनः कृत्स्नमलंकारविधिं कारयामास। तदा सूतमागधवन्दिनां

*सस्त्रीबालाबलो जनः। अबला बलरहिता वृद्धा इति यावत् इति गोविन्दराजः।

+Cr आकाङ्क्षन्नुदयं रवेः। ग्राह्यः – आकाङ्क्षदुदयं रवेः।

सुखा वाचः शृण्वन् पूर्वां संध्यामुपासीनो निश्चलचित्तो गायत्रीं जजाप। शिरसा प्रणतो मधुसूदनं तुष्टाव। शुभ्रक्षौमसंवीतो ब्राह्मणान् पुण्याहं वाचयामास। तेषां गम्भीरमधुरः पुण्याहघोषः तूर्यघोषमिश्रितः अयोध्यां पूरयामास। तदा वैदेह्या सह रामं कृतोपवासं श्रुत्वा अयोध्यानिलयः सर्वो जनः प्रमुमुदे। सर्वः पौरजनो रामाभिषेचनं श्रुत्वा प्रभातां रजनीं दृष्ट्वा पुरीं शोभयितुं[+] चक्रे। श्वेतमेघाच्छन्नपर्वतशिखरतुल्येषु देवालयेषु चतुष्पथेषु वीथीषु देवतावृक्षेषु अट्टालकेषु वणिजामापणेषु गृहिणां महाभवनेषु सर्वासु सभासु उन्नतवृक्षेषु च चिह्निता ध्वजा बहुवर्णाः पताकाश्च तदा समुच्छ्रिता अभवन्। नटनर्तकसंघानां गायकानां च मनःकर्णसुखा वाचस्ततस्ततः श्रुताः। रामाभिषेकशुभावसरे प्राप्ते चत्वरेषु गृहेषु च मिथो जना रामाभिषेकविषये एव संभाषणानि चक्रुः। गृहद्वारेषु संघशः क्रीडन्तो बाला अपि रामाभिषेकमुद्दिश्यैव संभाषणानि मिथश्चक्रुः। पौरैर्विकीर्णपुष्पो धूपगन्धाधिवासितो राजमार्गः अलंकृतः। तत्पश्चात् पौरा रामाभिषेककार्यक्रमो रात्रिं यावद् भविष्यतीति विभाव्य प्रकाशकरणार्थं सर्वशो रथ्यासु बहुशाखायुतान् दीपस्तम्भान् चक्रुः। सर्वे पुरवासिनः पुरमेवमलङ्कृत्य रामस्य यौवराज्याभिषेचनमाकाङ्क्षमाणाश्चत्वरेषु सभासु च संघशः समेत्य परस्परं तमेव विषयं संभाषमाणा जनाधिपं प्रशशंसुः। य आत्मानं वृध्दं ज्ञात्वा रामं राज्येऽभिषेक्ष्यति इक्ष्वाकुकुलनन्दनोऽयं राजा अहो महात्मा खलु। जनानां तारतम्यद्रष्टा रामो यन्नो महीपतिश्चिराय गोप्ता भविता तत् सर्वे अनुगृहीताः स्मः। गर्वरहितो विद्वान् धर्मात्मा भ्रातृवत्सलो रामो यथा भ्रातृषु स्निग्धः अस्मास्वपि तथास्ति। यस्यानुग्रहेणाभिषिक्तं रामं वयं द्रक्ष्यामः सोऽनघो धर्मात्मा राजा दशरथश्चिरं जीवतु। श्रुतवृत्तान्ता नानादिग्भ्य आगता जानपदा

---

[+] Cr चक्रे शोभां परां पुनः। ग्राह्यः – चक्रे शोभयितुं पुरीम्।

जना एवं कथयतां पौराणां संभाषणानि तदा शुश्रुवुः। रामाभिषेकं द्रष्टुं दिग्भ्यः पुरीं प्राप्तास्ते जानपदा अयोध्यां पूरयामासुः। संचरतां जनसमूहानां निस्वनः पर्वसूदीर्णवेगस्य समुद्रस्य निस्वन इव शुश्रुवे। द्रष्टुमुपागतैर्जानपदैः समन्ततः सस्वनमाकुलममरावतीतुल्यं तत् पुरं समुद्रयादोभिरर्णवोदकमिव बभौ।

७

कैकेय्याः विवाहानन्तरं तया सह मातृगृहादागता जन्मनः प्रभृति* कौकेय्या+ सहोषिता वर्धिता च बन्धुदासी (मन्थरा) चन्द्रवद् धवलं प्रासादं यदृच्छया आरुरोह। तस्मात् प्रासादात् सा मन्थरा सिक्तराजपथां प्रकीर्णकमलोत्पलां श्रेष्ठाभिः पताकाभिर्ध्वजैश्च समलंकृतां चन्दनतोयेन सिक्तां शिरःस्नातजनैर्वृतां कृत्स्नामयोध्यां प्रैक्षत। अविदूरे स्थितां रामस्य धात्रीं दृष्ट्वा सा पप्रच्छ। महाहर्षसंयुक्ता राममाता किमपि प्रयोजनमुद्दिश्य** जनेभ्यो धनं संप्रयच्छति किम्? जनस्यातिमात्रस्यास्य प्रहर्षस्य किं कारणम्? अपि संप्रहृष्टो महीपतिः किमपि महाकार्यं कारयिष्यति? तच्छ्रुत्वा हर्षेण विदीर्यमाणा धात्री रामस्य यौवराज्यप्राप्तिरूपां भूयसीं श्रियं कुब्जायै3* आचचक्षे। श्वः पुष्यनक्षत्रयोगेन रामं राजा दशरथो यौवराज्येऽभिषेक्ष्यति। धात्र्या वचनं श्रुत्वा क्षिप्रममर्षिता कुब्जा मन्थरा कैलासशिखराकारात् प्रासादात् शीघ्रमवारोहत्। कोपेन दह्यमाना

---

*यतो जाता अज्ञातमातापितृकेति महेश्वरतीर्थगोविन्दराजौ। तादृशीं दासीं को नाम मान्यो राजा अन्तःपुरे प्रवेशयेत्? यतो जाता = आ जन्मनः इति व्याख्येयम्। D.

+ Cr कैकेय्यास्तु सहोषिता। ग्राह्यः – कैकेय्या तु सहोषिता।

** अर्थपरा कदर्या भूत्वापि इति चैका व्याख्या। न तु सा शोभना।

3* कुब्जा = गडुला (Humpbacked) इति सर्वे व्याख्यातारः। कुब्जः कश्चिज्जातिविशेषः। कुब्जा कुब्जजातिभवेति Cr। काव्ये तु मन्थरायाः कुब्जत्वं (Humpback) च वर्णितम्।

पापसंकल्पा मन्थरा शयानां कैकेयीमेत्येदमब्रवीत्। मूढे! उत्तिष्ठ। किं शेषे? भयं त्वामभितो वर्तते। दुःखप्रवाहेण संप्लुतमात्मानं किं न बुध्यसे? त्वं भर्तुः प्रियतममात्मानं मन्यसे परन्तु यथार्थतः अनिष्टासि। इदं न जानती त्वं तव सौभाग्येन गर्वसि। ग्रीष्मकाले नदीप्रवाहवत्ते सौभाग्यं चलमस्ति। पापसंकल्पया रुष्टया कुब्जयैवं परुषमुक्ता कैकेयी परमं विषादमगमत्। सा दासीं पप्रच्छ। मन्थरे! अपि ते क्षेमं नास्ति? भृशदुःखितां विषण्णवदनां त्वां लक्षये। कैकेय्या मधुरं तद् वचनं श्रुत्वा वाक्यविशारदा मन्थरा क्रोधेनोवाच। कैकेय्या हितैषिणी सा विषण्णतरा भूत्वा विषादं रामाद् विभेदं च जनयन्ती प्रोवाच। देवि! त्वद्विनाशनं सुमहदक्षेमं प्रवृत्तम्। राजा दशरथो रामं यौवराज्येऽभिषेक्ष्यति। तस्मादहमगाधे भये मग्ना मनस्तापेन रुदती अनलेन दह्यमानेव त्वध्दितार्थमिहागतास्मि। तव दुःखमेव मम महद् दुःखं भवेत् तव वृध्दिर्मम वृध्दिश्च। अत्र संशयो नास्ति। त्वं नराधिपकुले जाता महीपतेः प्रधानभार्या च। देवि! राजधर्माणां क्रूरत्वं कथं न बुध्यसे? तव पतिर्धर्मान् भाषते परन्तु निगूढमपकरोति। प्रियं ब्रूते परन्तु क्रूरः। हे शुध्दभावे! तेनैवं प्रतारितां स्वां न जानीषे। तत्तत्कालोचितमनर्थकं सान्त्वं त्वयि प्रयुञ्जानस्ते भर्ता कौसल्यामेवाद्य संपदा योजयिष्यति। स दुष्टात्मा भरतं तव बन्धुष्वपवाह्य श्वः प्रभाते निहतकण्टके राज्ये रामं स्थापयिता। पतिनामकः स ते शत्रुः। मूढे! हितमिच्छन्त्या मात्रेव त्वया सः अङ्केन सर्प इव धृतः। उपेक्षितः सर्पो वा शत्रुर्वा यथा कुर्यात् तथाद्य राजा दशरथः सपुत्रायां त्वयि कुरुते। नित्यं सुखोचिते! बाले! अनृतसान्त्वेन पापेन रामं राज्ये स्थापयता ते पत्या त्वं सपुत्रबन्धुपरिवारा हतासि। हे आश्चर्यकरसौन्दर्यवति! कैकेयि! समयोचितं ते हितं कार्यं क्षिप्रं कुरु। पुत्रमात्मानं मां च त्रायस्व। मन्थराया वचः श्रुत्वा शुभानना कैकेयी शयनादेव कुब्जायै सुन्दरमेकमाभरणं

प्रददौ। हृष्टा तां पुनरिदमुवाच। मन्थरे! मह्यमिदं परमं प्रियमाख्यासि*। मम प्रियमाख्यात्र्यास्ते पारितोषिकमिदं दीयते। भूयस्ते किं वा करोमि? रामे वा भरते वाहं भेदं न पश्यामि। तस्माद् यद् राजा रामं राज्येऽभिषेक्ष्यति तत्तुष्टास्मि। इतः परं प्रियं मम किमपि नास्ति त्वमप्याख्यातुं न शक्नोषि। मम श्रेष्ठं प्रियं त्वमवोचः। अत उत्तमं वरं ते प्रददामि। वृणु।

८

मन्थरा तु कैकेयीं प्रति अक्षमा कोपदुःखसमन्विता तदाभरणमुत्सृज्य पश्चादिदमुवाच। बालिशे! अस्थाने हर्षं करोषि। किमिदम्? शोकसागरमध्यस्थमात्मानं नावगच्छसि। यस्याः पुत्रः श्वः पुष्येण द्विजोत्तमैर्महता यौवराज्येनाभिषेक्ष्यते सा कौसल्या नूनं सौभाग्यवती। सुमहतीं प्रीतिं प्राप्तां हतद्विषमधिकारवतीं कौसल्यां दासीव त्वं कृताञ्जलिः सेविष्यसे। रामस्य परमाः स्त्रियो** (भार्याः) हृष्टाः खलु भविष्यन्ति। क्षीणे भरते ते स्नुषा आनन्दरहिता भविष्यन्ति। परं दुःखितां तथा ब्रुवतीं तां दृष्ट्वा देवी कैकेयी रामस्यैव गुणान् प्रशशंस। रामो धर्मज्ञो गुरुभिः शिक्षितः कृतज्ञः सत्यवाक् परिशुध्दचरित्रो राज्ञो ज्येष्ठः सुतः। अतः स यौवराज्यमर्हति। चिरजीवी रामो भ्रातॄन् भृत्यांश्च पितृवत् पालयिष्यति। कुब्जे! रामाभिषेचनं श्रुत्वा कथं संन्तप्यसे? रामस्य वर्षशतपरिपालनानन्तरं

---

*रामस्य यौवराज्याभिषेकार्थं दशरथेन बहुदिनेभ्यो महत्यो व्यवस्थाः कृताः। एतावत् कथं कैकेय्याः कौसल्यायाश्च न ज्ञातोऽयं विषय इति चित्रम्।

**उत्तरपदे ते स्नुषाः इत्युक्तत्वाद् रामस्य परमाः स्त्रियः इत्यस्य रामस्य भार्याः इत्येवार्थो वक्तव्यः। कथं तर्हि एकपत्नीव्रतप्रसिद्धस्य रामस्य बहुभार्याकथनमिति चेद् राजानः प्रायेण बहुपत्नीकाः रामलक्ष्मणभरतशत्रुघ्नाश्चान्यराजवद् बहुभार्यावन्तो भवेयुरिति भविष्यद्दृष्टया परिमितविवेकया तद्गुणाज्ञया मन्थरया एवमुक्तमिति समाधेयम्।

ध्रुवं भरतश्च पितामहपितृक्रमादागतं राज्यमवाप्स्यति। तस्मान्मन्थरे! प्राप्ते वर्तमाने चाभ्युदये शुभे च भविष्यति किमर्थं त्वं परितप्यसे? यथा मे भरतो मान्यस्तथा ततोऽधिकं च रामो मान्यः+। कौसल्यातोऽतिरिक्तं मां रामः शुश्रूषते। कैकेय्या वचनं श्रुत्वा भृशदुःखिता मन्थरा दीर्घमुष्णं विनिःश्वस्याब्रवीत्। कष्टपूर्णे दुःखसागरे मज्जन्ती मूर्खत्वात् स्वप्रयोजनमपश्यन्ती आत्मानं नावबुध्यसे। रामो राजा भविता। रामस्य पुत्रश्च राजा भविष्यति।कैकेयि! भरतस्तु राजवंशात् परिहास्यते। राज्ञः पुत्राः सर्वे राज्ये न तिष्ठन्ति। सर्वे यदि स्थाप्यन्ते तर्हि सुमहाननयो भवेत्। तस्माज्ज्येष्ठे पुत्रे पार्थिवा राज्यतन्त्राणि स्थापयन्ति। यदि ज्येष्ठो गुणहीनो भवेत् तर्हि गुणवत्स्वितरेष्वपि स्थापयन्ति। हे पुत्रवत्सले! तव पुत्रो राजवंशादनाथवत् सुखेभ्यश्चात्यन्तनिर्भग्नो भविष्यति। तस्मादहं त्वदर्थे संप्राप्तास्मि। त्वं तु मां नावबुध्यसे यतः सपत्नीवृध्दौ पारितोषिकं मे दित्ससि। यदि निष्कण्टकं राज्यं रामः प्राप्स्यति तर्हि ध्रुवं स भरतं देशान्तरं लोकान्तरं वा नाययिष्यति। बाल एव भरतस्त्वया मातुलगृहं प्रहितः। (तस्माद् दशरथस्य तस्मिन् प्रेम न वर्धितम्।) स्थावरेष्वपि सन्निकर्षात् सौहार्दं जायते। रामं लक्ष्मणो रक्षति। रामश्च लक्ष्मणं रक्षति। अश्विनोरिव तयोः सौभ्रात्रं लोकेषु विश्रुतम्। तस्मात् लक्ष्मणे रामो न किञ्चित् पापं करिष्यति। परन्तु भरते कुर्यात्। तत्र संशीतिर्नास्ति। तस्मान्मातुलगृहादेव ते पुत्रो भरतो वनं गच्छतु।एतदेव ते हितं मह्यं रोचते। (नो चेद् भरतो रामेण हनिष्यते।) अथवा यदि भरतो धर्मात् पित्र्यं राज्यमवाप्स्यति तर्हि ते तव बन्धुपक्षस्य च श्रेय एव भविष्यति। सुखोचितस्ते पुत्रो बालो भरतः सपत्नीसुतत्वाद् रामस्य सहजः शत्रुः। नष्टार्थः स समृध्दार्थस्य रामस्य वशे कथं जीविष्यति? अरण्ये

---

+ ग्राह्या पङ्क्तिः। यथा मे भरतो मान्यस्तथा भूयोऽपि राघवः।

सिंहेनानुद्रुतं गजयूथपमिव रामेणाक्रम्यमाणं भरतं त्रातुमर्हसि। (सौन्दर्यकारणेन त्वं पत्युः प्रियतमासि।) तत्सौभाग्यगर्वेण सपत्नी राममाता पूर्वं त्वया अवमतास्ति। सा सम्प्रति कथं वैरं न निर्यातयेत्? यदा रामः पृथिवीमवाप्स्यति तदा ध्रुवं भरतः प्रणशिष्यति। अत आत्मजस्य राज्यलाभं शत्रो रामस्य प्रवासोपायं च संचिन्तय।

९

मन्थरयैवमुक्ता कैकेयी क्रोधाज्ज्वलितानना दीर्घमुष्णं विनिःश्वस्य तामिदमुवाच। अद्याहं राममितः क्षिप्रं वनं प्रस्थापयामि। क्षिप्रमेव भरतं यौवराज्येऽभिषेचयामि। मन्थरे! केनोपायेन भरतो राज्यं प्राप्नुयाद् रामस्तु कथञ्चन न प्राप्नुयात् तमुपायमिदानीं संचिन्तय। देव्या कैकेय्या एवमुक्ता पापसमालोचना मन्थरा रामस्य प्रयोजनमुत्सादयन्ती तामाह। कैकेयि! भूयसी प्रीतास्मि। यथा ते पुत्रो भरत एव राज्यं प्राप्स्यति तत् प्रवक्ष्यामि। मम वचनं शृणु। मन्थराया एवं वचनं श्रुत्वा कैकेयी स्वास्तीर्णात् शयनात् किञ्चिदुत्थायेदमब्रवीत्। मन्थरे! केनोपायेन भरतो राज्यं प्राप्नुयाद् रामस्तु कथञ्चन न प्राप्नुयात् तमुपायं मे कथय। देव्या एवमुक्ता पापमार्गप्रदर्शिनी कुब्जा मन्थरा रामप्रयोजनमुत्सादयन्ती प्राह। दैवासुरे युध्दे देवराजस्य साह्यकृत् ते पतिर्महद्भी राजर्षिभिः सह त्वामुपादाय गतवान्। दक्षिणस्यां दिशायां दण्डकावनान्तरे वैजयन्तमिति प्रसिध्दं नगरमस्ति। तत्र तिमिध्वजः* शम्बर इति ख्यातः शतमायावान् महासुरो देवसंघान् निर्जित्य शक्रेण सहायुध्यत। तस्मिन् महति संग्रामे राजा दशरथः (असुरैराहतः) नष्टचेतनोऽभवत्। तदा स त्वयापवाह्य रक्षितः। तत्रापि भूयः सः असुरैः शस्त्रैर्विक्षतोऽभवत्। पुनश्च त्वया तस्मादप्यपवाह्य स रक्षितः। तुष्टेन तव पत्या ते द्वौ वरौ दत्तौ। तदा स

---

* तिमिर्ध्वजचिह्नमस्येति वा तिमिध्वजनामा शम्बर इति विख्यातापरनामा वा।

त्वया यदेच्छेयं तदा वरौ गृह्णीयामित्युक्तः। तत्तथा भवतु इति तेन महात्मनोक्तम्। अहमस्य वृत्तान्तस्यानभिज्ञासम्। देवि! पुरा त्वयैवेदं कथितम्। इदानीं तौ वरौ भर्तारं याचस्व भरतस्याभिषेचनं रामस्य चतुर्दश वर्षाणि प्रव्राजनं च। हे अश्वपतेः सुते! अद्य क्रोधागारं प्रविश्य मलिनवासिनी अनाच्छादितायां भूमौ क्रुध्देव शेष्व। तं मा वीक्षेथा मा चाभिभाषेथाः। त्वं सदा भर्तुर्दयितासि। अत्र मे संशयो नास्ति। महाराजस्त्वत्कृते हुताशनं विशेदपि। राजा त्वां कोपयितुं वा कुपितां प्रत्युदीक्षितुं वा न शक्नोति। तव प्रियार्थं प्राणानपि परित्यजेत्। महीपतिस्तव वाक्यमतिक्रमितुं न पारयति। अज्ञे! आत्मनः सौभाग्यबलं बुध्यस्व। मणीन् मुक्ताः सुवर्णाभरणानि विविधानि रत्नानि च दशरथस्तुभ्यं दद्यात्। मा स्म तेषु मनः कृथाः। दशरथो देवासुरयुध्दे यौ तौ वरावददात् तौ स्मारय। संकल्पितं प्रयोजनं मा त्वामतिक्रमेत्। यदा त्वां स्वयमुत्थाप्य दशरथो वरं दद्यात् तदा तं सत्यप्रतिज्ञं कृत्वेमौ वरौ वृणीथाः। (वरेणैकेन) राममरण्ये प्रव्राजय। (द्वितीयेन वरेण) भरतो राजा क्रियताम्। एवं प्रव्राजितो रामः प्रजानामरामो भविष्यति। तव भरतो राजा हतशत्रुश्च भविष्यति। येन कालेन रामो वनात् प्रतिनिवर्तिष्यते तेन कलेन बुद्धिमान् ते पुत्रो वशीकृतप्रजः संपादितमित्रः कृतमूलो भविष्यति। वरौ याचितुं तवेममुचितकालं मन्ये। अतो विगतभया रामाभिषेकसंकल्पाद् राजानं निगृह्य विनिवर्तय। इत्थं मन्थरया अकार्यं प्रयोजनरूपेण ग्राहिता सा कैकेयी ज्ञातकरणीया हृष्टा च तामब्रवीत्। कुब्जे! श्रेष्ठवचांसि भाषमाणां त्वामहं सम्यङ् नाजानाम्। बुध्दिनिश्चये पृथिव्यां कुब्जानां त्वमुत्तमा भवसि। त्वमेव मम कार्येषु नित्यव्यापृता हितैषिणी च। यदि त्वया न प्रबोधिता तर्हि राज्ञश्चिकीर्षितमहं न विजानीयाम्। सन्ति कुब्जाः पूर्वजन्मकृतपापेन दुरवयवनिर्माणवत्यो वक्रशरीराश्च। त्वं यद्यपि

किञ्चिद् वक्रासि तथापि वातेन संनतं पद्ममिव प्रियदर्शनासि। व्याप्तं तवोरः स्कन्धं यावत् समुन्नतमस्ति। तदधस्तात् शातं+ सुनाभमुदरं वक्षस औन्नत्येन लज्जितवद् दृश्यते। रशनादामशोभितं ते जघनं शब्दायते। सुसंहते ते जङ्घे पादौ चायतौ। आयतोरूः क्षौमवासिनी ममाग्रतो गच्छन्ती त्वं राजहंसीव राजसे। रथाग्रभागवद् दीर्घं विशालं चास्ति ते स्थगु यत्र ते मतयो राजनीतयो मायाश्च वसन्ति। अभिषिक्ते भरते रामे च वनं गते ते स्थगु स्वर्णमालया अलंकरिष्यामि। लब्धार्था संतुष्टा च सुनिष्टप्तेनोत्तमकाञ्चनेन तव स्थगुनः पटलं करिष्यामि। मुखे चित्रं शुभं स्वर्णमयं तिलकं शुभान्याभरणानि च कारयिष्यामि। शुभे वस्त्रे परिधाय देवतेव चरिष्यसि। अप्रतिमानना त्वं चन्द्रं स्पर्धमानेन मुखेन द्विषज्जनं प्रति गर्वं कुर्वती औध्दत्येन संचरिष्यसि। यथैव त्वं सदा मम पादौ परिचरसि तथा सर्वाभरणभूषिताः कुब्जास्तव पादौ सेविष्यन्ते। इति प्रशस्यमाना मन्थरा वेद्यामग्निशिखामिव शुभ्रे शयने शयानां कैकेयीमिदमुवाच। कल्याणि! गतोदकस्य प्रवाहस्य सेतुबन्धो न क्रियते। उत्तिष्ठ। अस्मत्कल्याणं कुरु। राजानं तव मार्गे प्रवर्तयस्व। तथा प्रोत्साहिता सौभाग्यमदगर्विता देवी कैकेयी मन्थरावाक्यवशंवदा तया सह क्रोधागारं प्रविवेश। सा वराङ्गना बहुशतसहस्रमूल्यं मुक्ताहारं बहुमूल्यान्यन्यानि शुभाभरणानि चावमुच्य स्वर्णिमिव प्रकाशमाना भूमौ संविश्य मन्थरामभाषत। मन्थरे! रामे वनं गते भरतो महीं प्राप्स्यति। अथवा इह मां मृतां नृपायावेदयिष्यसि। सुदारुणमेतद् वचनमुक्त्वा सा समस्तभूषणान्यवमुच्य एकत्र निधाय पतिता किन्नरीव आस्तरणेनासंवृतां मेदिनीमधिशिप्ये। अत्यधिककोपान्धकारावृतानना अवमुक्तोत्तममाल्यभूषणा दुःखिता नरेन्द्रपत्नी तमोवृता मग्नतारका द्यौरिवासीत्।

---

+ cr शान्तं। ग्राह्यः शातं।

१०

महाराजो दशरथो रामस्याभिषेकमाज्ञाप्य प्रियवार्तार्हां कैकेयीं प्रियमाख्यातुमन्तःपुरं विवेश। तत्र क्रोधागारे पतितां भूमौ शयानामतथोचितां तां महाराजो दृष्ट्वा दुःखेन प्रतप्त इवाभवत्। वृध्दः सः अपापस्तरुणीं भार्यां प्राणेभ्योऽपि गरीयसीं पापसंकल्पां धरणीतले ददर्श। अरण्ये मृगयुणा विषलिप्तबाणेन विध्दां करिणीं महागज इव स्नेहात् तां स परिममर्श। पाणिभ्यां तां परिमृश्य भीतचित्तः कमलपत्रनेत्रां वनितां प्रणयादिदमुवाच। त्वं मह्यं कुप्यसीति नाहं जाने। देवि! केन त्वमपराध्दा केन वा विमानिता? कल्याणि! यत् त्वं पांसुषु शेषे तदिदं मम दुःखकारणमस्ति। तव सर्वशुभकरमनसि मयि स्थिते मम चित्तं क्षोभयन्ती पिशाचग्रस्तचित्तेव किमर्थं त्वं भूमौ शेषे? मम निपुणा वैद्याः सर्वशो वेतनसम्मानादिभिः परितुष्टाश्च सन्ति। ते त्वां सुखितां करिष्यन्ति। भामिनि! व्याधिमाचक्ष्व। कस्य प्रियं कर्तुमिच्छसि? केन वा तवाप्रियं कृतम्? कोऽद्य प्रियं को वा सुमहदप्रियं लभताम्? को वा अवध्यो हन्यताम्? को वा वध्यो विमुच्यताम्? को दरिद्र आढ्यो भवतु? को वा धनी अकिञ्चनो भवतु? अहं सर्वे मदीयाश्च तव वशानुगाः स्मः। तवाभिप्रायं विरोध्दुं नाहमुत्सहे। मम जीवितेनापि तव वाञ्छां सफलयामि। यन्मनसेच्छसि तद् ब्रूहि। यावद् रथचक्रमावर्तते तावन्मम राज्यमस्ति। तथोक्ता सा समाश्वस्ता तदप्रियं वक्तुकामा भर्तारं (वाग्भिः) भूयः परिपीडयितुमुपचक्रमे। देव! न केनचिदहमपकृता न च विमानिता। मम किञ्चन मनोगतमस्ति। तत् त्वया कृतमिच्छामि। यदि त्वं कर्तुमिच्छसि तर्हि प्रतिजानीष्व। ततो मम प्रार्थनां व्याहरिष्यामि। प्रिययैवमुक्तः स्त्रीवशं गतो राजा ईषत् स्मयमानः कैकेयीमुवाच। सौभाग्यगर्विते! किं न जानासि मम त्वत्तः प्रियतरो मनुजव्याघ्राद् रामादन्यो न विद्यते। भद्रे! मम हृदयं

सीदति। तद् गृहीत्वा उध्दरस्व। एतत् सर्वं समीक्ष्य यत् त्वं साधु मन्यसे तद् ब्रूहि। मयि तव प्रभुत्वं जानती न मां शङ्कितुमर्हसि। तव प्रीतिं करिष्यामि। मम सुकृतेनैव ते शपे। तेन वाक्येन संहृष्टा कैकेयी अभ्यागतमन्तकमिव महाघोरं मनोगतं तमभिप्रायं व्याजहार। यत् प्रथमं शपसि ततो मम वरं च ददासि तत् सेन्द्रपुरोगमास्त्रयस्त्रिंशद् देवाः शृण्वन्तु। चन्द्रादित्यौ नभो ग्रहा रात्रिर्दिनं दिशो जगत् सगन्धर्वा सराक्षसा पृथिवी निशाचराणि भूतानि गृहस्थिता गृहदेवता यान्यन्यानि भूतानि तानि च तव भाषितं जानीयुः। सत्यसन्धो महातेजा धर्मज्ञः सावधान एष महाराजो दशरथो वरं मे ददाति। तस्मान्मे साक्षिभूता देवताः शृण्वन्तु। एवं देवी कैकेयी दशरथं स्वहस्तगतं कृत्वा प्रशंस्य च तत्पश्चाद् भार्याप्रणयमोहितं तं वरदमिदमुवाच। देव! तदा त्वया मे यौ वरौ दत्तौ तौ तावदहमद्यैव वक्ष्यामि। मम वचः शृणु। रामस्याद्याभिषेकसमारम्भ उपकल्पितोऽस्ति। अनेनैवाभिषेकसमारम्भेण मम पुत्रो भरतोऽभिषिच्यताम्। रामश्चतुर्दशवर्षाणि दण्डकारण्यमाश्रितश्चीराजिनजटाधारी तापसो भवतु। अकण्टकं यौवराज्यमद्य भरतो भजताम्। अद्यैव रामं वनं प्रयान्तं पश्येयम्। कैकेय्या दारुणं वचः श्रुत्वा महाराजो व्याघ्रीं दृष्ट्वा मृग इव व्यथितो विक्लबश्च बभूव। असंवृतायां भूम्यामासीनो दीर्घमुच्छ्वसन् सामर्षः अहो धिगिति वाचमुक्त्वा शोकोपहतचेतनो भूयो* मोहमापेदिवान्। सुदुःखितो नृपश्चिरेण संज्ञां प्रतिलभ्य क्रुध्दश्चक्षुषा प्रदहन्निव कैकेयीमब्रवीत्। नृशंसे दुष्टचारित्रे पापे कुलविनाशिनि! रामेण मया वा तव किं कृतम्? रामः सदा जननीतुल्यां वृत्तिं ते वहति। इदानीं किंनिमित्तं तस्यैवानर्थाय त्वमुद्यतासि? मया त्वं नृपसुता तीक्ष्णविषा व्यालीवाविज्ञानात् स्वं भवनमात्मविनाशार्थं प्रवेशिता। सर्वो जीवलोको रामस्य गुणं स्तौति। कमपराधमुद्दिश्येष्टं सुतमहं

---

* कैकेय्या वचनं श्रुत्वैव दशरथो मुमोहेत्येतेनोह्यम्।

त्यक्ष्यामि? कौसल्यां वा सुमित्रां वा ऐश्वर्यं वा आत्मनो जीवितं वा त्यजेयम्। पितृवत्सलं रामं तु न त्यजेयम्। ज्येष्ठपुत्रं रामं दृष्ट्वा मम परमं प्रेम भवति। राममपश्यतो मम चेतना नश्यति। लोकः सूर्यं विना तिष्ठेत्। सलिलं विना सस्यं वा तिष्ठेत्। रामं विना मम देहे तु जीवितं न तिष्ठेत्। पापनिश्चये! तस्मादेष निश्चयः पूर्णतस्त्यज्यताम्। एष ते चरणौ मूर्ध्ना स्पृशामि मे प्रसीद। इति ब्रुवन् उल्लङ्घितमर्यादया भार्यया हृदये गृहीतः स राजा अनाथवद् विलपन् प्रसारितौ देव्याश्चरणावुभावसंप्राप्य+ रोगग्रस्तवत् पपात।

११

मूर्तीभूतानर्था तावत्पर्यन्तमनिष्पन्नप्रयोजना++ कैकेयी अतदर्हं पुण्यान्ते देवलोकात् परिच्युतं ययातिमिव स्थितं शयानं महाराजमभीता भयदर्शिनी पुनस्तमेव वरमागृह्णती उवाच। महाराज! सत्यवादी दृढव्रतोऽहमिति त्वं कत्थसे। ममेमं वरं कस्मान्निरुणत्सि? कैकेय्या एवमुक्तो राजा दशरथः क्रुध्दः क्षणं विह्वलन्निव स्थित्वा तत उवाच। अनार्ये! त्वं मम शत्रुरसि! मयि मृते रामे च वनं गते त्वं सकामा सुखं प्राप्नुहि। कैकेय्याः प्रियं कर्तुं मया रामो वनं प्रव्राजित इति यद्यपि सत्यमेव सर्वस्मै ब्रूयां तथापि न कोऽपि तद् विश्वस्यात्। लोके अतुला अकीर्तिर्ध्रुवः परिभवश्च मे भवतः। परिभ्रमितचेतसि तस्मिंस्तथा विलपति सूर्योऽस्तमगमद् रजनी चाभ्यवर्तत। तथार्तस्य विलपतो राज्ञः सा त्रियामा चन्द्रमण्डलमण्डितापि न व्यभासत। वृध्दो दशरथो नृपस्तथैवोष्णं विनिःश्वस्य रोगपीडितवद् गगनासक्तलोचनो दुःखभरितं विललाप। हे रजनि! न त्वया प्रभातामिच्छामि। अयमञ्जलिर्मया रचितः। अथवा शीघ्रं गम्यताम्। निर्घृणां नृशंसां कैकेयीं

---

+ cr असंस्पृश्य। ग्राह्यः – असंप्राप्य। ++cr अनर्थरूपा सिद्धार्था। ग्राह्यः – अनर्थरूपासिद्धार्था।

द्रष्टुं नाहमिच्छामि यस्या निमित्तं महदिदं व्यसनमापतितम्। एवमुक्त्वा संयताञ्जलिः राजा कैकेयीं प्रसादयामास। पुनश्चेदमब्रवीत्। भद्रे! साधुवृत्तस्य दीनस्य त्वदाश्रितस्य मरणासन्नस्य विशेषतो राज्ञो मम प्रसादः क्रियताम्। इदं सर्वं शून्ये न+ खलु मयोक्तम्। साधु प्रसादं मे कुरु। सहृदयासि। इत्युक्तापि दुष्टभावा नृशंसा कैकेयी विशुध्दभावस्य ताम्रेक्षणस्य बाष्पावरोधादव्यक्तकण्ठस्य राज्ञो विचित्रं करुणं विलापं श्रुत्वा तस्य प्रार्थनां नाङ्गीचकार। पुत्रस्य विवासनं प्रति प्रतिकूलभाषिणीमतुष्टां प्रियां समीक्ष्य दुःखितः स राजा पुनर्मूर्छितो विसंज्ञः क्षितौ निपपात।

१२

सा पापा पुत्रशोकपीडितं विसंज्ञं भुवि पतितं विवेष्टमानं दशरथमिदमब्रवीत्। त्वया मह्यं कृतां प्रतिज्ञामिदानीं श्रुत्वा पापं कृत्वेव दुःखितः क्षितितले शेषे। किमिदम्? त्वं मर्यादायां स्थातुमर्हसि। धर्मविदो जनाः सत्यं हि परमं धर्ममाहुः। मया सत्यमाश्रित्यैव त्वं धर्मं प्रचोदितः। राजन्! शैब्यो राजा श्येनाय स्वां तनुं संश्रुत्य प्रदायोत्तमां गतिं जगाम। तथा हि तेजस्वी अलर्कों याचमानाय वेदपारगाय ब्राह्मणाय स्वके नेत्रे उद्धृत्याखिद्यमानो ददौ। सत्यमनुसरन् समुद्रः स्वल्पां मर्यादां स्वां वेलां वृद्धिसमयेऽपि सत्यपालनान्नातिवर्तते। आर्य! ममेमं समयं यदि त्वं न करिष्यसि तर्ह्येवं त्वया परित्यक्ता तेऽग्रतो जीवितं परित्यक्ष्यामि। निर्विशङ्कया कैकेय्यैवं प्रचोदित इन्द्रप्रयुक्तोपेन्द्रकृतं पाशं बलिरिव राजा धर्मपाशमुन्मोक्तुं न शशाक। युगचक्रयोर्मध्ये सक्तधुर्यवदुद्भ्रान्तहृदयो विवर्णवदनश्च बभूव। विह्वलनेत्राभ्यामपश्यन्निव कृच्छ्राद् धैर्येण संस्तभ्य कैकेयीमिदमब्रवीत्। पापे! अग्नौ मन्त्रसंस्कृतो यस्ते पाणिर्मया धृतस्तं स्वजं तव पुत्रं च त्वया सह त्यजामि। तच्छ्रुत्वा पापप्रवर्तना वाक्यज्ञा कैकेयी रोषमूर्छिता पुनः

---

+ Cr शून्येन। ग्राह्यः – शून्ये न।

पार्थिवं परुषमुवाच। राजन्! विषबाधातुल्यं वाक्यं भाषसे। किमिदम्? शीघ्रं पुत्रं राममिहानाययितुमर्हसि। मम पुत्रं राज्ये संस्थाप्य रामं वनचरं मां शत्रुरहितां च कृत्वा कृतकृत्यो भविष्यसि। दशरथस्तीक्ष्णेन प्रतोदेन प्रहतो हयोत्तम इवाभीक्ष्णं प्रचोदितः कैकेयीमिदमब्रवीत्। धर्मबन्धेन बध्दोऽस्मि। मम बुद्धिर्नष्टा। धार्मिकं ज्येष्ठं प्रियं पुत्रं रामं द्रष्टुमिच्छामि। राज्ञो वचनं श्रुत्वा कैकेयी राममानयेति स्वयं सूतमब्रवीत्* । धार्मिकः स राजा सुतं प्रति नष्टहर्षः शोकरक्तेक्षणः सूतमुद्वीक्ष्य किमप्यस्पष्टमुवाच। तत् करुणमस्पष्टं वाक्यं श्रुत्वा दीनं च राजानं दृष्ट्वा प्रगृहीताञ्जलिः सुमन्त्रस्तस्माद् देशात् किञ्चिदपाक्रमत्। यदा महीपतिर्दैन्यात् स्वयं वक्तुं न शशाक तदा मन्त्रज्ञा कैकेयी सुमन्त्रं रामं द्रक्ष्यामि शीघ्रं तमानयेति प्रत्युवाच। स कल्याणं मन्यमानो मनसा ननन्द। तया त्वरितं चोदितः सुमन्त्रो निश्चयमभिषेकार्थं राम इहायातीति चिन्तयामास। इति चित्ते संप्रधार्य सूतो महता हर्षेण रामं दिदृक्षुर्निर्जगाम। ततः स सहसा पुरस्ताद् विनिर्गम्य द्वारसमीपे समवेतान् महीपतीन् उपस्थितान् महाधनांश्च ददर्श।

१३

वेदपारगास्ते ब्राह्मणास्तां रजनीमुषित्वा वसिष्ठसहिता अभिषेकमण्डपसमीपप्रदेशमुपतस्थुः। अमात्याः सेनान्यो वणिङ्मुख्याश्च रामाभिषेकार्थं प्रीयमाणाः समागच्छन्। विमले सूर्योदये पुष्यनक्षत्रयुक्ते दिने प्राप्ते ब्राह्मणोत्तमै रामाभिषेकार्थं निर्णीतम्। काञ्चना जलकुम्भाः स्वलंकृतं भद्रपीठं प्रकाशमानेन व्याघ्रचर्मणा सम्यगास्तीर्णो रथश्च सिद्धाः कृताः। गङ्गायमुनयोः पुण्यात् संगमाज्जलमाहृतम्। अन्यसरिद्भ्यः पुण्येभ्यो ह्रदेभ्यः कूपेभ्यः सरोभ्यो जलमानीतम्। प्राग्वाहा ऊर्ध्ववाहास्तिर्यग्वाहा

---

*सुमन्त्रागमनं काव्येऽकथितमूह्यम्।

मिश्रिताश्च या नद्यः सन्ति ताभ्यः सर्वसमुद्रेभ्यश्च जलमानीतम्। क्षौद्रं दधि घृतं लाजा दर्भाः सुमनसः पयो लाजयुताः क्षीरोद्वारिभिः (प्रत्यग्रैः) वृक्षपत्रैश्छन्नाः पद्मोत्पलयुता उत्तमजलेन पूर्णाः काञ्चनकलशा रजतकलशाश्च तत्र भान्ति स्म। प्रसृतचन्द्रकिरणसमं काञ्चनं रत्नभूषितं रामस्योत्तमं वालव्यजनं सज्जमतिष्ठत्। चन्द्रमण्डलसंकाशं पाण्डुरं द्युतिकरमभिषेकसमये पुरस्कार्यं शोभायुक्तमातपत्रं सज्जम्। पाण्डुरो वृषः सज्जः। पाण्डुरोऽश्वः सुस्थितः। राजाधिरोहणयोग्यो मदगजः प्रतीक्षते स्म। सर्वाभरणभूषिता मङ्गलप्रदा अष्टौ कन्याः सर्वाणि वादित्राणि वन्दिनस्तथापरे च प्रतीक्षन्ते स्म। इक्ष्वाकुवंशीयानां राज्ये अभिषेकसामग्री यथा संभ्रियेत तथा अभिषेकद्रव्यसमुदायमादाय राजवचनात् तत्र समवेता जना महीपतिमपश्यन्तः को नु राज्ञो नः प्रतिवेदयेदित्यब्रुवन्। महाराजं न पश्यामः। सूर्य उदितः। रामस्य सर्वा यौवराज्याभिषेकसामग्री सिद्धा। इति तेषु ब्रुवाणेषु राजसत्कृतः सुमन्त्रः सर्वान् विविधप्रदेशीयान् महीपतीनिदमब्रवीत्। आयुष्मतां भवतां वाक्येन संप्रतिबद्धस्य राज्ञः सुखमनागमनकारणं* च पृच्छामि। इत्युक्त्वा सुमन्त्रः अन्तःपुरद्वारमाजगाम। तत्र गुणवर्णनयुक्ताभिराशीर्भिर्दशरथमभितुष्टाव। भगवती रात्रिर्गता। शिवमहरुपस्थितम्। राजश्रेष्ठ! बुध्यस्व। अनन्तरं कार्यं कुरु। हे राघव! नृप! ब्राह्मणाः सेनानायका नैगमाश्चागतास्तव दर्शनं प्रतिकाङ्क्षन्ति। प्रतिबुध्यस्व। तथा स्तुवन्तं सुमन्त्रं राजा प्रतिबुध्याब्रवीत्। नाहं सुप्तः। राममिहाश्वानय। इति दशरथः सूतं पुनरन्वशात्। स राजवचनं श्रुत्वा तं शिरसा प्रतिपूज्य महत् प्रियं भवतु इति मन्यमानो राजगृहान्निर्जगाम। पताकाध्वजशोभितं राजमार्गं प्रविष्टः स सूतस्तत्र रामयौवराज्याभिषेकसम्बन्धिनीः

---

*यच्चागमनकारणम् = यच्च+ अगमनकारणम्। चानागमनकारणम् इति अधः- सूचिकापाठः सुगमः।

कथाः शुश्राव। ततः शक्रवेश्मकैलाससमप्रभं रुचिरं महाकपाटपिहितं वितर्दिशतशोभितं काञ्चनप्रतिमालङ्कृतमुख्याग्रभागं मणिविद्रुमखचितबहिर्द्वारं शरन्मेघतुल्यद्युति मेरुगुहोपमं सुमहद्भिः पुष्पदामभिरलङ्कृतं दीप्तं रामवेश्म ददर्श। रथेन गत्वा सुमन्त्रो नराकुलमैश्वर्यसंपन्नं राजकुलं विलोकयन् प्रहृष्टरोमा बभूव। अद्रिकूटसन्निभं प्रभूतरत्नं राजगृहमवार्यमाणो मकरः समुद्रमिव सारथिः प्रविवेश।

१४

सुमन्त्रो जनाकुलं तदन्तःपुरद्वारं समतीत्य जनसम्मर्दरहितां कक्ष्यामाससाद। सा कक्ष्या मृष्टकुण्डलैः प्रासधनुर्धारिभिरप्रमत्तैरेकाग्रै रामानुरक्तैर्युवभिः रक्षिता बभूव। तत्र काषायिणो वृद्धान् वेत्रपाणीन् स्वलङ्कृतान् सावधानान् द्वारि नियुक्तानन्तःपुराध्यक्षान् ददर्श। रामप्रियचिकीर्षवस्ते तं समायान्तं समीक्ष्य सहभार्याय रामाय क्षिप्रमाचचक्षिरे। पितुरान्तरङ्गिकं सुमन्त्रं निवेदितमाज्ञाय प्रियकाम्यया तत्रैवानाययामास। तत्र सूतः सौवर्णे सोत्तरच्छदे पर्यङ्के उपविष्टं स्वलङ्कृतं वैश्रवणसंकाशं रामं ददर्श। स रामो वराहरुधिराभेण शुचिना सुगन्धिना श्रेष्ठेन चन्दनेनानुलिप्तः। वालव्यजनहस्तया पार्श्वतः स्थितया सीतया चित्रया चन्द्र इव स उपेतः। तपन्तं सूर्यमिव स्थितं तं विनयज्ञः सुमन्त्रो ववन्दे। प्राञ्जलिः सुमन्त्रः सुखासनोपविष्टं रामं सुखं पृष्ट्वोवाच। कौसल्यासुपुत्र राम! महिष्या कैकेय्या सह पिता त्वां द्रष्टुमिच्छति। तत्र गम्यताम्। मा चिरम्। एवमुक्तः संहृष्टो रामः सुमन्त्रं सम्मानयामास सीतां चेदमुवाच। देवि! राजा राज्ञी च समागम्य मदन्तरे अभिषेकसंबन्धं कमपि विषयं मन्त्रयेते। ध्रुवम्। सुदक्षिणा प्रियकामा माता कैकेयी राज्ञः अभिप्रायं लक्षयित्वा राजानं मदर्थं संचोदयति। मम मातापित्रोर्यादृशी तत्र परिषदस्ति तादृशो दूतः सुमन्त्रः संप्राप्तः। ध्रुवं मां राजाद्यैव यौवराज्येऽभिषेक्ष्यति। हन्त!

इतः शीघ्रं गत्वा महीपतिं द्रक्ष्यामि। त्वं परिवारेण सह सुखमास्स्व। विहर च। पतिसम्मानिता सीता मङ्गलानि चिन्तयन्ती भर्तारमाद्वारमनुवव्राज। रामः सर्वान् दर्शनार्थिनो दृष्ट्वा समेत्य प्रतिनन्द्य पावकसंकाशं हेमवर्चसं प्रभया चक्षूंषि मुष्णन्तमिव कलभकल्पैः परमवाजिभिर्युक्तं रथोत्तममारुरोह। रथारुढ इन्द्रवत् श्रिया ज्वलितो रामस्तूर्णं प्रययौ। आकाशे पर्जन्य इव श्रीमान् स रथो महानादं कुर्वन् महामेघाच्चन्द्रमा इव निकेतान्निर्ययौ। अनुजो लक्ष्मणश्छत्रचामरपाणिः पृष्ठतो रथमास्थाय भ्रातरं जुगोप। रामे निष्क्रममाणे जनौघस्य तुमुलः कोलाहलः समजायत। गच्छन् रामो महाप्रहृष्टस्य जनस्यात्मानमुद्दिश्य बहुभाषणानि शुश्राव। राजप्रसादाद् राज्यं प्राप्नुवन् एष रामोऽद्यैश्वर्यं गच्छति। अस्माकमयं प्रशास्ता भविता। वंयं सर्वसमृद्धकामा भवितास्मः। यदयं चिरायेदं राष्ट्रं प्रपत्स्यते स जनस्य लाभो भविता। इति भाषणानि शृण्वन् घोषवद्भिर्हयैर्गजैश्च सह पुरो गच्छद्भिः स्वस्तिवाचकैः सूतमागधैर्महीयमानः श्रेष्ठैर्वादकैरभिष्टुतः कुबेर इव रामो ययौ। करेणुमातङ्गरथाश्वसंकुलं महाजनौघपरिपूर्णचत्वरं बहुरत्नयुतं बहुपण्यसंचययुतं रुचिरं महापथं रामो ददर्श।

१५

श्रीमान् संप्रहृष्टमित्रो रामो रथमास्थाय नानाजनसमाकुलं नगरं ददर्श। मेघतुल्यैः पाण्डुरैर्गृहैरुपशोभितमगरुधूपितं राजमार्गं मध्येन ययौ। स राजपथः असम्बाधो विविधैः पण्यैर्भक्ष्यैश्च संवृतः शोभमानश्च बभूव। सुहृद्भिः समुदीरितान् बहूनाशीर्वादान् शृण्वन् सर्वान् यथार्हं संपूजयंश्च स ययौ। तदा जना ऊचुः। अद्याभिषिक्तस्त्वं पितामहैः प्रपितामहैश्चाचरितं तं मार्गमुपादायानुपालय। यथा पित्रा दशरथेन सर्वैः पितामहैश्च लालिताः स्मो रामे राजनि ततः सुखतरं वत्स्यामः। अद्य रामो राज्ये प्रतिष्ठितो भवति तदर्थमेव पितुर्गृहं गच्छति। तं पश्यतां नो

भोजनेनान्यैः कार्यैर्वा किं प्रयोजनम्? रामस्य राज्याभिषेकात् प्रियतरं नान्यत् किमपि भविष्यति। रामः सुहृदामेता अन्याश्चात्मसंपूजनीः शुभाः कथाः शृण्वन् हर्षमप्रकटयन् महापथं ययौ। रामेऽतिक्रान्तेऽपि कोऽपि नरस्तस्मान्नरोत्तमान्मनश्चक्षुषी वा अपाक्रष्टुं न शशाक। धर्मात्मा रामः सर्वप्रजानां सर्वेषु वयोवृद्धेषु दयां कुरुते। तेन ते तमनुसरन्ति। तदा रामः श्रिया ज्वलन् राजकुलमासाद्य पितुर्वेश्म प्रविवेश। सर्वाः कक्ष्याः समतिक्रम्य सर्वं जनं संनिवर्त्यान्तःपुरमभ्यगात्। तस्मिन् पितुरन्तिकं प्रविष्टे सर्वो जनो मुदितस्तस्य पुनर्निर्गमनं तथा प्रतीक्षते स्म यथा समुद्रो चन्द्रमस उदयं प्रतीक्षते।

१६

रामः शुभे आसने निषण्णं कैकेयीसहितं परिशुष्यता मुखेन दीनं पितरं ददर्श। विनीतः सावधानचित्तश्च स पूर्वं पितुश्चरणौ ततः कैकेय्याश्चरणौ च ववन्दे। दशरथो रामेति वचनमुक्त्वा बाष्पपर्याकुलेक्षण ईक्षितुमभिभाषितुं वा न शशाक। अदृष्टपूर्वं भयावहं नरपतेस्तद् रूपं दृष्ट्वा रामोऽपि पदा पन्नगं स्पृष्ट्वेव भयमापद्यत। दुःखसूचकैरिन्द्रियैः शोकसंतापकर्शितं व्यथितव्याकुलचित्तं निःश्वसन्तं तरङ्गपरम्परायुतमक्षोभ्यमपि क्षुभ्यन्तं सागरमिव आदित्यमिवोपरक्तमुक्तानृतमिव ऋषिं तं महाराजमपश्यत्। ऊहातीतं नृपतेः तं शोकमूहमानः पर्वणि समुद्र इव रामः प्रक्षुब्धतरो बभूव। पितृहिते रतो रामस्तदा चिन्तयामास यत् किंस्विदद्यैव नृपतिर्मां हर्षेण नाभिभाषते। अन्यदा कुपितोऽपि मां दृष्ट्वा प्रसीदति। तादृशस्य पितुर्मामद्य संप्रेक्ष्य दुःखं किं प्रवर्तते? स रामो दीनः शोकार्तो विषण्णवदनो भूत्वा कैकेयीमभिवाद्याब्रवीत्। कच्चिन्मया अज्ञानान्नापराद्धं येन मे पिता कुपितः? तत्कोपहेतुं ममाचक्ष्व। त्वमेव पितरं प्रसादय। विवर्णवदनो दीनः पिता मां नाभिभाषते। कच्चित् शरीरजो व्याधिर्मानसी

चिन्ता वा एनं न बाधते? सदा सुखं दुर्लभं खलु। भरतस्य शत्रुघ्नस्य मातॄणां वा कच्चिन्नाशुभम्? कुपितं पितरमतोषयन् तस्य वचोऽकुर्वन् वा मुहूर्तमपि जीवितुं नेच्छेयम्। यस्मान्नर आत्मनो जन्मेह प्राप्नोति तस्मिन् प्रत्यक्षे दैवते सति कथं तस्यानुकूलं न प्रवर्तेत? कच्चिदभिमानाद् भवत्या मम पिता न किञ्चित् परुषमुक्तो येनास्य मनः पीडितम्? देवि! परिपृच्छतो मे याथार्थ्येनैतदाचक्ष्व। नृपे अपूर्वोऽयं विकारः किंनिमित्तमभूत्? अहं हि राज्ञो वचनात् पावके पतेयम्। नृपेण हितेन च पूज्येन पित्रा नियुक्तः सन् तीक्ष्णं विषं भक्षयेयं समुद्रे मज्जेयं च। तस्माद् राज्ञो यदभिकाङ्क्षितं देवि! तद् ब्रूहि। तत् करिष्ये प्रतिजाने च। रामो द्विर्नाभिभाषते। एवं सत्यवादिनं मृदुस्वभावं राममनार्या कैकेयी भृशदारुणं वचनमुवाच। राम! पुरा देवासुरयुद्धे महारणे प्राप्ते शत्रुबाणविद्धस्ते पिता मया रक्षितः। तदा ते पित्रा मम द्वौ वरौ दत्तौ। तौ वरावुपयुज्य मया भरतस्याभिषेचनं तवाद्यैव दण्डकारण्ये गमनं च राजा याचितः। हे नरश्रेष्ठ! यदि त्वं पितरमात्मानं च सत्यप्रतिज्ञौ कर्तुमिच्छसि तर्हि ममेदं वाक्यं शृणु। यतः पितुराज्ञां करिष्ये इति त्वया प्रतिज्ञातं तन्निदेशे तिष्ठ। यथा तव पित्रा मे प्रतिश्रुतं तथा त्वया चतुर्दशवर्षाणि दण्डकारण्यं प्रवेष्टव्यम्। इममभिषेकं त्यक्त्वा जटाजिनधरश्चतुर्दशवर्षाणि दण्डकारण्यमाश्रित्य वस। भरतः अयोध्यायां वसन् नानारत्नसमाकीर्णां सवाजिरथकुञ्जरामिमां वसुधां प्रशास्तु। अप्रियं मरणोपमं तद् वचनं श्रुत्वा रामो न विव्यथे। कैकेयीं चेदमुवाच। एवमस्तु। अहं राज्ञः प्रतिज्ञामनुपालयन् जटाचीरधर इतो वनं वस्तुं गमिष्यामि। इदं तु ज्ञातुमिच्छामि। किमर्थं मां महीपतिर्यथापुरं नाभिनन्दति? देवि! त्वया मन्युर्न कार्यः। तवाग्रतो ब्रवीमि। चीरजटाधरो वनं यास्यामि। सुप्रीता भव। हितेन गुरुणा कृतज्ञेन नृपेण नियुज्यमानोऽहं विस्रब्धः किं प्रियं न कुर्याम्? इदमेकं तु दुःखं

मम हृदयं दहति यद् राजा स्वयं भरतस्याभिषेचनं मां नाह। अप्रचोदितोऽप्यहं हृष्टः सन् भ्रात्रे भरताय राज्यं धनानि प्राणांश्च दद्याम्। स्वयं राज्ञा पित्रा प्रचोदितस्तव प्रियकामार्थं प्रतिज्ञामनुपालयन् दद्यामिति किं पुनर्वक्तव्यम्? तदिमं त्वमाश्वासय। महीपतिर्वसुधासक्तदृष्टिः किं नु अश्रूणि मुञ्चति? नृपशासनाद् भरतं मातुलकुलादानेतुं शीघ्रं जवैर्हयैर्दूता अद्यैव गच्छन्तु। एषोऽहं पितुर्वचनादेव निर्विचिकित्सश्चतुर्दश समा वस्तुमितो दण्डकारण्यं सत्वरं गच्छामि। तदा कैकेयी रामवाक्येन हृष्टा प्रस्थानं श्रद्दधाना रामं त्वरयामास। यथा त्वं वक्षि तथा भवतु। मातुलकुलाद् भरतमुपावर्तयितुं शीघ्रजवैर्हयैर्दूता यास्यन्ति। तव तु वनं गन्तुमुत्सुकस्य विलम्बनं न क्षममहं मन्ये। तस्मादितः शीघ्रं त्वं वनं गन्तुमर्हसि। व्रीडान्वितो नृपो यत् त्वां स्वयं नाभिभाषते एतन्न किञ्चित्। एषा चिन्ता अपनीयताम्। त्वरमाणस्त्वं यावदस्मात् पुराद् वनं न यास्यसि तावत् ते पिता न स्नास्यति भोक्ष्यते वा। कैकेयीवचनं श्रुत्वा राजा धिक् कष्टमिति निःश्वस्य शोकपूर्णो मूर्छितः पर्यङ्के न्यपतत्। रामो राजानमुत्थाप्य कैकेय्या प्रचोदितः कशया हतो वाजीव वनं गन्तुं कृतत्वरोऽभवत्। दुष्टायाः कैकेय्या भयंकरपरिणामं खेदावहं तद् वचनं श्रुत्वा स निर्व्यथस्तामब्रवीत्। देवि! नाहं धनासक्तो लोके निवस्तुमुत्सहे। ऋषीनिव मामपि केवलं धर्मे स्थितं विद्धि। पूज्यस्य पितुः किञ्चिद् यत् प्रियं मया कर्तुं शक्यं प्राणानपि परित्यज्य तत् सर्वथा कृतं जानीहि। पितुः शुश्रूषा आज्ञापालनं वा यथा भवति ततो महत्तरं धर्माचरणं न किञ्चिदस्ति। पूज्येनानेन पित्रा अनुक्तोऽपि भवत्या वचनादहमिदानीं विजने वने चतुर्दश वर्षाणि वत्स्यामि। कैकेयि! मयि तव परिपूर्णोऽधिकारोऽस्ति। एवं स्थिते भरतराज्याभिषेकविषयं मां विहाय राजानं त्वमवोचः। अतो विचारयामि नूनं मम गुणेषु न ते विश्वासोऽस्ति। अहमिदानीं प्रथमं मातरमापृच्छे।

अनन्तरं सीतामनुनयामि। ततोऽद्यैव महद् दण्डकावनं गमिष्यामि। भरतो यथा राज्यं पालयेत् पितरं शुश्रूषेत च तथा भवत्या कर्तव्यम्। स हि सनातनो धर्मः। रामस्य वचः श्रुत्वा दशरथो भृशं दुःखहतः शोकोद्रेकाद् बाष्पनिरोधासमर्थ उच्चै रुरोद। विसंज्ञस्य पितुरनार्यायाः कैकेय्याश्च चरणौ प्रणम्य रामस्तद्गृहाद् बहिर्गतः। पितरं कैकेयीं च प्रदक्षिणं कृत्वा अन्तःपुरान्निष्क्रम्य स्वं सुहृज्जनं ददर्श। परमक्रुद्धो लक्ष्मणो बाष्पपरिपूर्णाक्षो राममनुजगाम। अभिषेकसामग्र्याः प्रदक्षिणं कृत्वा रामः अपगतस्पृहया* दृष्ट्या तामस्पन्दं पश्यन् शनैर्जगाम। लोककान्तस्य चन्द्रस्य शोभां क्षपेव रामस्य महतीं शोभां राज्यनाशो नापाचकर्ष। राज्यं त्यजतो वनं गन्तुकामस्य रामस्य समस्तलोकातीतस्य योगिन इव चित्तविक्रिया नालक्ष्यत। मनसा दुःखं धारयन् इन्द्रियाणि निगृह्य च मनोधैर्यवान् सः अप्रियवार्तां वक्तुं मातुर्गृहं प्रविवेश। रामप्रवेशसमये कौसल्याभवनं सर्वमानन्दमयमासीत्। तस्मिन् समये निपतितस्य कार्यविघातस्य कमपि विकारं रामो न प्रादर्शयत् विक्रियाप्रदर्शने सुहृदां विपत्तिशङ्कया।

१७

भृशं दुःखितो रामः कुञ्जर इव निःश्वसन् इन्द्रियाणि निगृह्य भ्रात्रा सह मातुरन्तःपुरं जगाम। स तत्र गृहद्वारि उपविष्टं परमपूजितं वृद्धं तिष्ठतो बहूनपरांश्चापश्यत्। स प्रथमां कक्ष्यामतिक्रम्य द्वितीयायां वेदसंपन्नान् राज्ञा सत्कृतान् वृद्धान् ब्राह्मणान् ददर्श। स तान् प्रणम्य तृतीयायां द्वाररक्षणतत्पराः स्त्रियो वृद्धास्तरुणीश्च ददर्श। तदा प्रहृष्टास्ता जयशब्देन रामं वर्धयित्वा त्वरिता गृहं प्रविश्य राममातुः प्रियं रामागमनं न्यवेदयन्। तदा देवी कौसल्या नियमेन तां रात्रिं स्थित्वा प्रभाते पुत्रहितैषिणी विष्णोः

---

*शनैर्जगाम सापेक्षो दृष्टिं तत्राविचालयन्। अपगता ईक्षा अपेक्षा। अपेक्षया सहितः सापेक्षः। निरपेक्ष इत्यर्थः। इति महेश्वरतीर्थः।

पूजामकरोत्। नित्यं व्रतपरायणा सा क्षौमवसनं धृत्वा हृष्टा मङ्गलकराणि कृत्यानि परिसमाप्य मन्त्रवदग्निं जुहोति स्म। रामस्तत्र प्रविश्य (ब्राह्मणैः) अग्निं हावयन्तीं मातरं ददर्श। चिरादागतं मातृनन्दनमात्मजं दृष्ट्वा संहृष्टा कौसल्या वडवा किशोरमिवाभिचक्राम। पुत्रं वात्सल्यात् प्रियं हितं चेदमुवाच। वृद्धानां धर्मशीलानां महात्मनां राजर्षीणामायुः कीर्तिं वंशधर्मं च प्राप्नुहि। राघव! तव पितुः सत्यप्रतिज्ञतां पश्य। धर्मात्माद्यैव त्वां यौवराज्येऽभिषेक्ष्यति। स्वभावविनीतस्तदा मातुर्गौरवाच्चानतो रामः किञ्चिदञ्जलिं प्रसार्य मातरमब्रवीत्। देवि! नूनं महद् भयमुपस्थितं न जानीषे। इदं तव वैदेह्या लक्ष्मणस्य च दुःखायापतितम्। अहं मांसं हित्वा* मुनिवन्मधुमूलफलैर्जीवन् निर्जने वने चतुर्दशवर्षाणि निवत्स्यामि। महाराजो भरताय यौवराज्यं प्रयच्छति। मां तु तापसं कृत्वा दण्डकारण्यं विवासयति। एवं भाषमाणो रामो गतचेतसं कदलीमिव पतितां दुःखानुचितां मातरं दृष्ट्वा उत्थापयामास। भूमावुपावृत्योत्थितां भारं वाहितां वडवामिव स्थितां दीनां धूल्यावृतसर्वाङ्गीं मातरं रामः पाणिना विममर्श। दुःखपीडिता कौसल्या लक्ष्मणे उपशृण्वति राममुपासीनमुवाच। राम! यद्यहमप्रजा अभविष्यं ममैतावद् दुःखं नाभविष्यत्। मां दुःखयितुमेव त्वं जातः। वन्ध्याया अहमप्रजा** अस्मीत्येक एव मानसः शोको भवति। अन्यः संतापो न विद्यते। राम! भर्तुरधिकारमये जीवने मङ्गलं वा सुखं वा न मया दृष्टपूर्वम्। पुत्राधिकारकाले संभवतः पश्येयमिति मया आस्थितम्। साहं वरा सती अवराणां हृदयच्छिदां सपत्नीनां दुःखकराणि वाक्यानि श्रोष्यामि। प्रमदानामतो दुःखतरं किं नु भविष्यति! त्वयि सन्निहितेऽ

---

* अत्र आमिषशब्देन सूदैः संस्कृतं मांसमुच्यते इति गोविन्दराजः। वनेषु सीतारामलक्ष्मणा मांसभक्षणं चक्रुः। ** अप्रजास्मि = अप्रजाः + अस्मि। सन्धिरार्षः। इति गोविन्दराजः।

प्येवमहं निराकृतास्मि। प्रोषिते त्वयि किं पुनर्वक्तव्यम्? मरणमेव मे ध्रुवं भवेत्।यः कश्चिन्मां सेवते अथवा अनुवर्तते स जनः कैकेयीपुत्राद् भीतो नाभिभाषेत। राम! तव जन्मारभ्याद्य यावद् दुःखपरिक्षयमाकाङ्क्षन्त्या मया सप्तदशवर्षाणि व्यतीतानि। दुर्गतया मया उपवासैयोगैर्बहुभिः परिश्रमैश्च दुःखं व्यर्थं च त्वं संवर्धितः। प्रावृषि नवाम्भसा स्पृष्टं महानद्याः कूलं भिद्यते। तद्वद्यतो मम हृदयं न दीर्यते ततस्तत् कठोरं मन्ये। सिंहः प्रसह्य रूदर्तीं मृगीमिव यदन्तकोऽद्यैव मां न जिहीर्षति तन्नूनं मम मरणं न विद्यते। यमक्षयेऽपि ममावकाशो नास्ति। अपत्यकारणान्मया कृतानि व्रतानि दानानि संयमास्तपश्च ऊषरे उप्तं बीजमिव व्यर्थमभवत्। यदि कश्चिद्गुरुदुःखपीडितः स्वेच्छया मरणं लभेत तर्ह्यहमद्यैव वत्सेन विना धेनुरिव त्वया विना यमलोकं गच्छेयम्। इत्थं सा रामं तस्य महद् दुःखं च वीक्ष्य बद्धं सुतमवेक्ष्य किन्नरीव तदा दुःखेन कोपेन च बहु विललाप।

१८

दीनो लक्ष्मणस्तथा विलपन्तीं कौसल्यां तत्कालयोग्यं वचोऽब्रवीत्। आर्ये! स्त्रिया वाक्यवशं गतो रामो राज्यश्रियं त्यक्त्वा यद् वनं गच्छति एतन्ममापि न रोचते। विपरीतबुद्धिर्वृद्धो विषयैः प्रधर्षितश्च नृपः कैकेय्या चोद्यमानः किमिव न ब्रूयात्? रामस्यापराधं दोषं वा न पश्यामि येन स राष्ट्राद् वनवासाय निर्वास्यते। अमित्रो निरस्तोऽपि यो नरः परोक्षमपि रामे दोषमुदाहरेत् तं न पश्यामि। देवकल्पमृजुं दान्तं शत्रूणामपि वत्सलं पुत्रं धर्ममवेक्षमाणः कः अकारणात् त्यजेत्? राजवृत्तमनुस्मरन् कः पुत्रः पुनर्बाल्यं प्राप्तस्य राज्ञो वचनं मनसि कुर्यात्? राम! यावदेव कश्चिन्नर इममर्थं न जानाति तावदेव मया सह शासनं हस्तसात् कुरु। धनुर्धारिणा मया पार्श्वस्थेन रक्षितं कृतान्तमिव स्थितं त्वां कः खलु अतिशेते?

त्वामपकर्तुं यदि नगरजनः स्थास्यति तर्हि मम तीक्ष्णैः शरैरयोध्यां निर्मनुष्यां करिष्यामि। यो भरतस्य पक्ष्यस्तस्य हितैषी वा सर्वं तं हनिष्यामि। यः कोमलो नम्रश्च भवति स सर्वत्र तिरस्क्रियते। त्वया मया च महद् वैरं कृत्वा भरताय श्रियं दातुं राज्ञः का शक्तिरस्ति? देवि कौसल्ये! यथार्थतः पूर्णेन मनसा भ्रातरमनुरक्तोऽस्मि। सत्येन धनुषा दत्तेनेष्टेन च ते शपे। दीप्तमग्निमरण्यं वा यदि रामः प्रवेक्ष्यति तत्र पूर्वमेव मां प्रविष्टमवधारय। उदितः सूर्यस्तम इव ते दुःखं वीर्याद् हरामि। देवी मे वीर्यं पश्यतु। रामश्च पश्यतु। लक्ष्मणस्यैतद् वचनं श्रुत्वा दुःखमग्ना रुदती कौसल्या राममुवाच। पुत्र! तव भ्रातुर्लक्ष्मणस्य वचनं त्वया श्रुतम्। यदि रोचते अनन्तरं यत् कार्यं तत् कुरुष्व। मम सपत्न्या भाषितमधर्म्यं वचनं श्रुत्वा शोकसन्तप्तां मां विहायेतो गन्तुं नार्हसि। धर्मज्ञ राम! धर्मिष्ठो यदि धर्ममाचरितुमिच्छसि तर्हीहस्थस्त्वं मां शुश्रूषस्व। श्रेष्ठं धर्मं समाचर। काश्यपो जननीं सेवमानो नियतः स्वगृहे वसन् उत्तमं तपः कृत्वा स्वर्गं जगाम। पिता यथा गौरवेण ते पूज्यस्तथाहं च। त्वां वनं गन्तुं नाहमनुजानामि। इतस्त्वया वनं न गन्तव्यम्। त्वद्वियोगान्मे जीवितेन सुखेन वा कार्यं नास्ति। तृणं भक्षयन्त्या अपि त्वया सह जीवनं मे श्रेयः। शोकमग्नां मां त्यक्त्वा यदि त्वं वनं यास्यसि तर्हीहाहं प्रायोपवेशं करिष्ये। जीवितुं न शक्ष्यामि। ततस्त्वं समुद्रवद्* ब्रह्महत्याफलतुल्यं लोकप्रसिद्धं नरकसदृशं कष्टमवाप्स्यसि। तथा विलपन्तीं दीनां जननीं धर्मात्मा रामो धर्मसंयुक्तं वचनमुवाच। पितुर्वचनं समतिक्रमितुं मम शक्तिर्नास्ति। शिरसा प्रणतस्त्वां प्रसादये। अहं वनं गन्तुमिच्छामि। ऋषिणा व्रतचारिणा

---

* कस्मिन्नपि कल्पे समुद्रेण स्वमातुर्दुःखं कृतम्। तस्मात् पिप्पलादो नाम ब्रह्मर्षिस्तमधर्मं दण्डयितुं समुद्रोपरि कृत्यामेकां प्रयुक्तवान्। तया कृत्यया समुद्रेण नरकवासतुल्यं महद् दुःखमनुभूतम्। C

धर्मं जानता विपश्चितापि कण्डुना पितुर्वाक्यं कुर्वता गौर्हता।पूर्वमस्माकं कुले च पितुः सगरस्याज्ञया तत्पुत्रैर्भूमिं खनद्भिः संघमरणं प्राप्तम्। पितृवचनकारिणा जमदग्निपुत्रेण रामेण जननी रेणुका स्वयमरण्ये परशुना कृत्ता। मयैकेन पितृशासनं क्रियते इति न। पूर्वैरङ्गीकृतः अनुसृतश्चायं मार्गो मयानुगम्यते।भूलोके यत् पितृशासनपालनं कार्यं तदिदं मया क्रियते। शासनोल्लङ्घनं न क्रियते। पितुर्वचनं कुर्वन् न कश्चिद् हीयते नाम। जननीमेवमुक्त्वा रामो लक्ष्मणं पुनरब्रवीत्। लक्ष्मण! सत्यस्य शमस्य च रहस्यमविज्ञाय त्वया मयीदानीं प्रदर्शितमसदृशं स्नेहं जानामि। लोके धर्मः परमः। धर्मे सत्यं प्रतिष्ठितम्। उत्तममिदं पितुर्वचनं च धर्मसंश्रितमस्ति। पितुर्मातुर्ब्राह्मणस्य वा प्रतिज्ञाय धर्ममाश्रित्य तिष्ठता न तद् वाक्यं वृथा कर्तव्यम्। तस्मादहं पितुर्नियोगमतिक्रमितुं न शक्ष्यामि। पितुर्हि वचनादहं कैकेय्या प्रचोदितः। तस्मादेनां केवलक्षत्रिय–धर्माश्रितामनार्यां मतिं विसृज। धर्ममाश्रय। तीक्ष्णतां मा भज। मद्बुद्धिमनुगच्छ। एवं भ्रातरं लक्ष्मणं सौहार्दादुक्त्वा रामः प्राञ्जलिर्नतमस्तकः कौसल्यां भूय उवाच।मातः! इतो वनं गमिष्यन्तं मामनुमन्यस्व। मम प्राणैः शापितासि। स्वस्त्ययनं मे कुरु। तीर्णप्रतिज्ञो वनात् पुनरयोध्यामागमिष्यामि। केवलराज्यकारणादहं महाभ्युदयकरं यशः पृष्ठतः कर्तुं न समर्थोऽस्मि। अदीर्घकाले जीविते अद्य तुच्छां महीमधर्मतो न वृणे। इत्युक्त्वा स नरश्रेष्ठो रामो धैर्येण दण्डकान् जिगमिषुर्मातरं प्रसादयन् भ्रातुः सद्विचारमुद्बोध्य हृदि जननीं प्रदक्षिणं चकार।

१९

अथ स्थिरचित्तः स रामो धैर्येण मनोभावं धारयन् दुःखेन दीनं भृशममर्षितं नागेन्द्रमिव श्वसन्तं रोषविस्फारितेक्षणं सुहृदं प्रियं भ्रातरं लक्ष्मणमासाद्येदमुवाच। सौमित्रे! एतावन्ममाभिषेकसंभारसंपादनार्थे य

उत्साहस्त्वया कृतः सः अभिषेकनिवृत्त्यर्थमस्तु। तथा त्वया कर्तव्यं यथा मदभिषेकसंतप्तमानसा माता कैकेयी सविशङ्का न स्यात्। तस्या मनसि संजातं शङ्कामयं दुःखं मुहूर्तमप्युपेक्षितुं नोत्सहे। जानताजानता च मातृणां पितुर्वा मया कृतमल्पमप्यनिष्टं न स्मरामि। सत्यभाषणः सत्यपराक्रमः अस्मत्पिता परलोकाद् बिभेति। स नित्यं सत्यप्रतिज्ञो भूत्वा निर्भयो भवतु। अस्मिन्नभिषेककर्मण्यप्रतिसंहृते मम वचः सत्यं नेति तस्य मनस्तापो भवेत्। तस्य तापो मां च तपेत्। तस्मादभिषेकविधानं संहृत्यान्वगेवेतो वनं गन्तुमिच्छामि। अद्य मम प्रव्राजनात् कृतकृत्या कैकेयी ततोऽव्यग्रं पुत्रं भरतमभिषेचयिष्यति। यदाहं चीराजिनजटामण्डलानि धृत्वा वनं गमिष्यामि तदा कैकेय्या मनः सुखं भविष्यति। यतो वनवासाय मम बुद्धिः प्रणीता मनश्च स्थिरीकृतं ततस्तस्मिन् विषये पुनः खेत्तुं न मे युक्तम्। शीघ्रं प्रव्रजिष्यामि*। दत्तराज्यस्य पुनर्ग्रहणे मम प्रवासने च दैवमेव कारणं द्रष्टव्यम्। कैकेय्या अयं विपरीतो मनोभावो दैवविहितो भवेत्+। नो चेत् तस्या मम पीडने बुद्धिः कथं जाता? सौम्य! मातृषु मम भेदबुद्धिः पूर्वं कदापि न जाता। कैकेय्याश्च मयि स्वसुते भेदो नाभवत्। इदं सर्वं त्वं जानासि। सोऽहं कैकेय्या ममाभिषेकप्रतिरोधं प्रवासमुग्रदुर्वचोभाषणं च दैवकृतमेव निश्चिनोमि नान्यकृतम्। दैवकारणं विना कथमुत्तमस्वभावसंपन्ना उत्तमराजकुलप्रसूता कैकेयी साधारणस्त्रीवद् भर्तृसन्निधौ मत्पीडां ब्रूयात्? दैवप्रभावो दुरूहः। सर्वप्राणिषु न कोऽपि तन्निवर्तकोऽस्ति। मम राज्यभ्रंशवनगमने कैकेय्या बुद्धिवैपरीत्यं च दैवप्रभावादेवापतितानि। दैवस्य निग्रहोपायो नास्ति। यथा दैवं मनुष्यं प्रेरयति तथा तेन प्रवर्तितव्यम्। को नाम मनुष्यो दैवं निग्रहीतुमुत्सहते?

---

* अस्पष्टार्थः श्लोकः (१२) बहुधा व्याख्यातः। यथारुचि मया रचितम्। +cr यदि भावो न दैवोऽयं। ग्राह्यः – यदि तस्या न भावोऽयं।

सुखदुःखे भयक्रोधौ लाभालाभौ जन्ममरणे यच्चान्यत् किञ्चित् तत् सर्वं दैवस्य कर्म ननु। अभिषेके व्याहतेऽपि न मे परितापोऽस्ति। तस्मादहमिव त्वं चापरितापः सन् क्षिप्रमभिषेकक्रियामुपसंहर। ममास्मिन् राज्यविघ्ने यवीयसी माता न शङ्कनीया। दैवप्रेरिता एवानिष्टं सावदत्[+]। दैवप्रभावः कीदृश इति त्वं जानासि।

२०

रामभाषणं शृण्वन् लक्ष्मणः अधःशिरा भ्रातुरभिषेकविघ्नेन दुःखं तस्य धर्मपरतया हर्षं च युगपदनुबभूव। स भ्रुवोर्मध्ये भ्रुकुटीं बद्ध्वा बिलस्थो रोषितो महासर्प इव निशश्वास। तदा दुष्प्रतिवीक्षं भ्रुकुटीसहितं तस्य मुखं क्रुद्धस्य सिंहस्य मुखस्य सदृशमभवत्। गजो हस्तमिव हस्ताग्रं विधून्वन् शिरो घूर्णयन् नेत्रप्रान्तेन भ्रातरं तिर्यग् वीक्षमाणोऽब्रवीत्। पितृवाक्योल्लङ्घने अधर्म आपततीति लोकनिन्दितो भवेयमिति च भयेन अयुक्तसमये ते महान् सम्भ्रमो जातः। त्वमेवं वक्तुं नार्हसि। शूरः क्षत्रियः सन् अशक्तं दैवं कथं श्लाघसे? पापात्मनोः कैकेयीदशरथयोः कथं नाम ते शङ्का नास्ति? मृदवो धर्मरूपिणो वञ्चनोपायास्तयोः सन्ति। हे धर्मात्मन्! कथं न बुध्यसे? त्वदन्यस्याभिषेचनं यदारब्धं लोकविरुद्धं तदस्ति। तेन तव बुद्धौ संशयो जातः। यस्य प्रसंगात् त्वं मुह्यसि तं धर्ममहं द्वेष्मि। मम राज्याभिषेको मास्तु इति कैकेयीदशरथयोर्बुद्धिं त्वं दैवप्रेरणां मन्यसे। तवेदं मतमपि न मह्यं रोचते। अस्तु नाम सा दैवप्रेरणा। सापि त्वयोपेक्षणीया। विक्लबः पराक्रमहीनश्च दैवमनुवर्तते। आत्मगौरववन्तो वीरा दैवं न गणयन्ति। यः पुरुषप्रयत्नेन दैवं प्रबाधितुं समर्थः स दैवेन बाधितकार्यो न भवति न चावसीदति। दैवशक्तिरुत पुरुषशक्तिः का बलीयसीत्यद्य लोका द्रक्ष्यन्ति। अस्य प्रश्नस्याद्य स्पष्टो निर्णयो

---

[+] cr वदन्त्यनिष्टम्। ग्राह्यः– वदत्यनिष्टम्।

भविष्यति। यद्दैवाहतं तव राज्याभिषेचनं लोकैरद्य दृष्टं मत्पौरुषहतं तद्दैवं ते द्रक्ष्यन्ति। अङ्कुशमविगणय्य बन्धनमतिक्रम्य मदेन बलेन चोद्धतं पलायितं गजमिव दैवमहं पौरुषेण निवर्तये। अद्य समस्ता लोकपालाः समस्तास्त्रयो लोकाश्च रामाभिषेचनं न विहन्युः। किं पुनः पिता? राजन्। तवारण्ये निवासो यैर्मिथः समर्थितस्ते चतुर्दशसमा अरण्ये निवत्स्यन्ति। पितुः कैकेय्याश्च तामाशामहं छेत्स्यामि या तवाभिषेकविघातेन तयोः पुत्रस्य राज्याय प्रवर्तते। मम बलस्य रोद्धारं यथा ममोग्रं पौरुषं दुःखयति तथा तं दैवबलं न सुखयेत्। प्रजापालनानन्तरं वर्षसहस्रान्ते त्वयि वनवासं गते तव पुत्रा राज्यपालनं करिष्यन्ति। पुत्रेषु प्रजाः पुत्रवत् परिपालयितुं निक्षिप्य वनगमनं पूर्वराजर्षिभिराचरितम्। सैव वृत्तिरधुना विधीयते। हे धर्मात्मन्! राम! संप्रति राजा चपलचित्तोऽस्ति। राज्ये विभेदशङ्कया यदि त्वं राज्यमात्मनि नेच्छसि तर्ह्यहं वेला समुद्रमिव तव राज्यं रक्षेयम्। यद्येवं कर्तुं न शक्नुयां तदा वीरलोकभाङ् न भवेयम्। एवं ते प्रतिजाने। मङ्गलद्रव्यैरभिषिञ्चस्व। तत्र व्यापृतो भव। अहमेको बलान्महीपालान् वारयितुमलमस्मि। ममेमौ भुजौ न शोभार्थौ। धनुरलङ्कराय न। असिः कटयां बन्धनार्थाय न। शरास्तूणीरे स्तब्धवत् स्थातुं च न। मम सर्वमेतच्चतुष्टयं शत्रुदमनार्थमस्ति। यमहं शत्रुं मन्ये तं नैव सहे। तीक्ष्णधारेण विद्युच्चलितवर्चसा हस्तधृतेन खड्गेन शत्रुं देवेन्द्रमपि हन्मि। मत्खड्गाघातखण्डितैर्हस्त्यश्वनरहस्तोरुशिरोभिर्मही गहना दुश्चरा च भविता। अद्य द्विपा मत्खड्गधाराहता दीप्यमाना अद्रय इव सविद्युतो मेघा इव भूमौ पतिष्यन्ति। मयि बद्धगोधाङ्गुलित्राणे प्रगृहीतशरासने स्थिते पुरुषाणां कश्चित् पुरुषमानी को भवेत्? अहं बहुभिर्बाणैरेकं प्रहृत्य क्षेप्स्यामि। एकेन बाणेन बहून् प्रहरिष्यामि। एवं शत्रुपुरुषाश्वगजमर्मसु प्रयोक्ष्यामि। प्रभो! अद्य राज्ञः अप्रभुतां तव प्रभुत्वं च कर्तुं ममास्त्रप्रभावः

समर्थो भविष्यति। अद्य चन्दनलेपस्य केयूरधारणस्य धनानां दानस्य सुहृदां पालनस्य चानुरूपाविमौ मे बाहू तवाभिषेकविघ्नकराणां निवारणे पराक्रमं प्रकटयिष्यतः। कोऽद्यैव तव शत्रुर्मया प्राणयशोमित्रैर्वियोज्यताम्? ब्रूहि। यथेयं वसुधा तव वशे भवेत् तथा मां शाधि। अहं तव दासोऽस्मि। तच्छ्रुत्वा राघववंशवर्धनः स रामो बाष्पं विमृज्यासकृत् परिसान्त्व्य च लक्ष्मणमुवाच। सौम्य! मां पितुर्वचने व्यवस्थितं निबोध। एष एव सत्पथः।

२१

तं पितुर्निर्देशपालने अवहितं निश्चित्य बाष्पसंरुद्धकण्ठा कौसल्या धर्मिष्ठं वचनमुवाच। अदृष्टदुःखो धर्मात्मा सर्वभूतप्रियंवदो दशरथान्मयि जातो रामः कथमुञ्छेन वर्तयेत्? यस्य कर्मकरा दासाश्च मृष्टान्नानि भुञ्जते सोऽयं नाथः कथं वने मूलफलानि भोक्ष्यते? गुणवान् राज्ञो दयितो रामो यद् विवास्यते क एतत् श्रद्दध्यात् कस्य वा न भयं भवेत्? त्वया विहीनां मां महानतुलः शोकवह्निर्दवाग्निः शुष्कवनमिव प्रधक्ष्यति। धेनुर्गच्छन्तं स्वं वत्सं कथं नानुगच्छति? पुत्र! यत्र त्वं गमिष्यसि तत्र त्वामहमनुगमिष्यामि। मातुस्तद् वाक्यं श्रुत्वा भृशदुःखितां तां राम उवाच। राजा कैकेय्या वञ्चितः। अहं वनं गच्छामि। त्वमपि यदि तं त्यजसि तर्हि स न जीविष्यति। स्त्रिया भर्तुः परित्यागः क्रूरं कर्म। विगर्हितं तद् भवत्या मनसापि न कार्यम्। पिता मे यावज्जीवति तावत् तस्य शुश्रूषा त्वया कार्या।स हि सनातनो धर्मः। रामेणैवमुक्ता शुभविवेका कौसल्या सुप्रीता रामं तथेत्युवाच। पुनश्च रामो मातरमेवमाह। मया च भवत्या च पितुर्वचनं कर्तव्यम्। राजा भर्ता गुरुः श्रेष्ठः सर्वेषामीश्वरश्च। इमानि चतुर्दश वर्षाणि महारण्ये विहृत्य प्रत्यागत्य प्रीत्या तवाज्ञां पालयिष्यामि। एवमुक्ता कौसल्या परमदुःखिता पुत्रमुवाच। सपत्नीनां मध्ये वस्तुं न

शक्तास्मि। यदि पितुरिच्छया वनगमने ते बुद्धिः कृता तर्हि वन्यां मृगीमिव मामपि वनं नय। तथोक्त्वा कौसल्या रोदिति स्म। तदा रामश्च रुदित्वा पुनस्तामब्रवीत्। जीवन्त्याः स्त्रिया भर्ता दैवतं प्रभुश्च। भवत्या मम च राजा दशरथः प्रभुः। धर्मात्मा सर्वप्राणिनां प्रियंवदो भरतश्च भवतीमनुवर्तेत। स सदा धर्मे आसक्तः। मयि निष्क्रान्ते पुत्रशोकेन पार्थिवो यथा श्रमं नावाप्नुयात् तथा अप्रमत्ता कुरु। व्रतोपवासासक्ता परमोत्तमापि नारी भर्तारं यदि नानुवर्तेत तर्हि सा नरकं व्रजेत्। भर्तुः प्रिये हिते च रता शुश्रूषामेव कुर्वीत। एष धर्मः पुरा लोके दृष्टः। वेदे श्रुतः स्मृतिषु स्मृतश्च। मत्कृते सुव्रता ब्राह्मणास्ते पूज्याः। ममागमनकाङ्क्षिणी कालं प्रतीक्षस्व। मयि प्रत्यागते यदि धार्मिकाग्रणीर्महाराजो जीवितं धारयिष्यति तव सर्वाः शुभकामनाः सेत्स्यन्ति। रामेणैवमुक्ता कौसल्या बाष्पपर्याकुलेक्षणा पुत्रशोकार्ता राममुवाच। पुत्र! सावधानचित्तस्त्वं गच्छ। सदा ते भद्रमस्तु। तथा कौसल्या वनवासनिश्चितं रामं दृष्ट्वा परमेण चेतसा शुभं वचनमुवाच स्वस्त्ययनाभिकाङ्क्षिणी च बभूव।

२२

शुभमनाः कौसल्या दुःखं विहाय पवित्रं जलमाचम्य रामस्य मङ्गलानि चकार। साध्या विश्वेदेवा मरुतो महर्षयो धाता विधाता* पूषा भगः अर्यमा** च स्वस्ति ते कुर्वन्तु। ऋतवः पक्षा मासाः संवत्सराः क्षपा दिनानि मुहूर्ताश्च ते सदा स्वस्ति कुर्वन्तु। मुनिवेषं महावनानि चरन्तं त्वां स्मृतिर्धृतिर्धर्मः स्कन्दः सोमो बृहस्पतिः सप्तर्षयो नारदो नक्षत्राणि ग्रहा देवताश्च रक्षन्तु। प्लवगा वृश्चिका दंशा मशकाः सरीसृपाः कीटाश्च त्वामरण्ये न बाधेरन्। महागजाः सिंहा व्याघ्रा ऋक्षाः शृङ्गिणो रौद्रा

---

* धाता आधारकर्मप्रधानो भगवान् विराड् विष्णुः। विधाता स्रष्टा इति महेश्वरतीर्थः। ** द्वादशसंख्याकादित्यावान्तरभेदवाचकाः इति गोविन्दराजः।

महिषाश्च न ते द्रुह्यन्तु। मनुष्यमांसभोजिनः अन्ये मृगाश्चेह मया संपूजितास्त्वां मा हिंसिषुः। पुत्रक! तव मार्गाः शिवाः सन्तु। तव पराक्रमाः सिध्यन्तु। सर्वसंपदां प्राप्त्यर्थं+ क्षेमं पन्थानं गच्छ। आकाशचरेभ्यो भूचरेभ्यः प्राणिभ्यः सर्वेभ्यो देवेभ्यो ये च तव शत्रवः स्युस्तेभ्यश्च ते स्वस्ति भवतु। सर्वलोकप्रभुः शिवो ब्रह्मा प्राणिनां पोषको विष्णुस्तथा ऋषयः शेषाः सुराश्च वनवासिनं त्वां रक्षन्तु। इत्युक्त्वा कौसल्या माल्यैर्गन्धैरनुरूपाभिस्तुतिभिश्च देवगणान् पूजयामास। वृत्रसंहारसमये सर्वदेववन्दिताय शक्राय यन्मङ्गलं समभवत् तन्मङ्गलं ते भवतु। पुरामृतं प्रार्थयतो गरुडस्य यन्मङ्गलं विनताकल्पयत् तन्मङ्गलं ते भवतु। इत्याशिषमुक्त्वा सा प्रसिद्धफलां शुभां विशल्यकरणीमोषधीं रक्षां कृत्वा अभिमन्त्रयामास। ततः सा राममानम्य मूर्ध्नि चाघ्राय परिष्वज्य राम! त्वं सिद्धकार्यः सुखं गच्छ। कुशलं सिद्धार्थं पुनरागतं राजवेश्मनि सुस्थितं त्वां द्रक्ष्यामि। मयार्चिताः शिवादयो देवगणा महर्षयो भूतानि महासुरा उरगा दिशश्च वनमभिप्रयातस्य ते हितानि चिराय काङ्क्षन्तु। अश्रुपूर्णलोचना कौसल्या एवमुक्त्वा यथाविधि स्वस्त्ययनं समाप्य रामं प्रदक्षिणं चकार*। पुनः पुनश्च निपीड्य सस्वजे। देव्या कौसल्यया तथा कृतप्रदक्षिणो रामो मातुश्चरणौ पुनः पुनर्नमस्कृत्य स्वया श्रिया प्रज्वलितः सीतानिलयं जगाम।

## २३

मात्रा कृतस्वस्त्ययनो रामस्तामभिवाद्य धर्मिष्ठे वर्त्मनि स्थितो वनं प्रयातो नरैर्वृतं राजमार्गं विराजयन् उत्तमगुणयुतत्वाज्जनस्य हृदयान्याममन्थेव।

---

+Cr सर्वसंपत्तयो। ग्राह्यः – सर्वसंपत्तये।

*रक्षार्थमेव पुत्रस्य प्रदक्षिणमिति महेश्वरतीर्थः। महाभारते वारणावतगमनवेलायां विदुरः पाण्डवान् प्रदक्षिणं चकार। (महाभा–गीताप्रेस् आदि १४४.२८. सुख्तङ्करप्रतिः १३३.२४)

व्रतोपवासादिनियमविशिष्टा सीता पत्युर्यौवराज्याभिषेकभङ्गवार्तां न शुश्राव। अभिषेकः क्रियमाण इत्येव तस्या मनसि प्रवर्तते स्म। राज-धर्माणामभिज्ञा कार्यज्ञा सा देवकार्यं कृत्वा हृष्टचित्ता रामं प्रतीक्षते स्म। तदा रामो ह्रिया किञ्चिदवाङ्मुखः सुविभूषितं प्रहृष्टजनसंपूर्णं स्वं वेश्म प्रविवेश। आसनात् समुत्पत्य सीता शोकसंतप्तं चिन्ताव्याकुलितं पतिं वेपमाना ददर्श। तं विवर्णवदनं प्रस्विन्नममर्षणं दृष्ट्वा दुःखाभिसंतप्ता सा प्राह। प्रभो! इदानीं किमिदम्? राघव! अद्य बृहस्पतिदेवतासंबन्धी मङ्गलमयः पुष्यः। प्राज्ञैर्ब्राह्मणैरयमभिषेकाय युक्तः काल इत्युच्यते खलु। केन त्वं दुर्मना असि। सुन्दरं ते वदनं शतशलाकेन जलफेननिभेन छत्रेणावृतं न विराजते। शतपत्रनिभेक्षणं तवाननं चन्द्रहंसप्रकाशाभ्यां श्रेष्ठाभ्यां व्यजनाभ्यां न वीज्यते। वाग्मिनः स्तोत्रपाठकाः पूर्वकथापाठकाः सूताश्च प्रहृष्टास्त्वां स्तुवन्तोऽद्य न दृश्यन्ते। वेदपारगा ब्राह्मणा मूर्धाभिषिक्तस्य ते मूर्ध्नि मधु दधि च यथाविधि न दधति। भूषिताः सर्वे मन्त्रिणो वणिङ्मुख्याः पौरा जानपदाश्च त्वामनुव्रजितुं नेच्छन्ति। वेगसम्पन्नैः काञ्चनभूषणैश्चतुर्भिर्हयैर्युक्तो मुख्यस्तवोत्सवरथस्तेऽग्रतः किं न गच्छति? लक्षणपूजितः कृष्णमेघस्य पर्वतस्य च समप्रभः श्रीमान् हस्ती तव प्रयाणे अग्रतो न दृश्यते। काञ्चनचित्रं ते सिंहासनं पुरस्कृत्य यान्तं सेवकं पुरस्सरं न पश्यामि। अभिषेको यदा सज्जस्तदेदानीं किं तव मुखवर्णः अपूर्वोऽस्ति प्रहर्षश्च न लक्ष्यते? इति विलपन्तीं तां रामः प्रोवाच। सीते! पूज्यः पिता मां वनं प्रव्राजयति। त्वं महति कुले जाता धर्मज्ञा धर्मचारिणी च। येन क्रमेणेदं ममाभ्यागतं तत् शृणु। सत्यप्रतिज्ञेन प्रीतमनसा पित्रा कैंकेय्यै पुरा महावरौ दत्तौ। ममाद्य राज्ञा प्रस्तुते अभिषेके सज्जे तया सा प्रतिज्ञा प्रचोदिता धर्मेण स्वाधीनीकृता च। दण्डकावने मया चतुर्दशवर्षाणि वस्तव्यम्। मम पित्रा यौवराज्ये भरतो नियोजितः।

सोऽहं विजनं वनं प्रस्थितस्त्वां द्रष्टुमागतः। भरतस्य समीपे त्वयाहं कदापि न श्लाघ्यः। ऐश्वर्ययुक्ताः पुरुषाः परस्तवं न सहन्ते। तस्माद् भरतस्याग्रतो मम गुणास्त्वया न कथ्याः। अपि च त्वं तेनाधिकसम्मानेन भर्तव्या नासि। अनुकूलप्रवर्तनेनैव तस्य समीपे वर्तितुं ते शक्यमस्ति। अहं च गुरोस्तां प्रतिज्ञामनुपालयन् अद्यैव वनं यास्यामि। त्वं स्थिरचित्ता भव। कल्याणि! मुनिनिषेवितं वनं याते मयि त्वया व्रतोपवासरतया भवितव्यम्। उषःकाले उत्थाय यथाविधि देवपूजां कृत्वा मम पिता वन्दितव्यः। संतापकर्शिता वृद्धा मम माता च धर्मं प्रधानीकृत्य ते सम्मानमर्हति। शेषा मम मातरश्च त्वया नित्यं वन्दितव्याः। स्नेह–प्रेमपोषणैः सर्वा मातरो मे समाः। ममात्यन्तप्रियतरौ लक्ष्मणशत्रुघ्नौ त्वया भ्रातृसमौ पुत्रसमौ च द्रष्टव्यौ। कदापि भरतस्य विप्रियं न कर्तव्यम्। स देशस्य कुलस्य च राजा प्रभुश्च खलु। सदाचारेणाराधिताः प्रयत्नैरुपसेविताश्च राजानः प्रसीदन्ति। विपर्यये प्रकुप्यन्ति। नराधिपा अहितकारिण औरसान् पुत्रानपि त्यजन्ति। अन्यजनानपि समर्थान् प्रगृह्णन्ति। प्रिये! अहं महावनं गमिष्यामि। इहैव त्वया कस्यचिदपकारमकुर्वत्या वस्तव्यम्। ममेदं वचः कार्यम्।

२४

प्रियवादिनी प्रियार्हा वैदेही एवमुक्ता प्रणयकोपेन भर्तारमिदमुवाच। आर्यपुत्र! पिता माता भ्राता पुत्रः स्नुषा च स्वानि स्वानि पूर्वपुण्यान्यनुसृत्य स्वानि स्वानि भाग्यानि प्राप्नुवन्ति। भर्तुर्भाग्यं तु भार्यैकैव प्राप्नोति। अतोऽहमपि वने वस्तव्यमित्यादिष्टैवास्मि। न पिता न माता नात्मजो नात्मा न सखीजनो नार्या गतिर्भवति। इह प्रेत्य च सदा पतिरेको गतिरस्ति। राम! यदि त्वं दुर्गं वनमद्यैव प्रस्थितः कुशकण्टकान् मृद्नन्ती तवाग्रतो गमिष्यामि। तव वचनाननुरोधजन्यौ ईर्ष्यारोषौ पीतशेषं

जलमिवोत्सृज्य विश्वस्तो मां वनं नय। मम कृतः कोऽप्यपराधो नास्ति। प्रासादाग्रेषूत्तमभवनेषु अणिमादिसिध्दिद्वारा गगने वा संचारस्यापेक्षया भर्तुः पादच्छाया विशिष्यते। बहून् विषयानुद्दिश्य मात्रा पित्रा चानुशिष्टास्मि। कथं प्रवर्तितव्यमिति सम्प्रति नाहं वक्तव्या। त्रीन् लोकानचिन्तयन्ती पतिशुश्रुषाव्रतं चिन्तयन्ती पितुर्भवने यथैव तथा वने निवत्स्यामि। नित्यं ते शुश्रूषमाणा नियता ब्रह्मचारिणी मधुगन्धिषु वनेषु त्वया सह रंस्ये। त्वं वनेऽन्यस्य जनस्य सम्परिपालनमपि कर्तुं शक्तोऽसि। किं पुनर्मम? नित्यं फलमूलाशना भविष्यामि। अत्र संशयो नास्ति। त्वया सह निवसन्ती न ते दुःखं करिष्यामि। त्वया नाथेन सह सर्वत्र निर्भीता चरन्ती सरितः शैलान् पल्वलानि वनानि च द्रष्टुमिच्छामि। त्वया संगता सुखिनी हंसकारण्डवाकीर्णाः सुपुष्पिताः पद्मिनीः द्रष्टुमिच्छामि। एवं वर्षसहस्राणां शतं वाहं त्वया सह परमनन्दिनी रंस्ये। त्वया विना स्वर्गेऽपि वासमहं न रोचये। मृगवानरवारणयुतं सुदुर्गमं वनमहं गमिष्यामि। यथा पितुर्गृहे तथा तत्र ते पादावुपगृह्य निवत्स्यामि। अनन्यभावामनुरक्तचेतसं त्वां विना मरणाय निश्चितां मां साधु नयस्व। मम याचनां कुरुष्व। अहं ते भारो न भविष्यामि। तथा ब्रुवाणां सीतां रामो नेतुं नेयेष। तां सन्निवर्तयितुं वनवासस्य कष्टानि बहु बभाषे।

२५

धर्मज्ञो राम एवं ब्रुवतीं सीतां निवर्तयितुमेवमुवाच। सीते! महाकुलीना सदा धर्मे निरता चासि। इह स्थित्वा स्वधर्मं समाचर। केवलं मनोविनोदं मा चिन्तय। त्वां यथा वक्ष्यामि तथा कार्यम्। वने बहवो दोषा भवन्ति। अहं वदामि निबोध। वनवासकृता मतिर्विमुच्यताम्। बहुदोषं दुर्गमं च वनमुच्यते। हितबुद्ध्या मयैतदभिधीयते। वने सदा दुःखमेव सुखं न विद्यते। पर्वतप्रवाहाणां गिरिकन्दरवासिनां सिंहानां च निनदाः श्रोतुं

दुःखकराः। अतो वनं दुःखकरम्। यावद्दिनं परिश्रम्य रात्रिषु स्वय पतितानां पर्णानां शय्यासु स्वप्तव्यम्। तस्माद् वनमतीव दुःखकरम्। यथाशक्ति उपवासः कर्तव्यः। वल्कलाम्बरं जटाभारश्च धर्तव्यौ। अरण्ये महावातस्तिमिरं च भवतः। नित्यं बुभुक्षा भवति। महान्ति भयानि प्रवर्तन्ते। तस्माद् वनमत्यन्तदुःखं भवति। बहवो बहुरूपाः सर्पाः पृथिवीं दर्पात् संचरन्ति। तस्माद् वनं महादुःखकरं भवति। नदीनिवासिनो नदीकुटिलगामिनः सर्पा मार्गं निरुध्य तिष्ठन्ति। तस्माद् वनं महादुःखमस्ति। पतङ्गा वृश्चिकाः कीटा वनमक्षिका मशकाश्च नित्यं बाधन्ते। तस्मात् सर्वं वनं दुःखकरम्। कण्टकिनः कुशकाशा व्याकुलशाखाग्रा द्रुमाश्च वने भवन्ति। तस्माद् वनं महादुःखकरमस्ति। तदलं तव वनगमनोत्साहेन। वनं ते क्षमं नास्ति। विमृश्य वनं बहुमहादोषयुतं पश्यामि। रामेण यदा वनं नेतुं मतिर्न कृता तदा सीता च तस्य वचनं नाङ्गीचकार। सुदुःखिता पुनरिदमुवाच।

## २६

रामस्यैतद् वचनं श्रुत्वा दुःखिता प्रसक्ताश्रुमुखी सीता मन्दमिदमब्रवीत्। वने निवासं प्रति ये दोषास्त्वया कीर्तितास्तान् तव प्रेम्णा गुणानेव विद्धि। राम! गुरुजनाज्ञया त्वया सह मया च वनं गन्तव्यम्। त्वद्वियोगेन ममेह जीवितं त्यक्तव्यम्। त्वत्समीपस्थां मां सुरेश्वरः शक्रोऽपि ओजसा प्रधर्षयितुं न शक्ष्यति। पतिहीना स्त्री जीवितुं न शक्ष्यति। त्वयैवेदं ममोपदिष्टम्। अथ च मे वनेऽवश्यं वस्तव्यं किलेति पुरा पितुर्गृहे ब्राह्मणानां वचो मया श्रुतम्। सामुद्रिकलक्षणवेत्तृभ्यो ब्राह्मणेभ्यो गृहे वचनमिदं श्रुत्वा नित्यमेव वनवासकृतोत्साहास्मि। मया वनवासस्यादेशः प्राप्तव्यः किल। साहं त्वया सह वनं यास्यामि। एतत्कार्यमन्यथा न भवति। स काल इदानीमागतः। द्विजः सत्यवाग् भवतु। वनवासे

बहुविधानि दुःखानि भवन्तीति जानामि। परन्तु तानि धैर्यहीनानामेव भवन्ति। पितुर्गेहे कन्यया मया मातुरग्रतः साधुवृत्ताया भिक्षिण्या* उक्तं श्रुतं यन्ममेदानीं वनवासो भविष्यति। प्रागपि त्वया सह वने वस्तुं त्वं मया बहुथा प्रार्थितः। राम! वनगमनं प्रति प्रतीक्षणपरास्मि। वनवासिनस्ते शूरस्य परिचर्या मह्यं रोचते। हे शुद्धात्मन्! प्रेमभावाद् भर्तारमनुगच्छन्ती विकल्मषा भविष्यामि। भर्ता हि मम दैवतम्। मरणानन्तरं च त्वया सह मे कल्याणः सङ्गमो भविष्यति। ब्राह्मणानामियं पुण्या श्रुतिः श्रूयते। या स्त्री इह लोके पितृभिर्यस्य स्वधर्मेणाद्भिर्दत्ता मरणानन्तरं च सा तस्य भविष्यति। केन हेतुना त्वं मां सुवृत्तां पतिव्रतां स्वकां नारीमस्मात् स्थानान्नेतुं नेच्छसि? भक्तां पतिव्रतां त्वया सह समानसुखदुःखां मां वनं नेतुमर्हसि। एवं दुःखितां मां यदि वनं नेतुं नेच्छसि विषेणाग्निना जलेन वा मरिष्ये। एवं सीता वनगमनं प्रति बहुविधं रामं ययाचे। रामस्तां विजनं वनं नेतुं नानुमेने। रामेणैवमुक्ता सीता दुःखाक्रान्ता उष्णैरश्रुभिर्भूमिं स्ना-पयन्ती रुरोद। दुःखितां क्रुद्धां च तां वनगमनप्रयत्नान्निवारयितुं रामो बह्वसान्त्वयत्।

२७

वनवासाय नागन्तव्यमिति रामेण सान्त्व्यमाना मैथिली भर्तारमिदमुवाच। भृशं दुःखिता सा प्रणयात् कोपाच्च राममधिचिक्षेप। राम! पुरुषाकारं स्त्रियं त्वां मे पिता न जाने किं मत्वा जामातरं कृतवान्। मां विहाय तव वनगमनात् पश्चाद्यदि कश्चिद् रामे तेजो नास्तीति वदति तत् तपतः सूर्यस्य तेजो नास्तीति उक्तप्रायमनृतमपि श्रोतुं दुस्सहमेव भविष्यति। किमर्थोऽयं ते विषादः कुतो वा भयं यदनन्यपरायणां मां परित्यक्तुकामोऽसि।द्युमत्सेनसुतानुव्रतां सावित्रीमिव त्वामनुसरन्तीं मां

* व्रीह्यादित्वादिनिः इति गोविन्दराजः।

विद्धि। अहमन्यकुलपांसनीसदृशी नास्मि। त्वदृते मनसाप्यन्यं न द्रष्टास्मि। यौवनवतीं चिरं तव सहचरीं पतिव्रतां भार्यां मां शैलूष इवान्येभ्यो दातुमिच्छसि। तस्मात् त्वं मामनादाय वनं प्रस्थातुं नार्हसि। तपः अरण्यं स्वर्गो वा त्वया सह मे स्यात्। तव पृष्ठतो गच्छन्त्या मे तत्र पथि उद्यानशयनेष्विव+ कोऽपि परिश्रमो न भविता। त्वया सह मार्गे कुशकाशशरेषीकाः कण्टकिनो द्रुमाश्च तूलाजिनसमस्पर्शा मे भवेयुः। हे प्रिय! महावातसमुद्धूतं यद् रजो मामाच्छादयिष्यति तदुत्तमं चन्दनं मन्ये। वने शाद्वलेषु यदासिष्ये कुथास्तरणतल्पेषु ततः सुखतरं किम्? पत्रं मूलं फलमल्पं बहु वा यत् त्वं स्वयमाहृत्य दास्यसि तदमृतरसोपमं मे स्यात्। तत्रार्तवानि पुष्पाणि फलानि चोपभुञ्जाना मातुः पितुर्वेश्मनो वा न स्मरिष्यामि। तस्मात् तत्र किमपि कष्टं भविष्यतीति मा चिन्तय। मत्कृते तव शोको मास्तु। न ते दुर्भरा भविष्यामि। यत्र त्वया सहाहं भवामि स मे स्वर्गस्त्वया विना नरक इति जानन् मया सह परां प्रीतिं प्राप्नुहि। प्रत्युत यदि मामेवं निश्चितां वनं न नेष्यसि तर्हि अद्यैव विषं पास्यामि। शत्रुवशं मा गमम्। त्वयोज्झिताया मम पश्चादपि दुःखेन मरणं भविष्यति। तस्मात् परित्यागसमय एव मरणं वरम्। क्षणमपीमं शोकं सोढुं नोत्सहे। चतुर्दशवर्षाणि पुनः कथं सहिष्ये? इति करुणं विलप्य शोकसन्तप्ता आयस्ता सा पतिमालिङ्ग्य सस्वरं चुक्रोश। विषदिग्धैर्बाणैर्गजाङ्गनेव रामस्य बहुभिर्वाक्यैर्विद्धा सा अरणिरग्निमिव चिरसंनियतं बाष्पं मुमोच। तस्या नेत्राभ्यां संतापसंभवं स्फटिकसंकाशं वारि पङ्कजाभ्यामुदकमिव परिसुस्राव। तदा दुःखितां विसंज्ञामिव स्थितां तां बाहुभ्यां परिष्वज्य रामः विश्वासयन्नाह। देवि! त्वयि दुःखितायां नाहं

---

+cr विहारशयनेष्वपि। ग्राह्यः–विहारशयनेष्विव। पाठोऽयं cr अधः सूचिकायां न विद्यते। परन्तु B, C, D ग्रन्थेषु वर्तते।

स्वर्गमपीच्छामि। स्वयंभुव इव सर्वतो मे भयं नास्ति। रक्षणे शक्तिमानपि तवाभिप्रायं सर्वमविज्ञायारण्यं त्वां नेतुं नेच्छामि। सीते! मया सार्धं वनवासाय त्वं सृष्टासि। स्थिरचित्तेन कीर्तिरिव तस्मान्मया त्वं विहातुमशक्यासि। पितृवाक्यपालनरूपो धर्मः पुरा सद्भिराचरितः। संज्ञा सूर्यमिव तं धर्ममहमद्यानुसरामि। पितुर्मातुश्च वश्यता एष धर्मः। अतः पितुराज्ञां व्यतिक्रम्याहं जीवितुं नोत्सहे। तस्मात् पिता यथा मां शास्ति तथा वर्तितुमिच्छामि। स हि सनातनो धर्मः। मामनुगम्य त्वं सहधर्मचरी भव। ब्राह्मणेभ्यो रत्नानि आशंसमानेभ्यो भिक्षुकेभ्यो भोजनं च देहि। त्वरस्व। चिरं मा कुरु। ततः सा देवी आत्मनो वनगमनं भर्तुरनुकूलं ज्ञात्वा प्रमुदिता क्षिप्रं दातुमुपचक्रमे। यशस्विनी सुमनाश्च सीता भर्तुर्भाषितं निशम्य प्रहृष्टा परिपूर्णमानसा च भूत्वा धार्मिकाणां धनानि रत्नानि च दातुं प्रचक्रमे।

२८

ततो महातेजा रामः सम्मुखे स्थितं प्राग्गामिनं वीरं कृताञ्जलिं वनमनुगन्तुं याचमानं लक्ष्मणमुवाच। सौमित्रे! अद्य त्वयि मया सह वनं गच्छति कौसल्यां सुमित्रां च को भरिष्यति? यो महीपतिः पृथिवीं पर्जन्य इव कामैरभिवर्षति स कैकेयीप्रेमपाशबद्धोऽस्ति। सा कैकेयीदं राज्यं प्राप्य दुःखितानां सपत्नीनां कष्टं करिष्यति। एवमुक्तो वाक्यज्ञो लक्ष्मणः श्लक्ष्णया गिरा रामं प्रत्युवाच। वीर! तव प्रभावेणैव प्रयतो भरतः कौसल्यां सुमित्रां च पूजयिष्यति। तत्र संशयो नास्ति। ग्रामाणां सहस्रं कौसल्याया उपजीवनं प्राप्तमस्ति। आर्या सा सहस्रमपि मद्विधान् बिभृयात्। सशरं धनुरादाय खनित्रपिटकाधरः पन्थानमनुदर्शयन् तेऽग्रतो गमिष्यामि। मूलानि फलानि तपस्विनामुत्तमखाद्यानि वनभवान्यन्यानि च नित्यं ते आहरिष्यामि। भवान् सीतया सह गिरिसानुषु रंस्यते। जाग्रतः

स्वपतश्च ते सर्वमहं करिष्ये। अनेन वाक्येन सुप्रीतो रामस्तं प्रत्युवाच। लक्ष्मण! गच्छ। सर्वं सुहृज्जनमापृच्छस्व। महात्मा वरुणः स्वयं राज्ञो जनकस्य महायज्ञे दिव्ये भयंकरदर्शने ये धनुषी दिव्ये अभेद्यकवचे अक्षयसायकौ तूणीरौ हेमपरिष्कृतौ आदित्यविमलौ उभौ खड्गौ च ददौ एतत् सर्वं सत्कृत्याचार्यसद्मनि निहितम्। सर्वं तदायुधमादाय क्षिप्रमाव्रज। इत्थं वनवासाय निश्चितो लक्ष्मणः सुहृज्जनमामन्त्र्य गुरुं वसिष्ठमुपगम्योत्तममायुधं जग्राह। सत्कृतं माल्यभूषितं सर्वं तदायुधं रामाय दर्शयामास। आगतं लक्ष्मणं रामः प्रेम्णा सौम्य! काङ्क्षिते काले त्वमागत इत्युवाच। मामकं धनं त्वया सह तपस्विभ्यो ब्राह्मणेभ्यश्च प्रदातुमिच्छामि। इह गुरुषु दृढं भक्ता ब्राह्मणोत्तमा वसन्ति। तेषां भूयः सर्वेषां ममोपजीविनां च प्रदातुमिच्छामि। वसिष्ठपुत्रं द्विजप्रवरमार्यं सुयज्ञं क्षिप्रमानय। सर्वानन्यांश्च विप्रानभ्यर्च्य वनमभिप्रयास्यामि।

२९

ततो भ्रातुः शुभं प्रियं च शासनं विज्ञाय लक्ष्मण आशु गत्वा सुयज्ञस्य निवेशनं प्रविवेश। अग्निगृहस्थं तं विप्रं वन्दित्वा लक्ष्मण उवाच। सखे! दुष्करकारिणो गृहमागम्य पश्य। ततः सुयज्ञः (मध्याह्न) सन्ध्योपासनं समाप्य सौमित्रिणा सह क्षिप्रं गत्वा श्रिया संपन्नं रम्यं रामनिवेशनं प्राविशत्। आगतं वेदविदं तं सुयज्ञं होमानन्तरमग्निमिव प्राञ्जलिः सीतया सह रामः प्रदक्षिणं चकार। सुवर्णमयैः श्रेष्ठैरङ्गदैः शुभैः कुण्डलैः सहेमसूत्रैर्मणिभिः केयूरैर्वलयैरन्यैर्बहुभिः रत्नैश्च रामः सुयज्ञं पूजयामास। पश्चात् सीताप्रचोदितो राम उवाच। सौम्य! सखे! हारं हेमसूत्रं रशनां च सीता ते दातुमिच्छति। भार्यायै गृहाण। श्रेष्ठास्तरणं नानारत्नविभूषितं पर्यङ्कं च तुभ्यं दातुमिच्छति। मम मातुलेन दत्तं शत्रुंजयं नाम गजं सहस्रमन्यान् गजांश्च ते ददामि। रामेणेत्युक्तः सुयज्ञस्तत् प्रतिगृह्य

सीतारामलक्ष्मणानां शिवा आशिषः प्रयुयोज। ततो ब्रह्मा त्रिदशेश्वरमिव रामो लक्ष्मणमुवाच। ब्राह्मणोत्तमौ अगस्त्यं कौशिकं* चाहूय सस्यमम्बुभिरिव रत्नैरर्चय। तैत्तिरीयाणामाचार्यः अभिरूपो वेदविद् यः श्रद्धावान् कौसल्यामाशीर्भिः सेवते स द्विजो यावत् तुष्यति तावद् यानं दासीः पट्टवस्त्राणि च सम्प्रदापय। आर्यश्चित्ररथः सूतः सचिवश्चिरोषितश्च। महार्हैः रत्नैर्वस्त्रैर्धनैश्चैनं तोषय। धान्यवहनार्थं सहस्रं बलीवर्दान् क्षेत्रकर्षणार्थं द्वे शते वृषभान् क्षीरघृतदध्यर्थं गोसहस्रं च दापय। ततः पुरुषश्रेष्ठो लक्ष्मणः कुबेरवत् तद् धनं यथोक्तं स्वयं ब्राह्मणेभ्यो ददौ। अथ रामो बाष्पकलान् तत्र तिष्ठत उपजीविन एकैकस्याधिकं द्रव्यमुपजीवनं दत्वा लक्ष्मणस्य गृहं मम गृहं च ममागमनपर्यन्तमशून्यं कार्यमित्यब्रवीत्। दुःखितमुपजीविनं सर्वं तं जनमेवमुक्त्वा धनमानीयतामिति धनाध्यक्षमुवाच। ततो भृत्या रामस्य सर्वं धनमाजह्रुः। तत्र सुमहान् स राशिर्दर्शनीयः अदृश्यत। ततः सहलक्ष्मणो रामस्तद् धनं ब्राह्मणेभ्यो बालेभ्यो वृद्धेभ्यो दीनेभ्यश्चादापयत्। तत्र पिङ्गलवर्णो गर्गवंशभवस्त्रिजटो नाम द्विज आसीत्। आगतं तं पञ्चमकक्ष्यापर्यन्तं न कश्चिदवारयत्। स त्रिजटो राममासाद्य हे राजपुत्र! अहं दरिद्रो बहुपुत्रो नित्यं वने उञ्छवृत्तिरस्मि। मां प्रत्यवेक्षस्वेत्युवाच। तं रामः परिहाससमन्वितमुवाच। मया तुभ्यं गवामेकसहस्रमपि न विश्राणितम्। यावद् दण्डं परिक्षिपसि तावद् व्याप्तं गोसमूहमवाप्स्यसि इति। सम्भ्रान्तः स त्वरितः शाटीं कट्यां परिवेष्ट्य दण्डं भ्रामयित्वा वेगितः सर्वप्राणेन चिक्षेप। ततो रामस्तं गार्ग्यमभिसान्त्वयन् मन्युर्न कर्तव्यः। परिहासोऽयं ममेत्युवाच*। ततः सभार्यो महामुनिस्त्रिजटो गवामनीकं प्रतिगृह्य मोदितो महात्मनो रामस्य यशोबलप्रीतिसुखवर्धनीराशिषः प्रत्यवदत्।

---

* इमौ सुप्रसिद्धाभ्यामगस्त्यविश्वामित्राभ्यामन्यौ भवेताम्।

* दुर्बलस्त्रिजटो दण्डं दूरं क्षेप्तुं न शशाक। तस्मिन्नधिकां गोसंख्यां न प्राप्तवति रामस्तस्मै गोसमूहं ददावित्यूह्यम्। अत्र वाल्मीकेः रचना नष्टा प्रतिभाति।

३0

सीतारामलक्ष्मणा ब्राह्मणेभ्यो बहु धनं दत्वा दशरथं द्रष्टुं जग्मुः। रामलक्ष्मणौ सीतया पुष्पमालाभिरलङ्कृतानि स्वायुधानि जगृहतुः। प्रकाशमानानि तानि दुष्प्रेक्षाणि आसन्। ततः प्रासादान् हर्म्याणि सप्तभूमिकाहर्म्याग्राणि चाधिरुह्य धनी जनो निर्विण्णस्तान् ददर्श। बहुजनाकुला रथ्या गन्तुं न शक्यन्ते स्म। तस्माद् दुःखिता जनाः प्रासादानारुह्य रामं ददृशुः। तदा पदातिं वर्जितच्छत्रं रामं दृष्ट्वा जनाः शोकोपहतचेतसो बहुविधा वाच ऊचुः। यं यान्तं महच्चतुरङ्गबलमनुयाति स्म तमेकं रामं सीतया सार्धं लक्ष्मणोऽनुयाति। एष राम ऐश्वर्यभोगाननुभूतवान्। कामिनां कामदश्चास्ति। तथापि धर्मगौरवात् पितरमनृतवादिनं कर्तुं नेच्छति। या पुरा आकाशगैः प्राणिभिरपि द्रष्टुमशक्या तां सीतामद्य राजमार्गगता जनाः पश्यन्ति। अङ्गरागोचितां रक्तचन्दनसेविनीं सीतां वर्षं तापः शीतं चाशु विवर्णतां नेष्यन्ति। अद्य नूनं दशरथः पिशाचाविष्टो भाषते। राजा प्रियं पुत्रं विवासयितुं नार्हति। निर्गुणस्यापि पुत्रस्य कथं विप्रवासनं स्यात्? यस्य केवलं वृत्तेनायं लोको जितस्तं प्रति किं पुनर्वक्तव्यम्? आनृशंस्यं दया श्रुतं शीलं दमः शमश्चैते षड् गुणाः पुरुषोत्तमं रामं शोभयन्ति। तस्मात् तस्योपघातेन ग्रीष्मे सलिलसंक्षयादौदकानि सत्त्वानीव प्रजाः परमपीडिताः सन्ति। जगत्पतेरस्य रामस्य पीडया सर्वं जगत् मूलोपघातेन पुष्पफलवान् वृक्ष इव पीडितमस्ति। तस्माद् वयं पत्नीबन्धुरहिता लक्ष्मण इव क्षिप्रं गच्छन्तं राममनुगच्छामः। उद्यानानि क्षेत्राणि गृहाणि च परित्यज्य समदुःखसुखा धार्मिकं राममनुगच्छाम। समुद्धृतनिधानानि परिध्वस्ताजिराणि अपात्तधनधान्यानि हृतसाराणि रजसा प्रकीर्णानि दैवतैः परित्यक्तानि वेश्मानि कैकेयी प्रतिपद्यताम्। यद् वनं राघवो गच्छति तन्नगरमस्तु। अस्माभिः परित्यक्तं पुरं वनं संपद्यताम्। सर्वे सर्पा बिलानि मृगपक्षिणः

सानूनि च वने स्वसेव्यमानं स्थानमस्मदाक्रान्तं त्यजन्तु। अस्मत्त्यक्तामयोध्यां प्रपद्यन्ताम्। इत्येवं नानाजनसमीरिता विविधा वाचो रामः शुश्राव। तथापि तस्य मनो न विचक्रे। आर्तं जनं पश्यन्नपि अनार्तो रामः प्रहसन्निव पितुर्निदेशं विधिवच्चिकीर्षुः पितरं दिदृक्षुर्जगाम। तत्र परमार्तं सुमन्त्रं वीक्ष्य स्वागमनं पितुः सूचयितुं तस्थौ। ममागमनं नृपाय निवेदयेत्युवाच।

३१

सन्तापकलुषेन्द्रियः स सूतो रामप्रेषितः क्षिप्रं प्रविश्य निःश्वसन्तं नृपतिं ददर्श। राममेवानुशोचन्तं परमाकुलचेतसं दशरथमालोक्य सूतः प्राञ्जलिरासऱ्सादसाद। पुरुषश्रेष्ठ! ब्राह्मणेभ्य उपजीविभ्यश्च सर्वं धनं दत्वा ते सुतो द्वारि तिष्ठति। भद्रं ते। अमोघपराक्रमः स रामस्त्वां पश्यतु! स सर्वान् सुहृद आपृच्छ्य त्वामिदानीं द्रष्टुमागतः। स महारण्यं गमिष्यति। सर्वैं राजगुणैर्वृतं तं रश्मिभिः संयुतमादित्यमिव पश्य। सत्यवादी धर्मात्मा गाम्भीर्ये सागरोपम आकाश इव निष्पङ्को राजा दशरथस्तं प्रत्युवाच। सुमन्त्र! ये केचिदिह सन्ति तान् मे दारानिहानय। सर्वैर्दारैः परिवृतो रामं द्रष्टुमिच्छामि। सुमन्त्रः अन्तःपुरं प्रविश्य स्त्रिय उवाच। आर्यो राजा वो ह्वयति। तत्र गम्यताम्। भर्तुः शासनं विज्ञाय सर्वास्ताः स्त्रियस्तद् भवनं प्रचक्रमुः। धृतव्रतास्ताम्रलोचनाः सार्धत्रिशतानि प्रमदाः कौसल्यां परिवार्य शनैर्जग्मुः। भार्यास्वागतासु राजा दशरथः सुमन्त्र! मम सुतमानयेति सूतमवदत्। सुमन्त्रो रामं लक्ष्मणं सीतां चादाय तूर्णं राज्ञः सकाशं जगाम। स्त्रीजनसंवृतः स राजा कृताञ्जलिं पुत्रमायान्तं दूराद् दृष्ट्वा आर्तस्तूर्णमासनादुत्पत्याभिदुद्राव। तमसंप्राप्य दुःखार्तो मूर्छितो भुवि पपात। दुःखेन विसंज्ञं नृपं रामलक्ष्मणौ क्षिप्रमभ्यपतताम्। सहसा राजवेश्मनि भूषणध्वनिमिश्रितो हा हा रामेति स्त्रीसहस्रनिनादः प्रादुर्बभूव। सीतारामलक्ष्मणास्तं बाहुभ्यां परिष्वज्य रुदन्तः पर्यङ्के समवेशयन्। अथ

रामः प्राञ्जलिर्भूत्वा क्षणकाले लब्धसंज्ञं शोकसमुद्रनिर्मग्नं महीपतिमुवाच। महाराज! त्वामापृच्छे। सर्वेषां नः प्रभुरसि। दण्डकारण्यं प्रस्थितं मां शुभेन पश्य। लक्ष्मणस्य च वनगमनायानुज्ञां देहि। सीता च मां वनमन्वेति। तथ्यैर्बहुभिः कारणैर्वार्यमाणावपि अयोध्यायां स्थातुं नेच्छतः। शोकमुत्सृज्य लक्ष्मणं मां सीतां च प्रजापतिः प्रजा इवानुजानीहि। वनवासायानुज्ञां प्रतीक्षमाणमव्यग्रं रामं संप्रेक्ष्य राजोवाच। राम! अहं कैकेय्या वरदानेन मोहितोऽस्मि। अद्य मां निगृह्य कारायां पातयित्वा स्वयमेवायोध्यायां राजा भव। नृपतिनैवमुक्तो धर्मभृतां वरो वाक्यकोविदो रामः अञ्जलिं कृत्वा पितरं प्रत्युवाच। नृपते! भवान् वर्षसहस्राय पृथिव्याः पतिः। अहं तु अरण्ये वत्स्यामि। मदर्थे त्वयानृतं न कार्यम्। चतुर्दशवर्षाणि वनवासे विहृत्य प्रतिज्ञान्ते पुनस्ते पादौ ग्रहीष्यामि। सत्यपाशेन संयतो राजा कैकेय्या मिथश्चोद्यमान आर्तो रुदन् तं प्रियं पुत्रमब्रवीत्[+]। तात! मङ्गलकरमव्यग्रमकुतोभयं पन्थानं श्रेयसे वृद्धये पुनरागमनाय च गच्छ। पुत्र! अद्येदानीमेव सर्वथा मा गच्छ। मातरं मां च संपश्यन्निमां शर्वरीं वस। सर्वकामैस्तर्पितः श्वः प्रातः साधयिष्यसि। रामस्तथार्तस्य पितुर्भाषितं श्रुत्वा भ्रात्रा लक्ष्मणेन सह दीनो वचनमुवाच। अद्यैव प्रयातस्य मे न जाने के लाभा वने सेत्स्यन्ति। श्वः प्रयातस्य मे कस्तान् प्रदास्यति?* अतः सर्वकामानामपेक्षया अद्यापक्रमणमेवाहं वृणे। मया विसृष्टा सराष्ट्रा सजना धनधान्यसमाकुला वसुधा भरताय

---

+ द्वौ श्लोकौ ग्राह्यौ। नव पञ्च च वर्षाणि वनवासे विहृत्य ते। पुनः पादौ ग्रहीष्यामि प्रतिज्ञान्ते नराधिप। रुदन्नार्तः प्रियं पुत्रं सत्यपाशेन संयतः। कैकेय्या चोद्यमानस्तु मिथो राजा तमब्रवीत्।।

* प्राप्स्यामि यानद्य गुणान् को मे श्वस्तान् प्रदास्यति इति पाद। स इत्थं च व्याख्यातः। अद्य स्थित्वा यान् भोगान् प्राप्स्यामि श्वो वने कस्तान् दास्यति इति। परन्तु पितुस्तिरस्कारः अवहेलना च व्यज्यते तदर्थे। अतः सोऽर्थस्त्याज्यः।

प्रदीयताम्। तव दुःखमपगच्छतु। बाष्पपरिप्लुतो मा भूः। न हि दुर्धर्षः समुद्रः क्षुभ्यति। अहं राज्यं नैवेच्छामि न मैथिलीं न च जीवितम्। पुरुषश्रेष्ठ! त्वामहं सत्यभाषिणमेवेच्छामि। पुरं राष्ट्रं संपूर्णा पृथिवी च मया विसृष्टा भरताय दीयताम्। अहं भवतो निदेशमनुपालयन् वनं चिराय सेवितुं गमिष्यामि। मया विसृष्टामिमां महीं भरतः अनुशास्तु। यत् त्वयोक्तं तत् तथास्तु। मम मनो यथा तव निदेशे धीयते न तथा महत्सु कामेषु आत्मनः प्रिये वा। मत्कृते तव दुःखं व्यपैतु। मत्सुखार्थं त्वामनृतेन न योजयामि। फलानि मूलानि च भक्षयन् गिरीन् सरितः सरांसि च पश्यन् विचित्रपादपं वनं प्रविश्य सुखी भविष्यामि। तव निर्वृतिरस्तु।

३२

ततोऽत्र प्रतिज्ञया पीडितो दशरथः सबाष्पं भृशं निःश्वस्य सुमन्त्रं पुनः-पुनरिदं जगाद। सुमन्त्र! राघवस्यानुयात्रार्थं रत्नसुसंपूर्णा चतुर्विधबला चमूः क्षिप्रमादिश्यताम्। गीतवादित्रकुशला+ गणिका महाधना वणिजश्च सुप्रसारिताः कुमारस्य वाहिनीं शोभयन्तु। ये च राममुपजीवन्ति यैश्च वीर्यतो रामो रमते तेषां बहुविधं धनं दत्वा तानप्यस्यां सेनायां नियोजय। मृगान् कुञ्जरांश्च निघ्नन् आरण्यकं मधु पिबन् विविधा नदीः पश्यन् रामो राज्यं न संस्मरिष्यति। यो धान्यकोशो यो धनकोशश्च मम स्तः निर्जने वने वसन्तं राममनुगच्छेताम्। पुण्येषु देशेषु यजन् पर्याप्ता दक्षिणा विसृजंश्च ऋषिभिः सम्मिल्य रामो वने सुखं वत्स्यति। भरतः अयोध्यां पालयिष्यति। रामस्तु सर्वभोग्यपदार्थैः सह वनं प्रेष्यताम्। दशरथ एवं ब्रुवति कैकेय्या भयमागतम्। मुखमशुष्यत्। स्वरो निरुद्धः। विषण्णा संत्रस्ता च कैकेयी उवाच। हे साधो! गतजनं शून्यं निरास्वाद्यतमं राज्यं पीतसारां सुरामिव भरतो नाभिपत्स्यते। मुक्तलज्जायां कैकेय्यामतिदारुणं

---

+ cr शालिन्यः। ग्राह्यः- वादिन्यः।

वदन्त्यां दशरथ उवाच। अहिते! धुरि नियुज्य वहन्तं मां किं तुदसि? तेन वाक्येन द्विगुणं क्रुद्धा कैकेयी राजानमाह। तवैव वंशे सगरो ज्येष्ठमसमञ्जनामकं पुत्रं राष्ट्रागमनात् प्रत्यषेधयत्। तथायं रामश्च गन्तुमर्हति। एवमुक्तो दशरथो धिगित्याह। सर्वो जनो व्रीडितो बभूव। कैकेयी तु तन्नावाबुध्यत। तदा तत्र स्थितः सिद्धार्थो नाम वृद्धः शुचिः राज्ञो बहुमतो महामात्रः कैकेयीमिदमुवाच। दुर्मतिरसमञ्जः पथि क्रीडतो दारकान् गृहीत्वा सरय्वा अप्सु प्रक्षिपन् तेन कर्मणा रमते स्म। तस्य तद् घोरकर्म दृष्ट्वा सर्वे नागराः क्रुद्धा हे राष्ट्रवर्धन! असमञ्जमेकं वा अस्मान् वा वृणीष्वेति राजानमब्रुवन्। किंनिमित्तमिदं भयमिति राजा तानपृच्छत्। प्रकृतय ऊचुः। भ्रान्तबुद्धिरेषः असमञ्जः क्रीडतो नः पुत्रान् बालान् मौर्ख्यात् सरय्वां प्रक्षिपन्नतुलां प्रीतिमश्नुते। स राजा प्रकृतीनां वचनं श्रुत्वा तासां प्रियचिकीर्षया तमहितं पुत्र तत्याज। सुधार्मिको राजा सगर इत्थं पुत्रमत्यजत्। रामः किं पापमकरोद् येनैवं राज्यान्निरुध्यते? सिद्धार्थस्य वचः श्रुत्वा अत्यन्तश्रान्तस्वनो राजा शोकोपहतया वाचा कैकेयीमुवाच। राज्यं सुखं धनं च परित्यज्याहमद्य राममनुव्रजिष्यामि। त्वं राज्ञा भरतेन सह चिराय राज्यं सुखं भुङक्ष्व।

३३

महामात्रस्य वचः श्रुत्वा रामो दशरथं सविनयमुवाच। राजन्! त्यक्तभोगस्य सर्वतः त्यक्तसंगस्य वने वन्येनाहारेण जीवतो ममानुसरता परिवारेण किं कार्यम्? यो द्विपश्रेष्ठं दत्वा कक्ष्यायां मनः कुरुते कुञ्जरोत्तमं त्यजतस्तस्य बन्धनरज्जुस्नेहेन किं प्रयोजनम्? हे सज्जनश्रेष्ठ! तथा मम सेनया किं प्रयोजनम्? सर्वाण्यहं विसृजामि। चीराणि मे आनीयन्ताम्। खनित्रं पिटकं च ममानयत। वनवासे ममैते उपकरिष्यतः। ततः कैकेयी जनौघे निरपत्रपा स्वयं चीराण्याहृत्य परिधत्स्वेति

राममुवाच। रामः कैकेय्याश्चीरद्वयं प्रतिगृह्य सूक्ष्मवस्त्रमवक्षिप्य मुनिवस्त्राण्यधरत्। लक्ष्मणश्च पितुरग्रतः शुभे वसने विहाय तापसवस्त्रे जग्राह। अथ कौशेयवासिनी सीता आत्मपरिधानार्थं चीरं समीक्ष्य वागुरां दृष्ट्वा पृषतीव संतत्रास। दुःखिता सा लज्जमानेव चीरं प्रतिगृह्य कथं वनवासिनो मुनयश्चीरं बध्नन्तीति भर्तारमपृच्छत्। एकं कण्ठे कृत्वा अन्यत्पाणिनादाय धारणे अकुशला सीता व्रीडिता तस्थौ। तदा रामः क्षिप्रमागम्य सीतायाः कौशेयस्योपरि स्वयं चीरं बबन्ध। नाथवत्यां तस्यामनाथवच्चीरं वसानायां सर्वो जनो धिग् दशरथमिति प्रचुक्रोश। दशरथ उष्णं निःश्वस्य सीता कुशचीरेण गन्तुं नार्हतीति कैकेयीमवदत्। पापे! एतद्रामविवासनं ते पर्याप्तम्। भूयः कृतैर्नीचैरेभिः पातकैस्ते किम्? एवं ब्रुवन्तमवाक्शिरसमासीनं पितरं राम इदमब्रवीत्। धार्मिक! इयं मम माता कौसल्या वृद्धा उदारा कदापि त्वां न गर्हते। मया विहीनां शोकसागरं प्रपन्नामदृष्टपूर्वव्यसनां भूयः संमन्तुमर्हसि। मयि मातुरधिकः प्रेमास्ति। मयि वनं गते यथा सा न सीदेत् तथा त्वया कार्या।

३४

भार्याभिः सह राजा रामस्य वचः श्रुत्वा मुनिवेषधरं तं समीक्ष्य च विगतचेतनो दुःखेन न तं प्रत्यवैक्षत प्रत्यवेक्ष्य च न प्रत्यभाषत। राममेवानुचिन्तयन् स विललाप। मन्ये मया पूर्वं बहवो नष्टपुत्राः* कृताः। अथवा प्राणिनो हिंसिताः। तस्मादिदं कष्टं ममोपस्थितम्। अनागते काले देहाज्जीवितं नैव च्यवते। अत एव कैकेय्या क्लिश्यमानस्य मम मृत्युर्न भवति। सूक्ष्मवसनं विहाय मुनिवस्त्रधरं पावकसंकाशं पुरतः स्थितमात्मजं पश्यतोऽपि मे मृत्युर्न भवति। इमां निकृतिं संश्रित्य स्वार्थे प्रयतमानाया एकस्याः कैकेय्याः कृते सर्वोऽयं जनः क्लिश्यते। एवमुक्त्वा

---

* बहवो धेनवो विवत्साः कृता इत्यपि व्याख्येयम्।

स बाष्पावृतेक्षणो रामेति सकृदेवोक्त्वा पश्चात् किमपि वक्तुं न शशाक। क्षणान्तरे संज्ञां प्रतिलभ्य सुमन्त्रमाह। राजयोग्यं रथं हयोत्तमैर्युक्त्वा त्वमानय। राममितो जनपदात्परं वनं प्रापय। हा धिक्! साधुर्वीरः पित्रा मात्रा च वनं निर्वास्यते। गुणवतां गुणानां फलमेवं भवतीति मन्ये। राज्ञो वचनात् शीघ्रगामी सुमन्त्रः अलङ्कृतं रथमश्वैर्योजयित्वागम्य कृताञ्जलिः राजपुत्रायाचचक्षे। राजा देशकालज्ञं निश्चितबुद्धिं सर्वतः शुचिं कोशाध्यक्षं सत्वरमाहूयाभाषत+। वैदेह्या महार्हाणि वासांसि वराणि भूषणानि चैतेषां चतुर्दशवत्सराणां पर्याप्तानि संख्याय क्षिप्रमानय। राजवचनात् स कोशगृहं गत्वा तत् सर्वं क्षिप्रमादाय सीतायै प्रायच्छत्। वनं प्रस्थिता सौन्दर्यवती सीता सुन्दरानवयवान् तैर्विचित्रैराभरणैर्भूषयामास। सुविभूषिता वैदेही तद् वेश्म प्रातःकाले उदयमानस्य सूर्यस्य प्रभा खमिव व्यराजयत। कृपणमनाचरन्तीं तां मैथिलीं भुजाभ्यां परिष्वज्य मूर्ध्न्युपाघ्राय कौसल्योवाच। समस्तेऽस्मिन् लोके प्रियैः सततं सत्कृता दुष्टाः स्त्रियः प्राप्तापदं भर्तारं नानुसरन्ति। प्रव्राजितो मम पुत्रस्त्वया नावमन्तव्यः। निर्धनः सधनो वा एष तव दैवतमस्तु। तस्या धर्मार्थयुतं वचनं विज्ञाय कृताञ्जलिः सीता श्वश्रूमुवाच। आर्या यन्मामनुशास्ति तत् सर्वमेवाहं करिष्ये। ज्ञातं श्रुतं च मे यथा भर्तरि प्रवर्तितव्यम्। आर्या मामसज्जनेन तुलयितुं नार्हति। चन्द्रात् प्रभेवाहं धर्माद् विचलितुं नालम्। अतन्त्री वीणा न वाद्यते। अचक्रो रथो न चलति। अपतिर्नारी शतपुत्रापि न सुखिनी भवति। पिता परिमितं सुखं ददाति। माता परिमितं सुखं ददाति। सुतश्च परिमितमेव सुखं ददाति। भर्तैवापरिमितं सुखं ददाति। तं का न पूजयेत्? आर्ये! विशेषसामान्यधर्मा मया श्रुताः। इत्थं पातिव्रत्यमहत्त्वमहं जानामि। साहं

---

+ cr उवाच देशकालज्ञो निश्चितं सर्वतः शुचि। cr अधःसूचिका सर्वतः शुचिः। B, D ग्रन्थयोः प्रामाण्येन ग्राह्यः- उवाच देशकालज्ञं निश्चितं सर्वतः शुचिम्।।

किं भर्तारमवमन्येय? स्त्रीणां भर्ता हि दैवतम्। सीताया हृदयंगमं वचनं श्रुत्वा शुद्धमतिः कौसल्या सहसा दुःखजं हर्षजं चाश्रु मुमोच। तदा मातृमध्ये अतिसत्कृतां मातरं प्राञ्जलिरुपक्रम्य* राम आह। अम्ब! त्वं दुःखिता मा भूः। मम पितरमवेक्षस्व। वनवासस्य क्षयः क्षिप्रमेव भविष्यति। सुप्तोत्थिताया इव ते चतुर्दशवर्षाणि गमिष्यन्ति। पूर्णप्रतिज्ञं सुहृद्वृतमिह प्राप्तं मां द्रक्ष्यसि। एतावन्निश्चितार्थं वचनं मातरमुक्त्वा रामः पञ्चाशदधिकत्रिशतं मातॄरार्ता दृष्ट्वा कृताञ्जलिर्निजगाद। संवासादज्ञानाद् वा यत्किञ्चिन्मया परुषमुक्तं कृतं वा स्यात् तन्मे क्षमध्वम्। सर्वा व आमन्त्रयामि। इत्थं राघवे वदति राजभार्याणां सन्नादः क्रौञ्चीनां निस्वन इव जज्ञे। यद् दशरथवेश्म पुरा मेघध्वनितुल्येन मुरजपणवघोषेण प्रतिशब्दितमभवत् तदिदानीं विलापपरिदेवनाकुलमभवत्।

३५

अथ रामः सीता लक्ष्मणश्च कृताञ्जलयो दशरथस्य पादस्पर्शं कृत्वा दीनाः प्रदक्षिणं चक्रुः। तस्यानुमतिं प्राप्य शोकसंमूढो रामः सीतया सह जननीं नमश्चकार। अन्वक्षं लक्ष्मणः कौसल्यामभ्यवादयत्। पश्चान्मातुः सुमित्रायाश्चरणौ जग्राह। वन्दमानं पुत्रं लक्ष्मणं मूर्ध्न्युपाघ्राय रुदती हितकामा सुमित्रोवाच। पुत्र! सुहृज्जने स्वनुरक्तस्त्वं वनवासाय सृष्टः। वने रामं सम्यगवेक्षस्व। कदापि मा प्रमादं कार्षीः। कष्टस्थो वा समृद्धो वा एष तव गतिः। सत्पुरुषाणां लोके एष धर्मो यत् कनीयान् ज्येष्ठाधीनो भवति। दानं यज्ञदीक्षा रणे तनुत्यागश्च कुलस्यास्योचितं सनातनं वृत्तं हि। रामं दशरथं विद्धि। जनकात्मजां मां विद्धि। अटवीमयोध्यां विद्धि। तात! यथासुखं गच्छ। ततो विनीतः सुमन्त्रो मातलिर्वासवमिव राममब्रवीत्। राजपुत्र! तव भद्रमस्तु। रथमारोह। यत्र मां वक्ष्यसि तत्र

---

* प्रदक्षिणीकृत्येति गोविन्दराजादयः।

त्वां क्षिप्रं प्रापयिष्यामि। चतुर्दशवर्षाणि त्वया वने वस्तव्यानि। यानि देव्या कैकेय्या चोदितोऽसि तान्युपक्रमितव्यानि। तदात्मनः अलंकारं कृत्वा हृष्टेन चेतसा सीता सूर्यसदृशं तं रथमारुरोह। सुमन्त्रो भ्रातृभ्यामायुधजातानि कवचानि पिटकं खनित्रं च रथमध्ये प्रतिन्यस्य सीतारामलक्ष्मणानारूढान् दृष्ट्वाश्वान् धृष्टमचोदयत्। चिरकालाय राघवेऽरण्यं प्रयाते जनाश्चतुरङ्गसैन्यं च शोकाकुलं बभूव। तस्मिन् पुरे मत्तद्विपाः संकुपिता बभूवुः। हेषमाणा हयाः संभ्रान्ता व्याकुला महाशब्देन दुधुवुः। सबालवृद्धा सा पुरी परमपीडिता सलिलं घर्मार्त इव राममनुसृत्य दुद्राव। पार्श्वतः पृष्ठतश्चैव समूहीभूय जना रामलग्नेक्षणा बाष्पपूर्णमुखा भृशनिस्वनास्तमूचुः। सूत! वाजिनां रश्मीन् संयच्छ। शनैः शनैर्याहि। रामस्य मुखं पश्येम। इतः परं दुर्दर्शं भविष्यति। राममातुर्हृदयं नूनमयोनिर्मितं यतो देवपुत्रतुल्ये रामे वनं याति न भिद्यते। धर्मे रता छायेवानुगता वैदेही अर्कप्रभा मेरुमिव* पतिं न जहाति। सा हि कृतकृत्या। लक्ष्मण! त्वं प्रियवादिनं देवसंकाशं भ्रातरं सततं परिचरिष्यसि। अहो सिद्धार्थोऽसि। त्वं भ्रातरं ज्येष्ठमनुगच्छसि। एषा ते महती सिद्धिः महानभ्युदयः स्वर्गस्य मार्गश्च। एवं वदन्तस्ते आगतं बाष्पं सोढुं न शेकुः। दुःखितो राजा दीनाभिः स्त्रीभिर्वृतः प्रियं पुत्रं द्रक्ष्यामीति ब्रुवन् गृहान्निर्जगाम। महति कुञ्जरे बद्धे करेणूनां नाद इवाग्रतो रुदतीनां स्त्रीणां महास्वनः शुश्रुवे। श्रीमान् पिता दशरथस्तदा ग्रहणकाले राहुग्रहेणाक्रान्तः पूर्णचन्द्र इव क्षीणो बभूव। तदा भृशदुःखितं सीदन्तं राजानं प्रेक्ष्य रामस्य पृष्ठतो नराणां हाहाकारध्वनिः प्रादुरभवत्। केचिज्जना हा रामेति अपरे हा राममातरिति चावदन्। सर्वमन्तःपुरं क्रोशन्तं दशरथमनु पर्यदेवयत्। रथेन गच्छन् परिवृत्य रामो विषण्णं भ्रान्तचेतसं पितरं तथावस्थां मातरं

---

* सूर्यस्य प्रादक्षिण्येन मेरुगमनमिति सर्वथा तस्य मेरुसबन्धोऽस्त्येवेति गोविन्दराजः।

चानुगतौ ददर्श। धर्मपाशेन संयतः प्रकाशं नावैक्षत। यानार्हौ पदातिनौ सुखोचितावदुःखार्हौ दृष्ट्वा शीघ्रं याहीति सारथिं संचोदयामास। पुरुषश्रेष्ठो रामस्तोत्रार्दितो द्विप इव पितुर्मातुश्च दुःखदं तद् दर्शनं सोढुं शक्तो न बभूव। स रुदतीं रथमनुधावन्तीं राम रामेति हा सीते लक्ष्मणेति च क्रोशन्तीं नृत्यन्तीमिव मातरमसकृत् प्रैक्षत। राजा तिष्ठेति चुक्रोश। याहि याहीति रामःश्चुक्रोश। सुमन्त्रस्यात्मा चक्रयोरन्तरा पतित इव बभूव। उपालब्धोऽपि नाश्रौषमिति राजानं वक्ष्यसि। दुःखस्य चिरकालदर्शनं सोढुमशक्यम्। अतो याहीति रामः सारथिमब्रवीत्। रामस्य वचः कुर्वन् तं जनमनुज्ञाप्य सुमन्त्रो व्रजतोऽपि हयान् शीघ्रं चोदयामास। तदा रामं प्रदक्षिणं कृत्वा नृपजनो न्यवर्तत। मनसा अश्रुवेगैश्च न न्यवर्तत। यं पुनरायान्तमिच्छेत् तमेनं दूरं नानुव्रजेदित्यमात्या राजानमूचुः। प्रस्विन्नगात्रः प्रविषण्णरूपः सभार्यो राजा तेषां सर्वगुणोपपन्नं वचो निशम्य तं सुतमीक्षमाणस्तस्थौ।

३६

कृताञ्जलौ रामे निष्क्रामति अन्तःपुरे स्त्रीणामार्तशब्दो जातः। अनाथस्य दुर्बलस्य दीनस्यास्य जनस्य यो गतिः शरणं चासीत् स नाथः क्व नु गच्छति? निन्दितोऽपि न क्रुध्यति। क्रोधनीयानि वर्जयति। क्रुद्धान् प्रसादयति। सर्वेषां दुःखभागी भवति। स रामः क्व गच्छति? मातरि कौसल्यायां यथा वर्तते तथास्मासु यो वर्तते स महात्मा क्व नु गच्छति? कैकेय्या क्लिश्यमानेन राज्ञा वनं संचोदितः अस्य जनस्य जगतश्च परित्राता क्व नु गच्छति? अहो बुद्धिहीनो राजा। जीवलोकस्य प्रियं धर्म्यं सत्यव्रतं रामं वनवासं प्रेषयति। इति सर्वा राजभार्या विवत्सा धेनव इव रुरुदुः। सस्वरं विचुक्रुशुः। पुत्रशोकसन्तप्तो महीपतिरन्तःपुरे घोरं तमार्तशब्दं श्रुत्वा सुदुःखित आसीत्। अग्निहोत्राणि नाहूयन्त। सूर्यः

अन्तरधीयत। गजाः कबलान् व्यसृजन्। गावो वत्सान् नापाययन्। त्रिशङ्कुः कुजो बृहस्पतिर्बुधश्च सर्वे दारुणा ग्रहाः सोममभ्येत्य व्यवस्थिताः। नक्षत्राणि ग्रहाश्च तेजोहीना बभूवुः। कोसलदेशनक्षत्रं विशाखाः सधूमा नभसि प्रचकाशिरे। सर्वो नागरो जनः अकस्माद् दैन्यमुपागमत्। आहारे वा विहारे वा न कश्चिन्मनश्चकार। राजमार्गगतः सर्वो जनः शोकपरायणो बभूव। पवनः शीतो न ववौ। शशी सौम्यदर्शनो न बभूव। सूर्यो लोकं न ततापा। सर्वं जगत् पर्याकुलं बभूव। पुत्रा मातॄणां भर्तारः पत्नीनां भ्रातरः परस्परं च निरपेक्षा भूत्वा सर्वे सर्वं परित्यज्य राममेवान्वचिन्तयन्। रामस्य सुहृदो मूढचेतसः शोकभाराक्रान्ताः शयनं न जहुः। तदा पुरन्दररहिता सपर्वता महीव महात्मना रामेण रहितायोध्या भयशोकपीडिता घोरं चचाल। योधा गजा अश्वाश्च रुरुदुः।

३७

यावद् राजा अत्यन्तधार्मिकं प्रियं पुत्रं पश्यति स्म तावत् स्थितस्य तस्य शरीरं धरण्यां वर्धमानमिवाभवत्। निर्यतो रामस्य रथाश्वोत्थितस्य रजसो रूपं यावददृश्यत तावद् दशरथः प्रेक्षमाणस्तस्थौ*। यदा दशरथो रजोऽपि नापश्यत् तदार्तो धरणीतले पपात। तदा तमुत्थापयितुं कौसल्या दक्षिणपार्श्वं प्राप। भरतप्रिया कैकेयी वामपार्श्वं प्राप। नयेन धर्मेण विनयेन च संपन्नो राजा कैकेयीं समीक्ष्य व्यथितेन्द्रिय उवाच। कैकेयि! दुष्टचारिणी त्वं ममाङ्गानि मा स्प्राक्षीः। त्वां द्रष्टुं न हीच्छामि। त्वं मम भार्या नासि न च बान्धवी। ये त्वामुपजीवन्ति तेषां मम च न कोऽपि संबन्धोऽस्ति। केवलार्थासक्तां त्यक्तधर्माणं त्वामहं त्यजामि। यदहं त्वत्पाणिं गृहीत्वा अग्निपरिक्रमणमकरवं तत्सर्वं त्वया सहेहलोके जीवनव्यवहारं परलोकार्थमग्निहोत्रादिकर्म च परित्यजामि। अव्ययमिदं

---

* १, २ श्लोकयोः क्रमो मया व्यत्यस्तीकृतः।

राज्यं प्राप्य यदि भरतः संतुष्टः स्यात् स पित्रर्थं मे यद् दद्यात् तद् दत्तं मां मा गमत्। तदा रेणुदूषितं तमुत्थाप्य शोककर्शिता देवी कौसल्या न्यवर्तत। धर्मात्मा राजा तापसवेषधरं पुत्रं संचिन्त्य स्वेच्छया ब्राह्मणं हत्वेव पाणिनाग्निं स्पृष्ट्वेवान्वतप्यत। रथवर्त्मसु पुनःपुनर्निवृत्य पश्यतः सीदतो राज्ञो रूपं राहुग्रस्तस्य सूर्यस्येव तेजोहीनमभवत्। प्रियं पुत्रमनुस्मरन् दुःखार्तः स विललाप। तं नगरसीमां प्राप्तं बुद्ध्वा तदाब्रवीत्। ममात्मजं वहतां हयानां पदानि पथि दृश्यन्ते। महात्मा स न दृश्यते। स नूनमद्य क्वचिद् वृक्षमूलमुपाश्रित्य काष्ठं वा शिलां वा उपधाय शयिष्यते। विनिश्वसन् पांसुगुण्ठितः कृपणः स रामः प्रस्रवणात् करेणुप्रभुरिव मेदिन्या उत्थास्यति। महाबाहुं लोकनाथमनाथवदुत्थाय गच्छन्तं रामं वनेचराः पुरुषा नूनं द्रक्ष्यन्ति। कैकेयि! सकामा भव। विधवा भूत्वा राज्यमधितिष्ठ। पुरुषश्रेष्ठं रामं विना नाहं जीवितुमुत्सहे। इत्येवं विलपन् राजा जनौघेन परिवृतः अपस्नातः अमङ्गलकरं गृहमिव स्वं पुरं प्रविवेश। शून्यचत्वरगृहां संवृतापणदेवालयां क्लान्तदुर्बलदुःखार्तजनां विरलजनमहापथां सर्वां तां पुरीमवेक्ष्य राममेवानुचिन्तयन् विलपन् राजा सूर्यः अम्बुदमिव गृहं प्रविवेश। रामेण वैदेह्या लक्ष्मणेन च रहितं तद् गृहं गरुडेन हतोरगो महान् ह्रद इवासीत्। राममातुः कौसल्याया गृहं शीघ्रं मां नयन्तु इति तेनोक्ता द्वारदर्शिनो राजानं तत्रानयन्। ततः कौसल्याया निवेशनं प्रविष्टस्य शयितस्यापि दशरथस्य मनश्चुक्षुभे। पुत्रद्वयेन स्नुषया च विवर्जितं भवनं नष्टचन्द्रमम्बरमिवापश्यत्+। शून्यं तद् वेश्म दृष्ट्वा महाराजः भुजमुद्यम्य हा राघव मां जहासीति उच्चैःस्वरेण चुक्रोश। बत! ये नरश्रेष्ठास्तं कालं जीविष्यन्ति ते सुखिता रामं परिष्वज्य

---

+ श्लोको ग्राह्यः। पुत्रद्वयविहीनं च स्नुषया च विवर्जितम्। अपश्यद् भवनं राजा नष्टचन्द्रमिवाम्बरम्।।

द्रक्ष्यन्ति। कौसल्ये! त्वां साधु न पश्यामि। राममनुगता मे दृष्टिरद्यापि न निवर्तते। मां पाणिना स्पृश। एवं राममेवानुचिन्तयन्तं तं नरेन्द्रं समीक्ष्य कौसल्या शयने उपोपविश्य भृशं दुःखिता विनिःश्वसन्ती कृच्छ्रं विललाप।

३८

ततः पुत्रशोकार्ता कौसल्या दुःखितं राजानमुवाच। रामे विषमुप्त्वा निर्मुक्ता पन्नगीव कैकेयी विचरिष्यति। रामं विवास्य भाग्यवती कैकेयी लब्धकामा वेश्मनि दुष्टाहिरिव मां भूयः समुद्युक्ता त्रासयिष्यति। (राज्यविभ्रंशादविरम्य मम पुत्रस्यारण्यवासश्च किमर्थं कृतः?) यदि रामः कैकेय्या दासः कृतो वरं स्यात्। तदा स नगरे भैक्षं चरन् गृहे वसेत्। यथा केनचिदाहिताग्निना पर्वणि देवान् वञ्चयित्वा तेषां देयो भागो रक्षसां प्रदीयेत तथा कैकेयीद्वारा रामं स्थानात् पातयित्वा निन्दितं कर्म त्वया कृतम्। गजराजगतिर्वीरो महाबाहुर्धनुर्धरो रामः सभार्यः सहलक्ष्मणो नूनमेतावद् वनं प्रविष्ट एव स्यात्। अदृष्टारण्यदुःखानां कैकेय्या मतिमनुगच्छता त्वया वनवासाय त्यक्तानां तेषामरण्ये का नु अवस्था भविष्यति? उत्तमवस्तुहीनाः फलकाले त्वया विवासितास्तरुणास्ते कृपणाः फलमूलकृताशनाः कथं वत्स्यन्ति? सभार्यं सभ्रातरमिह पश्यन्त्या मम शोकक्षयकरः शिवः स कालः पुनः कदापि भविष्यति किम्? सीतालक्ष्मणसमेतो राम आगत इति वार्तां श्रुत्वैव यशस्विनी अयोध्या हृष्टजना सूच्छ्रितध्वजमालिनी कदा भविष्यति? नरव्याघ्रौ रामलक्ष्मणौ पुनरायातौ प्रेक्ष्य पर्वणि समुद्र इव पुरी कदा नन्दिष्यति? वृषभो गोवधूमिव वीरो रामः सीतां रथे पुरस्कृत्य पुरीमयोध्यां कदा प्रवेक्ष्यति? पुरं प्रविशन्तौ मम पुत्रौ कदा जना लाजैरवकिरिष्यन्ति?+

---

+ cr अवकरिष्यन्ति। ग्राह्यः– अवकिरिष्यन्ति।

कदा तेषां प्रत्यागमने हृष्टा ब्राह्मणकन्याः पुष्पाणि फलानि च समर्पयन्त्यः पुरीं प्रदक्षिणं करिष्यन्ति? अमरप्रभो धर्मज्ञो बुद्ध्या वयसा च परिणतो रामस्त्रिवर्ष इव ललन् कदा मामभ्युपैष्यति? नीचया मया निस्संशयं पुरा वत्सेषु पातुकामेषु मातॄणां स्तनाः शातिताः। अहमेवं मन्ये। साहं वत्सला गौरिव कैकेय्या सिंहेन बलाद् विवत्सा कृतास्मि। एकपुत्राहं तावद्गुणैर्जुष्टं सर्वशास्त्रविशारदं पुत्रं विना न जीवितुमुत्सहे। आजानुबाहुं महाबलं प्रियं पुत्रमपश्यन्त्या ममेह जीवितुं न किञ्चित् सामर्थ्यमस्ति। निदाघे उद्धतप्रभो भगवान् सूर्यो रश्मिभिरिमां महीं यथा तपति तथा तनूजशोकप्रभवो हुताशनो मां प्रज्वलयति।

३९

विलपन्तीं कौसल्यां धर्मे स्थिता सुमित्रा धर्म्यमिदमब्रवीत्। आर्ये! सर्वसद्गुणैर्युक्तस्तव पुत्रो रामः पुरुषोत्तमः। किमित्थं विलपसि रोदिषि च? तव पुत्रो महात्मानं पितरं साधु सत्यवादिनं कुर्वन् वनं गतः। राज्यं त्यक्त्वा शिष्टैराचरिते प्रेत्य च फलदायिनि धर्मे स्थितः। तस्मात् श्रेष्ठः स रामः कदाचन न शोच्यः। अनघः सर्वभूतेषु दयावान् लक्ष्मणो रामे सदोत्तमां वृत्तिं प्रवर्तते। लक्ष्मणसेवितो रामो लाभवान् भविष्यति। सुखोचिता सीता अरण्यवासे दुःखं जानती तवात्मजं धर्मात्मानमनुगच्छति। दर्मं सत्यव्रतं च पालयन् तव पुत्रः कीर्तिपताकां लोके भ्रामयति। स किं श्रेयो न प्राप्तवान्? रामस्य परिशुद्धिं श्रेष्ठं माहात्म्यं च विज्ञाय सूर्यस्तस्य गात्रमंशुभिर्न सन्तापयिष्यति। इदं तथ्यम्। शिवः काननेभ्यो विनिःसृतो युक्तशीतोष्णः सुखोऽनिलो राघवं सर्वकालेषु सेविष्यते। रात्रौ शयानं शीतैः रश्मिभिः संस्पृशन् पितेव परिष्वजमानश्चन्द्रमा रामं ह्लादयिष्यति। दानवेन्द्रं शम्बरासुरसुतं सुबाहुं रामेण हतं दृष्ट्वा ब्रह्मा तस्मै दिव्यान्यस्त्राणि ददौ। पृथिव्या वैदेह्या श्रिया च तिसृभिरेताभिः सह क्षिप्रं रामोऽभिषेक्ष्यते।

निष्क्रामन्तं रामं वीक्ष्य सम्प्रति त्वं दुःखाश्रूणि विसृजसि। तत्पुनरागमने क्षिप्रमानन्दजमश्रु मोक्ष्यसि। ससुहृदमभिवादयमानं सुतं दृष्ट्वा क्षिप्रं वार्षिकी मेघलेखेव मुदा बाष्पं मोक्ष्यसि। तव पुत्रः क्षिप्रमयोध्यां पुनरागतो मृदुपीनाभ्यां कराभ्यां ते चरणौ पीडयिष्यति। सुमित्रायास्तद् वाक्यं श्रुत्वा शरत्काले अल्पोदकमेघवत् कौसल्यायाः शोको विननाश।

४०

रामे अनुरक्ता जना वनवासाय प्रयान्तं तमनुजग्मुः। सुहृदो राजा च बलान्निवर्तिताः। तथापि रामस्य रथमनुगतास्ते नैव न्यवर्तन्त यतो गुणसंपन्नो रामः अयोध्यानिलयानां पुरुषाणां पूर्णचन्द्र इव प्रियो बभूव। स रामस्तदा स्वाभिः प्रकृतिभिर्याच्यमानोऽपि पितरं सत्यं कुर्वाणो वनमेवान्वपद्यत। चक्षुषा प्रपिबन्निव ताः प्रजाः स्वाः प्रजा इव सस्ने-हमवेक्षमाण उवाच। अयोध्यानिवासिनां युष्माकं यौ प्रेमबहुमानौ मयि स्तः मत्प्रियार्थं विशेषेण भरते तौ निवेशयत। कल्याणचारित्रः कैकेयीपुत्रो भरतो यथोचितं वः प्रियाणि हितानि च करिष्यति। स ज्ञानेन वृद्धो वयसा बालः। वीर्यसद्गुणसंपन्नः सन् मृदुः। स वः अनुरूपो भयापहो भर्ता भविष्यति। राजगुणैर्युक्तो भरतो युवराजो नियुक्तः। मया भ्रातृबन्धुमित्रामात्यैर्युष्माभिश्च राजशासनं कार्यम्। मयि वनवासं गते यथा महाराजो न संतपेत् मम प्रियचिकीर्षया भवद्भिस्तथा कार्यः। इति ब्रुवन् रामो यथा यथा धर्ममेवास्थितो बभूव तथा तथा प्रकृतयस्तमेव पतिमकामयन्त। लक्ष्मणसहितो रामो बाष्पेण पिहितं दीनं पुरनिवासिनं जनं गुणैर्बद्ध्वेव चकर्ष। ज्ञानेन वयसा तेजसा त्रिविधं वृद्धास्ते द्विजा वयःप्रकम्पिशिरसो दूरादिदमूचुः। भो भो रामं वहन्तो जवना जात्यास्तुरङ्गमाः! निवर्तध्वम्। न गन्तव्यम्। भर्तरि हिता भवत। भर्ता वः पुरं प्रापयितव्यः। पुरादरण्यं नापनेतव्यः। एवमार्तप्रलापान् प्रलपतस्तान् वृद्धान् [illegible]ानवेक्ष्य

रामः सहसा रथादवततार। अथ सीतालक्ष्मणसहितो रामो वनाभिमुखः शनैः पद्भ्यामेव जगाम। सच्चरित्रप्रणयी घृणावान् रामः पदातीन् विप्रान् रथेन लङ्घयितुं न शशाक। गच्छन्तमेव तं दृष्ट्वा सम्भ्रान्तचेतसः परमसन्तप्ता विप्रा राममब्रुवन्। सर्व एष ब्राह्मणसमूहो ब्राह्मणहितं त्वामनुगच्छति। अमी अग्नयश्च* द्विजस्कन्धाधिरूढास्त्वामनुयान्ति। वाजपेययागोपलब्धानि अस्माननुप्रयातानि एतानि छत्राणि** वर्षाकालात्यये हंसानिव पश्य। अप्राप्तच्छत्रस्य रश्मिसंतापितस्य ते वाजपेयोपलब्धैरेभिश्छत्रैश्छायां करिष्यामः। वत्स! या नो बुद्धिः सततं वेदमन्त्रानुसारिणी त्वत्कृते सा वनवासानुसारिणी कृता। अस्मत्परमं धनं वेदा हृदयेष्वेव तिष्ठन्ति। अस्माकं दारा अपि चारित्ररक्षिता गृहेष्वेव वत्स्यन्ति3*। पुनर्निश्चयो न कार्यः। त्वन्निवर्तने सुकृतो निश्चयः। त्वयि धर्मनिरपेक्षे धर्मपथे किं नामान्यत् स्थितं स्यात्? हे निश्चलसदाचार! महीपतनपांसुलैर्हंसशुक्लशिरोरुहैः शिरोभिस्त्वां याचामहे। निवर्तस्व। बहूनामिहागतानां ब्राह्मणानां यज्ञाः प्रारब्धाः। वत्स! त्वयि निवर्तिते ते समाप्यन्ते। राम! जङ्गमाः स्थावराश्च प्राणिनस्त्वयि भक्तियुक्ताः सन्ति। त्वं याचमानेषु भक्तेषु स्नेहं दर्शय। मूलबद्धत्वात् प्रतिहतवेगा वृक्षास्त्वामनुगन्तुमशक्ता वायुवेगोन्नता विक्रोशन्तीव। त्यक्ताहारसंचारा वृक्षकोणेषु तत्र तत्र स्थिताः पक्षिणोऽपि सर्वभूतानुकम्पिनं त्वां निवर्तितुं प्रार्थयन्ते। इत्थं रामं निवर्तयितुं ब्राह्मणा विक्रोशन्ति स्म। तदा राघवं वारयन्तीव तमसा नदी ददृशे।

---

* अरण्यारोपिताः। केवलानां द्विजस्कन्धाधिरूढत्वासंभवादिति गोविन्दराजः।

** श्वेतच्छत्रं राज्ञ एव भवति। वाजपेययाजिनां च श्वेतच्छत्राणि स्युः। इति cr

3* वेदान् दारांश्च परित्यज्य कथं भवद्भिरागतमिति रामस्य प्रश्नमभ्यूह्येयमुक्तिरिति गोविन्दराजः।

४१

ततो रामो रम्यं तमसातीरमाश्रित्य सीतामुद्वीक्ष्य लक्ष्मणमुवाच। सौमित्रे! वयं वनं प्रस्थिताः। वनवासस्याद्येयं प्रथमा रात्रिः। भद्रं ते। उत्कण्ठितुं नार्हसि। स्वस्वनिलयान् प्राप्य मृगाः पक्षिणश्च निलीनाः। तेषामारावैररण्यानि समन्ततो रुदन्तीव। पश्य। अद्य राजधानी अयोध्या नरनारीभिः सह गतानस्मान् नूनं शोचति। धर्मात्मा भरतो मम पितरं मातरं च धर्मार्थकामसहितैर्वाक्यैराश्वासयिष्यति। भरतस्य कोमलस्वभावं पुनः-पुनर्विचिन्त्य पितरं मातरं च नानुशोचामि। नरश्रेष्ठ! मामनुव्रजता त्वया सुकार्यं कृतम्। यदि त्वं न स्यास्तदा वैदेह्या रक्षणार्थे सहायता अन्वेष्टव्या स्यात्। लक्ष्मण! अद्येमां निशां जलेनैव वत्स्यामि। लभ्यमानेऽपि विविधे वन्यपदार्थे एतद्धि मह्यं रोचते। इति लक्ष्मणमुक्त्वा सुमन्त्रं सौम्य! अश्वेषु अप्रमत्तो भवेत्युवाच। सूर्येऽस्तं गते सुमन्त्रः अश्वान् संयम्य भूरि यवसं प्रदाय राममुपययौ। स सन्ध्यामुपास्य रात्रिमुपस्थितां दृष्ट्वा सौमित्रिणा सह रामस्य शयनं चक्रे। तमसातीरे वृक्षदलैः कृतायां शय्यायां सीतारामलक्ष्मणा अशेरत। लक्ष्मणः संप्रसुप्तं सभार्यं भ्रातरं वीक्ष्य सुमन्त्राय रामस्य विविधान् गुणान् कथयामास। तमसातीरे सूताय लक्ष्मणे रामस्य गुणान् कथयति रात्रावधिको भागो गतः*। गोसमुदायव्याकुलतीराया-स्तमसायाः समीपे** प्रकृतिभिः सह रामस्तां रात्रिमवसत्। उत्थाय प्रकृतीर्वीक्ष्य लक्ष्मणमाह। अस्मदासक्तान् गृहेष्वपि निरपेक्षान् साम्प्रतं वृक्षमूलेषु संसुप्तान् पौरान् पश्य। एते पौरा यथास्मन्निवर्तने आगृह्णन्ति

---

* उदितो रविः इत्यस्य रात्रावधिको भागो गतः रविरुदेतुमारब्ध इति लाक्षणिकोऽर्थो वक्तव्यः। उदिते सूर्ये ब्राह्मणा न स्वप्युः। किञ्च ४३–१ श्लोकाद् रात्रिः शिष्टेति सुस्पष्टम्।

** तमसाया विदूरतः इति पाठः। तमसायाः अविदूरतः इति पदच्छेदं कृत्वा आर्षं संधिमभ्युपगम्यावगन्तव्योऽर्थः सर्गप्रथमश्लोकानुरोधेन।

तथा तर्कयामि प्राणानपि मोक्ष्यन्ति न तु निश्चयम्। यावदेवैते संसुप्तास्तावदेव रथमारुह्य वयं पन्थानं गच्छामः। यद्येवं कुर्मस्तर्हि मामनुरक्ता इक्ष्वाकुपुरवासिनो भूयोऽपि वृक्षमूलानि संश्रित्य न स्वप्युः। नृपात्मजैः पौरा आत्मकृताद् दुःखाद् विमोच्याः। आत्मदुःखेन न ते योज्याः। तच्छ्रुत्वा लक्ष्मणो महाप्राज्ञ! भवदुक्तं मे रोचते। क्षिप्रमारुह्यतामितिप्राह। ततः सूतस्त्वरितः स्यन्दनं योजयित्वा प्राञ्जलिः रामाय प्रत्यवेदयत्। पौराणां मोहनार्थं रामः सूतमब्रवीत्। रथमास्थाय उदङ्मुखः प्रयाहि। मुहूर्तं त्वरितं गत्वा रथं पुनर्निवर्तय। यथा पौरा मम मार्गं न विद्युः सावधानस्तथा कुरु। सारथिस्तथा कृत्वा प्रत्यागम्य रथं रामस्य प्रत्यवेदयत्। सपरिकरो राघवः स्यन्दनमधिष्ठाय शीघ्रप्रवाहामाकुलावर्तां तमसां नदीमतरत्*। ततः शिवमकण्टकमभयं क्षेमदर्शनं+ च महामार्गं प्रापद्यत। शर्वर्यां प्रभातायां ते पौरा राघवं विना शोकोपहता हतचेतसो निश्चेष्टाश्च बभूवुः। दुःखाश्रुपरिद्यूनास्ततस्ततो वीक्षमाणा रामस्य छायामपि न ददृशुः। ततः क्षणं मार्गानुसारेण किञ्चिद् गत्वा पुनर्मार्गनाशान्महति विषादे निममज्जुः। सन्मानसाः पौरा रथस्य मार्गनाशेन किमिदं दैवेनोपहताः किं करिष्याम इति वदन्तो न्यवर्तन्त। पश्चात् सर्वे क्लान्तचेतसो यथागतेनैव मार्गेण व्यथितसज्जनामयोध्यामगमन्।

## ४२

रामममनुगम्य निवृत्तानां दुःखितानां नगरवासिनां प्राणा उत्पतिता इवासन्। स्वं स्वं निलयमागम्य पुत्रदारैः परिवृता अश्रूणि मुमुचुः। जना

---

*रथेन शीघ्रप्रवाहा आकुलावर्ता नदी कथं तीर्णा? संभवतो नदी विरलजलैवासीद् येन रथेन सुतरा बभूव। शीघ्रप्रवाहा आकुलावर्ता इति कवेरतिशयोक्तिर्भवेत्। अथवा सा नदी प्रायेण महाप्रवाहा आकुलावर्ता च तस्मिन् काले तु विरलप्रवाहेति कथञ्चित् समाधेयम्। +Cr अभयं भयदर्शिनाम्। ग्राह्यः– अभयं क्षेमदर्शनम्।

नाहृष्यन्। न विनोदं प्रापुः। वणिजो न व्यापृताः। पण्यानि नाशोभन्त। गृहमेधिनो नापचन्। नष्टद्रव्यं प्राप्य विपुलं धनं लब्ध्वा वा नाभ्यनन्दन्। प्रथमं पुत्रं प्रसूय माता नाभ्यनन्दत्। गृहे गृहे दुःखार्ता रुदत्यः स्त्रियो गृहमागतं भर्तारं (रामासन्निहितत्वात्) तोत्रैर्द्विपानिव वाग्भिर्व्यगर्हयन्त। ये राघवं न पश्यन्ति तेषां गृहैर्दारैर्धनेन पुत्रैः सुखैर्वापि किं प्रयोजनम्? लोके एको लक्ष्मणः सत्पुरुषो यः सीतया सह रामं वने परिचरन्ननुगच्छति। येषु पवित्रं सलिलं विगाह्य रामः स्नास्यति ते तटाकाः सरांसि आपगाश्च कृतपुण्याः। रम्यवृक्षसमूहा अटव्यो जलपूर्णा नद्यः सानुमन्तः पर्वताश्च रामं शोभयिष्यन्ति। काननं शैलं वा यं रामोऽभिगमिष्यति प्राप्तः प्रियातिथिरिव स तेनार्चितो भविष्यति। विचित्रपुष्पशिरोभूषणा बहुमञ्जरीधारिणो भ्रमरशालिनो वृक्षा राघवायात्मानं प्रदर्शयिष्यन्ति+। गिरयः अनुक्रोशादकाले चापि मुख्यानि पुष्पाणि फलानि चागतं रामं दर्शयिष्यन्ति। पर्वता बहुविधान् चित्रान् निर्झरान् भूयोविदर्शयन्तो विमलानि तोयानि प्रस्रविष्यन्ति++। पर्वताग्रेषु पादपा राघवं रमयिष्यन्ति। यत्र रामोऽस्ति तत्र भयं नास्ति पराभवश्च नास्ति। दशरथस्य पुत्रः स महाबाहुः शूरो यावदस्मद्दूरान्न भवति तावदनुगच्छाम। तादृशस्य महात्मनो भर्तुः पादच्छाया सुखकरी। अस्माकं स एव नाथो गतिः परायणं च। वयं सीतां परिचरिष्यामः। यूयं राघवं परिचरिष्यथ। इति दुःखार्ताः पौरस्त्रियो भर्तॄन् तत्तदब्रुवन्। स्त्रियः पुनरूचुः। अरण्ये युष्माकं योगक्षेमं राघवो विधास्यति। नारीजनस्य सीता योगक्षेमं करिष्यति। इहायोध्यायां निवासः अप्रशस्तः। अत्र सर्वो जन उत्कण्ठितः। सर्वस्य मनो हृतम्। न कस्यापि प्रीतिरिहास्ति। अनाथमिदं राज्यं धर्ममतिरिच्य यदि कैकेयीहस्तगतं भवेत् तर्हि नो

---

+ पङ्क्तिर्ग्राह्या – राघवं दर्शयिष्यन्ति नगा भ्रमरशालिनः। ++ पङ्क्तिर्ग्राह्या– प्रस्रविष्यन्ति तोयानि विमलानि महीधराः।

जीवितेन प्रयोजनं नास्ति। पुत्रैर्धनैः कुतः? यया ऐश्वर्यकारणात् पुत्रो भर्ता च त्यक्तौ सा कुलपांसनी कैकेयी कमन्यं न परिहरेत्? कैकेय्या जीवन्त्या वयं जीवन्त्यो राज्ये भृत्यभूता जातु न निवसेम। पुत्रैरपि शपामहे।या निर्घृणा महाराजस्य पुत्रं प्रवासयति अधर्म्यां दुष्टचारिणीं तां प्राप्य कः सुखं जीवेत्? रामे प्रव्रजिते महाराजो ध्रुवं न जीविष्यति। मृते दशरथे राज्ये सर्वं शून्यं भविष्यति। तस्मात् क्षीणपुण्याः सुदुर्गता यूयं विषमालोड्य पिबत। राघवं वा अनुगच्छत। अज्ञातं देशं वा निर्गच्छत। सभार्यः सहलक्ष्मणो रामश्छद्मना प्रव्राजितः। यथा पशवः सौनिके तथा वयं भरते संनिसृष्टाः स्मः। तथा पौरस्त्रियो विलपन्त्यो मृत्योर्भयागमे इव चुक्रुशुः। सुते भ्रातरि वा विवासिते यथा तथा ताः स्त्रियो रामनिमित्तमातुरा दीना विचेतसो विलप्य रुरुदुः। तासां रामः सुतेभ्यः अधिको ह्यभवत्।

४३

रामः पितुराज्ञामनुस्मरन् तेन रात्रिशेषेणैव महद् दूरं प्रययौ। शिवा रजनी व्यपायात्। शिवां सन्ध्यामुपास्य विषयान्तं प्राविशत्। कृष्टक्षेत्रान् ग्रामान् पुष्पितानि वनानि च पश्यन् ग्रामकुग्रामवासिनां वाचः शृण्वन् शीघ्रं गच्छन्नपि शनैरिव ययौ। कामवशं गतं राजानं दशरथं धिक्। कष्टम्। नृशंसा पापा कैकेयी पापमेवानुसरति। धार्मिकं महाप्राज्ञं सानुक्रोशं जितेन्द्रियं राजपुत्रं रामं या वनवासे प्रवासयति सा कैकेयी तीक्ष्णा संभिन्नमर्यादा तीक्ष्णे कर्मणि प्रवर्तते। ग्रामिणां कुग्रामिणां चैता वाचः शृण्वन् रामः कोसलानतिचक्राम। ततः शिववारिवहां वेदश्रुतिं नाम नदीमुत्तीर्य अगस्त्याध्युषितां दिशमभिमुखः प्रायात्। ततः सुचिरं कालं गत्वा शिवां गोयुतजलप्रायप्रदेशां सागरगामिनीं गोमतीं नदीमतरत्। शीघ्रगैर्हयैर्गोमतीमतिक्रम्य मयूरहंसाभिरुतां स्यन्दिकां नदीं ततार। पुरा राज्ञा मनुना इक्ष्वाकवे दत्तां स्फीतां राष्ट्रावृतां महीं सीताया अन्वदर्शयत्।

सूत इति प्रेम्णा आभाष्य हंसमत्तस्वरो राम उवाच। अहं पुनरागम्य मात्रा पित्रा च संगतः कदा सरय्वाः पुष्पिते वने मृगयां पर्यटिष्यामि? मृगया नाम लोके राजर्षिगणसंमता अतुला रतिरस्ति। सूत! सरयूवनेऽहं मृगयामत्यर्थमभिकाङ्क्षामि+। एवं रामस्तं तं विषयमुद्दिश्य मधुरया वाण्या भाषमाणः अध्वानं ययौ।

४४

रम्यान् विशालान् कोसलानतिक्रम्य रामः शृङ्गबेरपुरं प्रति जगाम। तत्र त्रिपथगां रम्यां शिवतोयामशैवलामृषिनिषेवितां गङ्गां ददर्श। सा नदी हंससारससंघुष्टा चक्रवाकोपकूजिता शिंशुमारैर्नक्रैर्भुजङ्गैर्निषेविता च बभूव। तरङ्गमिश्रितावर्तपूर्णां तां वीक्ष्य रामः अद्यैहैव वसाम इति सुमन्त्रमुवाच। सारथे! नद्याः समीपे बहुपुष्पप्रवालवान् सुमहान् इङ्गुदीवृक्षोऽयं दृश्यते। अद्यात्रैव वसामः। लक्ष्मणः सुमन्त्रश्च बाढमिति राममूचतुः। सर्वे रथेन तं वृक्षमुपययुः। सर्वे रथादवतेरुः। हयान् मोचयित्वा सुमन्त्रो वृक्षमूलस्थितं रामं कृताञ्जलिरुपतस्थौ। तत्र गुहो नाम निषादनायको बलवान् रामस्यात्मसमः सखा राजा बभूव। स पुरुषश्रेष्ठं रामं स्वविषयमागतं श्रुत्वा वृद्धैरमात्यैर्ज्ञातिभिश्च परिवृत उपाजगाम। उपागच्छन्तं गुहं दूराद् दृष्ट्वा सौमित्रिणा सह रामस्तं समागच्छत्। दुःखितो गुहो रामं परिष्वज्याब्रवीत्। राम! यथायोध्या तथा तवेयं च पुरी। ब्रूहि किं ते करवाणि। ततः पृथग्विधं गुणवदन्नाद्यमुपादाय क्षिप्रमर्घ्यं चोपानयत्। पुनरिदमुवाच। महाबाहो! स्वागतं ते। इयमखिला मही तवास्ति। वयं प्रेष्या भवान् भर्ता च। अस्माकं राज्यं प्रशाधि। भक्ष्यं भोज्यं पेयं लेह्यं चोपस्थितम्। उत्तमानि शयनानि सन्ति। तव हयानां खादनं चोपस्थितम्। एवं ब्रुवाणं गुहं रामः पद्भ्यामभिगमात् स्नेहप्रदर्शनेन च वयं सर्वथा

---

+ cr नात्यर्थमभिकाङ्क्षामि। ग्राह्यः – अत्यर्थमभिकाङ्क्षामि।

भवता अर्चिता हृष्टाश्चेत्युक्त्वा पुनस्तं पीनभुजाभ्यां साधु पीडयन् प्राह। दिष्टया बान्धवैः सहारोगं त्वां पश्यामि। अपि ते राष्ट्रे मित्रेषु धनेषु च कुशलम्? भवता प्रीत्या यद्यदिदं समुपकल्पितं सर्वं तत् प्रतिनिवर्तयामि। प्रतिग्रहे न वर्ते। मां कुशचीराजिनधरं फलमूलाशनं धर्मदीक्षितं वनगोचरं तापसं विद्धि। अश्वानां खादनेनाहमर्थी। केनचिदन्येन न। एतावतात्रभवता सुपूजितो भविष्यामि। एते अश्वा मम पितुर्दशरथस्य दयिताः। एतैरश्वैः सुविहितैरहमर्चितो भविष्यामि। ततो गुहः अश्वानां पानीयं खादनं च त्वरितं दीयतामिति तत्रैव पुरुषानन्वशात्। ततो वल्कलोत्तरीयो रामः पश्चिमां सन्ध्यामन्वास्य लक्ष्मणेनाहृतं जलमेव भुक्तवान्। सभार्यस्य तस्य भूमौ शयानस्य पादौ प्रक्षाल्य लक्ष्मणः अभ्येत्य वृक्षमुपाश्रित्य तस्थौ। गुहोऽपि सुमन्त्रेण लक्ष्मणेन च सह भाषमाणो धनुर्धर अप्रमत्तश्च रामं रक्षन् जजागार। ततः अदृष्टदुःखस्य सुखोचितस्य महात्मनो रामस्य सा रात्रिश्चिरेण व्यतीयाय।

४५

स्वाभाविकानुरागेण भ्रातुरर्थाय जाग्रतं लक्ष्मणं दुःखसन्तप्तो गुह उवाच। इयं सुखा शय्या त्वदर्थमुपकल्पिता। अस्यां यथासुखं समाश्वसिहि। वयं सर्वे क्लेशानामुचिताः। त्वं सुखोचितः। रामस्य गुप्त्यर्थं वयं निशां जागरिष्यामः। मम रामात् प्रियतरः कश्चन भुवि नास्ति। सत्यमेतदहं ब्रवीमि। सत्येनैव ते शपे। अस्य प्रसादादस्मिन् लोके सुमहद् यशः धर्मावाप्तिमर्थावाप्तिं चाशंसे। सोऽहं ज्ञातिभिः सह धनुष्पाणिः सीतया सह शयानं रामं सर्वतो रक्षिष्यामि। सदास्मिन् वने चरतो मे किञ्चिदविदितं नास्ति। सुमहत् चतुरङ्गं बलमपि प्रसहेमहि। तदा लक्ष्मणो गुहमुवाच। अनघ! धर्ममेवानुपश्यता त्वया रक्ष्यमाणा वयं सर्वेऽत्र न भीताः। रामे सीतया सह भूमौ शयाने कथं मया निद्रा लब्धुं

शक्या? जीवितं सुखानि वा कथं लब्धुं शक्यानि? यो युधि सर्वैर्देवासुरैः प्रसहितुं न शक्यः तं रामं सीतया सह तृणेषु सुखसंविष्टं पश्य। यो दशरथस्य सदृशलक्षणो मुख्य इष्टश्च पुत्रः स रामो मन्त्रतपोभ्यां विविधैः परिश्रमैश्च लब्धः। अस्मिन् प्रव्राजिते राजा चिरं न जीविष्यति। नूनं क्षिप्रमेव मेदिनी विधवा भविष्यति। अयोध्यायामेतावता स्त्रिय उच्चैराक्रुश्य श्रमेणोपरताः स्युः। मन्ये राजनिवेशनं महाध्वनेरुपरतम्। कौसल्या राजा मम जननी चेमां शर्वरीं न जीवेयुः। शत्रुघ्नस्यापेक्षया मे माता जीवेदपि। वीरजननी कौसल्या मरिष्यतीति दुःखितोऽस्मि। अनुरक्तजनाकीर्णा सुखा लोकप्रियावहा+ सा पुरी राजव्यसनसंसृष्टा विनशिष्यति। मम पिता अतिक्रान्तमतिक्रान्तं मनोरथमनवाप्य राज्ये राममनिक्षिप्य विनशिष्यति। मृतं पितरं सिद्धार्थाः प्रेतकार्येषु संस्करिष्यन्ति। रम्यचत्वरसंस्थानां सुविभक्तमहापथां हर्म्यप्रासादसंपन्नां गणिकावरशोभितां रथाश्वगजसंबाधां तूर्यनादविनादितां सर्वकल्याणसंपूर्णां हृष्टपुष्टजनाकुलामारामोद्यानसंपन्नां समाजोत्सवशालिनीं मम पितुः राजधानीं केचन सुखिता विचरिष्यन्ति। अपि निवृत्ते वनवासे सत्यप्रतिज्ञेन कुशलिना दशरथेन सह सम्मिल्य वयमयोध्यां प्रविशेम? एवं लक्ष्मणे परिदेवयति सा शर्वरी अत्यवर्तत। लक्ष्मण एवं गुरुसौहृदाद् ब्रुवति व्यथातुरो गुहो ज्वरातुरो गज इव बाष्पं मुमोच।

## ४६

प्रभातायां शर्वर्यां रामो लक्ष्मणमुवाच। तात! भगवती निशा गता। भास्करोदयकालः प्राप्तः। सुकृष्णो विहगः कोकिलः कूजति। वने नदतां बर्हिणानां निर्घोषः श्रूयते। सौम्य! शीघ्रगां सागरगामिनीं जाह्नवीं तराम। रामस्य वचनं विज्ञाय लक्ष्मणो गुहं सुमन्त्रं चाकार्य भ्रातुरग्रतस्तस्थौ। ततो

---

+ cr सुखालोकप्रियावहा। सुखा लोकप्रियावहा इति पाठ्यः।

राघवौ कलापान् संनह्य खड्गौ बद्ध्वा धन्विनौ येन मार्गेण गङ्गा तार्या तेन मार्गेण सीतया सह जग्मतुः। प्राञ्जलिः सुमन्त्रो धर्मज्ञं राममुपगम्य अहं ते कां सेवां करवाणीति पप्रच्छ। ममैतावद् गङ्गातीरपर्यन्तं रथेन प्रापणं कृतम्। निवर्तस्व। यानं विहाय पद्भ्यां महावनं गमिष्याम इति राम उवाच। निवर्तितुमात्मानमभ्यनुज्ञातं विज्ञाय सुमन्त्रो राममाह। भार्यया भ्रात्रा सह प्राकृतवत् त्वं वने वससि। सर्वमिदं दुर्दैवकृतम्। दैवविहितं न केनाप्यतिक्रान्तम्। यतस्त्वां दुःखमागतं ततो निश्चिनोमि ब्रह्मचर्ये स्वधीते मार्दवार्जवयोर्वा फलोदयो नास्ति। राघव! वैदेह्या भ्रात्रा च सहेह वने वसन् त्रीन् लोकान् जयन्निवोत्कर्षं प्राप्स्यसि। वयं तु हताः खलु। त्वया विसृष्टा दुःखभागिनः पापायाः कैकेय्या वशमेष्यामः। इति ब्रुवन् सुमन्त्रः स्वप्राणसमं रामं दूरगमनोद्युक्तं दृष्ट्वा दुःखार्तश्चिरं रुरोद। बाष्पे विगते सुमन्त्रो मुखं प्रक्षाल्य शुचिर्बभूव। रामस्तं पुनर्मधुरं वाक्यमुवाच। इक्ष्वाकूणां त्वया तुल्यं सुहृदं नोपलक्षये। यथा पिता मां न शोचेत् तथा कुरु। राजा वृद्धः शोकपीडितः कैकेयीप्रेमभारावसन्नश्च। तस्मादेतत्ते ब्रवीमि। महीपतिर्यद्यत् कार्यं कैकेय्याः प्रियकामार्थमाज्ञापयेत् तत्तदविशङ्कया करणीयम्। नरेश्वरा एतदर्थं राज्यानि प्रशासति यदेषामभीष्टं सर्वकार्येषु न प्रतिहन्यते। यथा महाराजस्याज्ञा मनागपि न प्रतिहन्यते न च स दुःखी भवति सर्वं तथा कुरु। एतावददृष्टदुःखं वृद्धमार्यं राजानमभिवाद्य मत्त इदं वचनं ब्रूयाः। अयोध्यायाश्च्युता वने वत्स्याम इति अहं लक्ष्मणः सीता च नैवानुशोचामः। चतुर्दशसु वर्षेषु निवृत्तेषु क्षिप्रमयोध्यां प्रतिनिवृत्तान् मां लक्ष्मणं सीतां च नित्यं द्रक्ष्यसि। सुमन्त्र! राजानं मम मातरं कैकेयीसहिता अन्या देवीश्च पुनःपुनर्ममारोग्यं ब्रूहि। सीताया ममास्य लक्ष्मणस्य च वचसा पादाभिवन्दनं कौसल्याया वद+।

---

+cr चार्यस्य। ग्राह्यः – चाप्यस्य।

महाराजं च ब्रूयाः।भरतं क्षिप्रमानय। आगतो भरतो नृपाभिमते युवराजपदे स्थाप्यः। भरतं परिष्वज्य यौवराज्यपदे तमभिषिच्यास्मत्संतापजं दुःखं त्वं नानुभविष्यसि। भरतश्चैवं वक्तव्यः। यथा राजनि वर्तसे तथा सर्वासु मातृषु अविशेषेण वर्तेथाः। यथा तव कैकेयी सुमित्रा च तथा मम माता कौसल्या च भवतु। इत्युक्त्वा रामेण निवर्त्यमानः सुमन्त्रः शोककर्शितः सर्वं वचनं श्रुत्वा स्नेहाद् राममुवाच। स्नेहान्निस्संकोचं यदहं ब्रवीमि, सेवकः सन्नपि उपचारं विना यच्च ब्रवीमि तत् सर्वं भक्तिमानिति त्वं क्षन्तुमर्हसि। तव वियोगेन पुत्रशोकाकुलामिव स्थितां पुरीमयोध्यां त्वद्विहीनोऽहं कथं प्रतियास्यामि? सराममपि मे रथं दृष्ट्वा तदा जनस्तावान् दुःखितो बभूव। सम्प्रति रामं विना रथं दृष्ट्वा अयोध्या विदीर्येत। आहवे हतरथिकं सूतावशेषं स्वपक्षीयं रथं दृष्ट्वा यथा सेना दुःखिता भवति तथा शून्यमिमं रथं दृष्ट्वा नगरी दीना भवेत्। अद्य प्रजा दूरे निवसन्तमपि मानसेनाग्रतः स्थितं त्वां चिन्तयन्त्यो नूनं निराहाराः कृताः। त्वद्विप्रवासने पौरैर्य आर्तनादो मुक्तो मां शून्यरथस्थं वीक्ष्यैव ततः शतगुणमार्तनादं कुर्युः। (तदा किमहं कौसल्यां वक्ष्यामि?) देवि! तव पुत्रो मातुलकुलं मया नीतः। सन्तापं मा कृथा इति किमहं ब्रूयाम्? इदं वचनं प्रियमप्यसत्यम्। तदहं न ब्रूयाम्। त्वं रथेन वनं नीत इति वचनं सत्यमप्यप्रियम्। तदपि कथमहं ब्रूयाम्? मम नियोगस्था इमे हयाः सर्वदा तव कुटुम्बजनं वहन्ति। कथमिदानीं त्वया हीनं रथं वक्ष्यन्ति? तस्मात् त्वदृते अयोध्यां गन्तुं नाहं शक्ष्यामि। त्वामनुसृत्य वने वस्तुं मामनुज्ञातुमर्हसि+। यद्येतावद्याचमानस्य मे त्यागमेव करिष्यसि तर्हि त्वया त्यक्तमात्र इह सरथोऽग्निं प्रवेक्ष्यामि। वने तव तपोविघ्नकराणि सर्वाणि सत्त्वानि रथेन

---

+ ग्राह्यः श्लोकः। तन्न शक्ष्याम्यहं गन्तुमयोध्यां त्वदृतेऽनघ। वनवासानुयानाय मामनुज्ञातुमर्हसि।।

निवारयिष्यामि। तव कुटुम्बसारथिना मया त्वदनुग्रहेण रथचर्याकृतं सुखमवाप्तम्। त्वदनुग्रहेण वनवासकृतं सुखमिदानीमाशंसे। प्रसीद। अरण्ये ते प्रत्यनन्तरो भवितुमिच्छामि। प्रत्यनन्तरो मे भवेति भवता प्रीत्याभिहितमिच्छामि। वने वसन् त्वां नमस्कुर्वन् तव शुश्रूषां मूर्ध्ना करिष्यामि। अयोध्यां देवलोकं वा सर्वथा प्रजहामि। दुष्कृतकर्मणा यथा महेन्द्रस्य राजधानी तथा त्वया विना मयायोध्या प्रवेष्टुमशक्या। इमे हयाश्चापि वनवासिनस्ते परिचर्यां यदि करिष्यन्ति तदा परमां गतिं प्राप्स्यन्ति। एष हि मम मनोरथो यद् वनवासे पूर्णेऽनेन रथेनैव त्वां पुनः पुरीं वहेयम्। वने त्वया सहितस्य मम चतुर्दशवर्षाणि चतुर्दशक्षणभूतानि यास्यन्ति। अन्यथा शतसंख्यानि भविष्यन्ति। भृत्यवत्सल! प्रभुपुत्रानुसृते मार्गे तिष्ठन्तं भक्तं भृत्यं भृत्यमर्यादायां स्थितं मां हातुं नार्हसि। एवं बहुविधं पुनःपुनर्याचमानं दीनं सुमन्त्रं भृत्यानुकम्पी राम इदमब्रवीत्। भर्तृवत्सल! ते मयि परमां भक्तिं जानामि। इतस्त्वां यदर्थं पुरीं प्रेषयामि तत् शृणु। नगरीं गतं त्वां दृष्ट्वा मे यवीपसी जननी कैकेयी रामो वनं गत इति प्रत्ययं गच्छेत्। मयि वनवासं गते सा देवी परितुष्टा धार्मिकं राजानं मिथ्यावादीति नातिशङ्केत। एष मे मुख्य उद्देशो यन्मे यवीयसी अम्बा भरतेन समन्ताद् रक्षितं स्फीतं पुत्रराज्यमवाप्नुयात्। सरथस्त्वं मम राज्ञश्च प्रियार्थं पुरीं व्रज। यानर्थान् संदिष्टोऽसि तांस्तांस्तथा तथा ब्रूयाः। इति सूतमुक्त्वा पुनःपुनः सान्त्वायित्वा रामो हेतुमद् धैर्ययुतं वचनं गुहमुवाच। गुह! जटाः कृत्वा गमिष्यामि। न्यग्रोधक्षीरमानय। तदा गुहो रामाय क्षिप्रं तत्क्षीरमुपाहरत्। राम आत्मनो लक्ष्मणस्य च तेन जटा अकरोत्। तदा चीरवसनौ जटामण्डलधारिणौ भ्रातरौ रामलक्ष्मणौ ऋषिसमावशोभेताम्। ततो लक्ष्मणेन सह रामो वैखानसं मार्गमास्थितो व्रतमङ्गीकृत्य सखायं गुहमब्रवीत्। गुह! त्वं सैन्ये कोशे दुर्गे राष्ट्रे चाप्रमत्तो

भवेः। राज्यं कष्टेन रक्षणीयमिति प्राज्ञा वदन्ति खलु। इत्युक्त्वा रामो गुहमामन्त्र्य सीतया लक्ष्मणेन च सह गन्तुमुदयुङ्क्त। नदीतीरे नावं दृष्ट्वा शीघ्रगां गङ्गां तितीर्षुः रामो लक्ष्मणमुवाच। लक्ष्मण! स्थितामिमां नावं त्वं शनैरारोह। सीतां च करं परिगृह्य सावधानः क्षिप्रमारोपय+। भ्रातुः शासनं श्रुत्वा लक्ष्मण आदेशाभिप्रायानुसारेण प्रथमं सीतामारोप्य पश्चादारुरोह। पश्चाद् रामः स्वयमारुरोह। ततो गुहो ज्ञातीन् नावं चालयितुमचोदयत्। सुमन्त्रं ससैन्यं गुहं च साधयितुमनुज्ञाय नावमधिष्ठाय रामो नाविकांश्चोदयामास। ततः कर्णधारसमाहिता नौकादण्डवेगाभिहता सा नौः शीघ्रं सलिलमत्यगात्। साध्वी वैदेही भागीरथ्या मध्यं प्राप्य प्राञ्जलिर्भूत्वा नदीमिदमभाषत। गङ्गे! महाराजस्य दशरथस्यायं पुत्रस्त्वदभिरक्षितो निदेशं पालयतु। समग्राणि चतुर्दशवर्षाणि कानने उषित्वा त्वदभिरक्षितो भ्रात्रा मया च सह पुनः प्रत्यागमिष्यति। देवि! सुभगे! गङ्गे! ततः क्षेमेण पुनरागताहं प्रमुदिता सर्वकामसमृद्धये त्वां यक्ष्ये। त्वं त्रिपथगा ब्रह्मलोकं समीक्षसे। उदधिराजस्य भार्या त्वमस्मिन् लोके संप्रदृश्यसे। शोभने! त्वां नमस्यामि प्रशंसामि च। प्राप्तराज्ये रामे शिवेन पुनरागते तव प्रियचिकीर्षया गवां शतसहस्राणि वस्त्राणि पेशलमन्नं च ब्राह्मणेभ्यः प्रदास्यामि। साध्वी दक्षिणा सीता तथा गङ्गां विज्ञापयन्ती दक्षिणं तीरमुपजगाम। तीरं प्राप्य नावं हित्वा सीतया लक्ष्मणेन च सह रामः प्रातिष्ठत। अथ रामो लक्ष्मणमुवाच। त्वमग्रतो गच्छ। सीता त्वामनुगच्छतु। त्वां सीतां च पालयन्नहं पृष्ठतो गमिष्यामि। अद्य सीता वनवासदुःखं वेदिष्यति। दीनः सुमन्त्र आशु गङ्गापरपारं गतं राममविच्छिन्नं निरीक्ष्य अध्वाधिक्याद् द्रष्टुमशक्तो व्यथितो बाष्पं मुमोच। बुभुक्षितौ तौ रामलक्ष्मणौ तत्र वराहमृश्यं पृषतं महारुरुं च चतुरो मृगान् हत्वा परिशुद्धं मांसमादाय सायंकाले वासाय वनस्पतिं ययतुः।

---

+ Cr सीतां चारोपयान्वक्षं। ग्राह्यः - सीतां चारोपय क्षिप्रं।

४७

तं वृक्षं समासाद्य पश्चिमां सन्ध्यामन्वास्य रामो लक्ष्मणमाह। अद्य सुमन्त्रेण रहिता जनपदाद् बहिः प्रथमा रात्रिः प्राप्ता। एतां रात्रिमुत्कण्ठितुं नार्हसि। अद्यप्रभृति रात्रिषु अतन्द्रिभ्यामावाभ्यां जागरितव्यम्। सीताया योगक्षेम[+] मावयोर्वर्तते। इमां रात्रिं कथञ्चिदेव वर्तयामहे। स्वयमार्जितैस्तृणादिभि-र्भूमावास्तीर्य शयिष्यामहे। ततो महार्हशयनोचितो रामो मेदिन्यां शयित्वा सौमित्रये इमानि सुवचांसि व्याजहार। लक्ष्मण! अद्य महाराजो ध्रुवं दुःखं स्वपिति। पूर्णमनोरथा कैकेयी संतुष्यति। अपि सा देवी कैकेयी भरतमागतं दृष्ट्वा राज्यकारणान्महाराजं प्राणान् न च्यावयेत्? अनाथो वृद्धो मया च विनाकृतः कामात्मा कैकेयीवशं गतः पिता किं करिष्यति? अस्माकं सर्वेषामिदं व्यसनं राज्ञो मतिविभ्रमं चालोक्य काम एवार्थधर्माभ्यां गरीयानिति मे मतिर्जायते। पिता मामिव प्रमदायाः कृते छन्दानुवर्तिनं पुत्रमविद्वानपि कस्त्यजेत्? महदिदं कष्टं यदेको भरतःअधिराजवन्मुदितान् कोसलान् भोक्ष्यति सभार्यः स सुखी च। वृद्धे ताते मयि चारण्यमाश्रिते स भरत एव सर्वस्य राज्यस्य प्रधाना व्यक्तिर्भविष्यति। योऽर्थधर्मौ परित्यज्य काममनुवर्तते स राजा दशरथ इव क्षिप्रमेवमापद्यते। सौम्य! दशरथान्ताय मम प्रव्राजनाय भरतस्य राज्याय च कैकेयी अस्मत्कुलमागतेति मन्ये। अपि सौभाग्यमदमोहिता कैकेयी मत्कारणेन कौसल्यां सुमित्रां च न सम्प्रबाधेत? मत्कारणाद् देवी सुमित्रा दुःखं मा आवसेत्। इतस्त्वं शीघ्रमयोध्यां प्रविश। अहमेकः सीतया सह दण्डकान् गमिष्यामि। अनाथायाः कौसल्यायास्त्वं नाथो भविष्यसि। क्षुद्रकर्मा कैकेयी द्वेषादन्यायमाचरेत्। धर्मज्ञे भरते मम मातरं त्वं परिदद्याः। मम जनन्या

---

[+] cr योगक्षेमः। ग्राह्यः – योगक्षेमम्। योगक्षेम इति पाठे योगसहितः क्षेम इति मध्यमपदलोपी समासो वक्तव्यः।

कस्मिन्नपि जात्यन्तरे स्त्रियः पुत्रैर्वियोजिता भवेयुर्येनैतदुपस्थितम्। मम मात्राहं चिरपुष्टो दुःखसंवर्धितश्च। फलप्राप्तिकाल आसन्ने सा मया दूरीकृता। धिङ्माम्। अहमम्बाया अनन्तकं शोकं ददामि। कापि सौभाग्यवती स्त्री मादृशं पुत्रं न जनयेत्। मम मातुर्गृहे सारिका नित्यं शुकं ब्रूते शुक! अरेः पादं दशेति। मन्ये तस्याः सारिकायाः कौसल्यायां मत्तः अधिका प्रीतिरस्ति*। शोचन्त्या अल्पभाग्याया अपुत्रकल्पाया मातुः किञ्चिन्नोपकुर्वता मया पुत्रेण किं प्रयोजनम्? अल्पभाग्या मे माता मया रहिता परमदुःखार्ता शोकसागरे पतिता शेते। यद्यहं क्रुद्ध एक इषुभिरयोध्यां पृथिवीं चापि वशीकुर्याम्। परन्त्वयं पराक्रमस्य कालो नास्ति। अधर्मस्य परलोकस्य च भीतोऽस्मि। तेनाद्यात्मानं नाभिषेचयामि। निशि विजने राम एतदन्यच्च बहु विलप्याश्रुपूर्णमुखस्तूष्णीमुपाविशत्। विलप्योपरतं गतार्चिषमिवानलं निर्वेगं समुद्रमिव स्थितं रामं लक्ष्मणः समाश्वासयत्। हे आयुधधारिणामग्रगण्य!+ त्वयि निष्क्रान्ते गतचन्द्रा शर्वरीवाद्यायोध्या पुरी ध्रुवं निष्प्रभा संजातेति मन्ये। तवायं परितापो न युक्तः। पुरुषर्षभ! सीतां मां च विषादयसि। त्वया हीनौ सीता चाहं च जलादुद्धृतौ मत्स्याविव क्षणमपि न जीविष्यावः। अहमद्य त्वया विना तातं सोदरं शत्रुघ्नं मातरं सुमित्रां स्वर्गं वापि न द्रष्टुमिच्छामि। राम एवं लक्ष्मणस्योत्तमं पुष्कलं च वच आदरान्निशम्य वानप्रस्थधर्मं प्रपद्य समस्ताः समा वनवासं कर्तुं निर्णयं विदधे।

---

*अस्पष्टः श्लोकार्थः। कलकत्ताप्रकाशने एतदनन्तरमन्यः श्लोकोऽस्ति यथा – यावदेकश्च खस्थश्च यावदस्य मुखं मयि तावदात्मविमोक्षार्थं शुक पादमरेर्दश।। यावच्छत्रुराकाशस्थो यावन्न स मामपश्यत् तावत्तस्य पादं शुक दशेति। संभवत इमावभिप्रायौ तस्मिन् काले सुप्रसिद्धौ। cr अधःसूचिकायामयं श्लोकः अन्यथा वर्तते। + cr अयोध्या युधिनां वर। अयोध्यायुधिनां वर इति पाठचः।

४८

तस्य महावृक्षस्याधस्तात्ते तां शिवां रजनीमुषित्वा विमले सूर्येऽभ्युदिते तस्माद्देशात् प्रतस्थिरे। यत्र गङ्गा यमुनां सम्मिलति तं देशमुद्दिश्य सुमहद् वनं विगाह्य विविधान् भूमिभागानदृष्टपूर्वान् मनोरमान् देशांश्च तत्र तत्र पश्यन्तो जग्मुः। अश्रमं गच्छन् विविधान् द्रुमान् पश्यन् रामो दिनेऽवसिते लक्ष्मणमुवाच। सौमित्रे! प्रयागसमीपे भगवतोऽग्नेरुन्नतं केतुं धूमं पश्य। मन्ये मुनिर्भरद्वाजः सन्निहितः। नूनं वयं गङ्गायमुनयोः सम्भेदं प्राप्ताः स्मः। वारिसंघट्टनशब्दः श्रूयते। वन्यपदार्थोपजीविभिः खण्डितानि दारूणि भरद्वाजाश्रमे विविधा द्रुमाश्च दृश्यन्ते इति संभाषमाणाः सुखं गत्वा सूर्येऽस्तमयमाने गङ्गायमुनयोः सन्धौ भरद्वाजमुनेर्निलयं प्रापुः। आश्रममासाद्य रामो मृगपक्षिणस्त्रासयन् किञ्चित्कालमध्वानं गत्वा भरद्वाजमुपजगाम। मुनिदर्शनं काङ्क्षन्तस्ते त्रयो दूरादवतस्थुः। हुताग्निहोत्रं मुनिं कृताञ्जलयस्तेऽभ्यवादयन्। ततो मुनेरात्मानं रामो न्यवेदयत्। भगवन्! आवां दशरथस्य पुत्रौ रामलक्ष्मणौ। इयं जनकसुता मम भार्या विजनं तपोवनं मामनुयाता। पित्रा प्रव्राजितं मां मम प्रियोऽनुजो दृढव्रतो लक्ष्मणोऽनुजगाम। पित्रा नियुक्ता वयं तपोवनं प्रवेक्ष्यामः। मूलफलाशना धर्ममेवाचरिष्यामः। तच्छ्रुत्वा धर्मात्मा मुनिरातिथ्यार्थं गा* मर्घ्योदकं चोपानयत्। समन्ततो मृगपक्षिभिः सहासीनो भरद्वाजो राममागतं स्वागतेनार्चयामास। तामर्चां प्रतिगृह्योपविष्टं राघवं भरद्वाजो धर्मयुक्तमाह। काकुत्स्थ! चिरस्येहागतं त्वां पश्यामि। अकारणं तव विवासनं च मया श्रुतम्। महानद्योः समागमेऽयं प्रदेशो विविक्तः पुण्यो रमणीयश्च। भवानिह सुखं वसतु। सर्वहिते रतो रामः प्रत्युवाच। भगवन्! इतः पौरजानपदो जन आसन्नः। वैदेहीं मां च द्रष्टुं जन आगमिष्यति। अतो

---

* मधुपर्काङ्गभूतं महोक्षमिति महेश्वरतीर्थगोविन्दराजौ।

वासमिह न रोचये। सुखार्हा जनकात्मजा यत्र रमते एकान्ते प्रदेशे तत् स्थानं विचार्य वद। तदा भरद्वाज उवाच। इतो दशक्रोशदूरे* महर्षिसेवितः पुण्यः सुखदर्शनो गिरिरस्ति। गोलाङ्गूलवानरर्क्षनिषेवितः स गन्धमादनसन्निभश्चित्रकूट इति ख्यातः। तत्र त्वं निवत्स्यसि। यावता नरश्चित्रकूटस्य शृङ्गाण्यवेक्षते तावता मङ्गलकरकार्याणि कुरुते पापे मनो न कुरुते। तत्र बहव ऋषयः शरदां शतं तपः कृत्वा कपालीभूतशिरस्का दिवमारूढाः। राम! प्रविविक्तं तं वासं भवतः सुखकरं मन्ये। अथवा मया सहेह वनवासाय निवस। इत्युक्त्वा भरद्वाजः प्रियातिथिं भार्याभ्रातृसमेतं रामं सर्वैष्टवस्तुभिः पूजयामास। प्रयागक्षेत्रे भरद्वाजेन सह रामे संभाषणपरे रात्रिरागता। प्रभाते रामो ज्वलिततेजसं मुनिमुवाच। भगवन्! शर्वरीं तवाश्रमे उषिताः स्मः। अधुना गन्तुमस्माननुजानीहि। भरद्वाजस्तं मधुमूलफलोपेतं चित्रकूटं गन्तुमवदत्। तत्र सर्वतः कुञ्जरयूथानि मृगयूथानि च विचरन्ति। तानि द्रक्ष्यसि। प्रहृष्टकोयष्टिककोकिलस्वनैर्निनादितं मृगैर्बहुभिर्मत्तैः कुञ्जरैश्च सुरम्यं तं चित्रकूटपर्वतमासाद्याश्रमे समावस।

## ४९

ते तत्र रजनीमुषित्वा महर्षिमभिवाद्य तं गिरिं प्रति जग्मुः। प्रस्थितान् तान् महर्षिः पिता पुत्रानिवान्वगाद् वक्तुं च प्रचक्रमे। इतो गत्वा शीघ्रस्रोतसं नदीं कालिन्दीमासाद्य प्लवं कृत्वा तां सूर्यपुत्रीं** तरत। ततो महान्तं हरितच्छदं बहुभिर्वृक्षैः सह विवृद्धं सिद्धोपसेवितं श्यामवटाख्यं न्यग्रोधमासाद्य ततः क्रोशमात्रं गत्वा नीलं काननं द्रक्ष्यथ। तद् वनं पलाशवृक्षैर्बदरीवृक्षैर्यमुनातीरभवैर्वंशैश्च व्याप्तमस्ति। स चित्रकूटस्य

---

* सम्प्रति प्रयागाच्चित्रकूटः ८० मैलानां (= ४० क्रोशानां) दूरेऽस्ति। रामायणीयः क्रोशपरिमाणोऽन्यो भवेत्। इति गीताप्रेस्।

** अंशुमतीं सूर्यतनयामिति महेश्वरतीर्थगोविन्दराजो।

पन्था बहुशो मया गतः। स रम्यः कोमलो वनदावविवर्जितश्च। इति पन्थानं तेषामावेद्य भरद्वाजो निववृते। निवृत्ते मुनौ रामो लक्ष्मणमवदत्। सौमित्रे! मुनिरस्माननुकम्पते। वयं कृतपुण्याः स्मः। एवं तौ मन्त्रयित्वा सीतया सह तामनुवीक्षमाणौ यमुनां नदीं जग्मतुः। तौ काष्ठानि परस्परं बद्ध्वा सुमहाप्लवं चक्रतुः। लक्ष्मणः शाखाश्छित्वा सीतायाः सुखमासनं चकार। तत्रेषत्संलज्जमानां प्रियामचिन्त्यां श्रियमिव दृश्यमानां सीतां रामः प्लवमारोपयत्। ततः शीघ्रगामूर्मिमालिनीं तीरजवृक्षव्याप्तां सूर्यपुत्रीं यमुनां प्लवेन तेरुः। तीर्णास्ते प्लवमुत्सृज्य यमुनावनात् प्रस्थाय श्यामाख्यं शीतलं हरितच्छदं न्यग्रोधमासेदुः। वनवासान्निवृत्य कौसल्यां सुमित्रां च पश्येयमित्यञ्जलिं कृत्वा सीता तं वृक्षं परिचक्राम। ततः क्रोशमात्रं गत्वा भ्रातरौ बहून् मेध्यान् मृगान् जघ्नुः। यमुनावने अभक्षयन्। तत्र ते बर्हिणसमुदायनादिते वानरवारणायुते शुभे वने विहृत्य समं नदीतीरमुपेत्य तां रात्रिं न्यवसन्।

५०

रात्र्यां व्यतीतायां (पर्यायक्रमेण) पश्चात् सुप्तं* लक्ष्मणं रामः शनैः प्रबोधयामास। सौमित्रे! वल्गु व्याहरतां वन्यपक्षिणां स्वनं शृणु। प्रस्थानस्यायं कालः। तस्मात् संप्रतिष्ठामहे। प्रातःकाले प्रतिबोधितो लक्ष्मणो निद्रां तन्द्रीं प्रसक्तं मार्गश्रमं च जहौ। ततस्ते उत्थाय नद्याः शिवे जले स्नात्वा ऋषिणादिष्टं तं चित्रकूटस्य मार्गं ययुः। ततः प्रातःकाले सौमित्रिणा सह संप्रस्थितो रामः सीतामिदमुवाच। सीते! सर्वतः पुष्पितान् किंशुकवृक्षान् पश्य। ते स्वैरेव पुष्पैः पुष्पमालाधारिण इव रक्तवर्णैः पुष्पैरादीप्ता इव च दृश्यन्ते। फुल्लान् फलपत्रैरवनतान् भल्लातकान्

---

*प्रथमं रामो निद्रां जहौ लक्ष्मणं च प्राबोधयदिति यद्यप्यापाततः श्लोकार्थः स्फुरति तथापि ४७-३श्लोकबलेन तौ न युगपत् सुप्तौ पर्यायक्रमेण सुप्तावित्यूह्यम्।

पश्य। फलवद्भिरेभिर्वृक्षैः पूर्णेऽस्मिन् प्रदेशे वयं नूनं जीवितुं शक्ष्यामः। लक्ष्मण! वृक्षे वृक्षे मधुकरैः संभृतानि द्रोणप्रमाणानि लम्बमानानि मधुपटलानि पश्य। पुष्पसंस्तरसंकटे रमणीये वनोद्देशे नत्यूहः क्रोशति। तं शिखी प्रतिकूजति। इममुन्नतशिखरं चित्रकूटपर्वतं पश्य। अस्मिन् पर्वते मातङ्गयूथानि संचरन्ति। पक्षिसंघा नदन्ति। ततः सीतया सह पादचारेण गच्छन्तौ तौ रम्यं चित्रकूटशैलमासेदतुः। तं बहुपक्षिगणयुतं पर्वतमासाद्य रामोऽवदत्। सौम्य! अयमस्माकं वासो भवतु। अत्र रमेमहि। लक्ष्मण! दृढानि वराणि च दारूण्यानय। आवसथं कुरुष्व। सौम्य! इह वासे मे मनोऽभिरमते। तद्वचनात् सौमित्रिर्विविधान् द्रुमानाजहार। पर्णशालां च चक्रे। भ्रातुरनन्तराज्ञां श्रोतुमेकाग्रचित्तं लक्ष्मणं राम आह। ऐणेयं मांसमाहृत्य शालापूजां करिष्यामः इति। लक्ष्मणः कृष्णमृगं हत्वा मेध्यं तन्मांसं समिद्धे पावके चिक्षेप। निष्टप्तं छिन्नशोणितं तद् विज्ञाय लक्ष्मणो राममुवाच। परिपूर्णावयववान् सर्वः कृष्णमृगो[+] मया शृतः। देवसंकाश! देवता यजस्व इति। गुणवान् रामः स्नात्वा नियतः पापसंशमनमुत्तमं बलिं समन्त्रं चकार। वृक्षपर्णच्छदां मनोज्ञां सर्वप्रदेशेषु सुकृतां प्रचण्डवातरहितां पर्णशालां देवगणाः सुधर्मां सभामिव सर्वे ते समेता वासाय विविशुः। बहुनानाविधपक्षिमृगसंकुले विचित्रपुष्पस्तबकैर्द्रुमैर्युते व्यालमृगानुनादिते वनोत्तमे ते तदा सुसुखं विजह्रुः। सुरम्यं चित्रकूटमासाद्य सुतीर्थां मृगपक्षिजुष्टां तां माल्यवतीं[*] नदीं च प्राप्य हृष्टा ननन्दुः। पुरविप्रवासाद् दुःखं च जहुः।

## ५१

गङ्गामुत्तीर्य रामस्य दक्षिणकूलगमनानन्तरं सुमन्त्रेण सह चिरं संभाष्य गुहः स्वगृहं जगाम। सुमन्त्रश्चानुज्ञातो हयोत्तमान् योजयित्वा भृशदुःखितः

---

[+] cr अयं कृष्णः समाप्ताङ्गः शृतः कृष्णमृगो यथा। ग्राह्यः – अयं सर्वः समाप्ताङ्गः शृतः कृष्णमृगो मया। [*] माल्यवती = मन्दाकिनी इति cr

अयोध्यां नगरीं जगाम। स सुगन्धीनि वनानि सरितः सरांसि ग्रामान् नगराणि च पश्यन् शीघ्रमतिययौ। तृतीये दिने सायाह्नसमये स निरानन्दामयोध्यां प्राप्य ददर्श। स शून्यामिव निश्शब्दां पुरीं वीक्ष्य दुःखितो गजवाजिजनजनाधिपैः सह रामवियोगशोकाग्निना कच्चिन्न दग्धा पुरीति चिन्तापरः क्षिप्रं प्रविवेश। प्रविशन्तं तं सूतं रामः क्वेति पृच्छन्तो नराः शतशः सहस्रशश्चाभ्यद्रवन्। अहं गङ्गातीरे राघवमापृच्छ्य धार्मिकेण महात्मनानुज्ञातो निवृत्तोऽस्मीति स तेषां शशंस। सीतारामलक्ष्मणा गङ्गां तीर्णा इति विज्ञाय बाष्पपूर्णमुखा जना अहो धिगिति निःश्वस्य हा रामेति चुक्रुशुः। राघवमिह न पश्यामः। ते वयं हताः स्मः खलु। इति बृन्दशस्तिष्ठतां तेषां वचः सुमन्त्रः शुश्राव। दानयज्ञविवाहेषु महत्सु सामाजिकोत्सवेषु च राममस्माकं मध्ये पुनर्जातु न द्रक्ष्यामः। अस्य जनस्य किं युक्तं किं प्रियं किं सुखावहमिति रामेण नगरं पितृवत् परिपालितम्। वातायनगतानां स्त्रीणामापणमध्ये जनानां च रामशोकाभितप्तानां परिदेवनं सुमन्त्रः शुश्राव। स वस्त्रेण मुखमाच्छाद्य राजमार्गेण यत्र राजा दशरथस्तदेव गृहमुपययौ। स रथादवतीर्य शीघ्रं राजवेश्म प्रविश्य महाजनसमाकुलाः सप्त कक्ष्या अतिचक्राम। ततः ततस्ततः प्रासादेभ्यो रामशोकाभितप्तानां दशरथस्त्रीणां मन्दं जल्पितं शुश्राव। रामेण सह निर्यातो रामं विनेहागतः सूतः शोचन्त्याः कौसल्यायाः किं नाम वक्ष्यति। बलात्कारेण पुत्रे निर्याते यतः कौसल्या जीवति ततो मन्ये जीवितवन्मरणमपि दुष्करमेव। राजस्त्रीणां नितान्तसत्यं तद् वाक्यं शृण्वन् सुमन्त्रः शोकेन प्रदीप्तमिव स्थितं तद् गृहं सहसा प्रविवेश। सः अष्टमीं कक्ष्यां प्रविश्य पाण्डरे गृहे पुत्रशोकपरिम्लानमातुरं राजानमपश्यत्। स आसीनं नरेन्द्रमभिगम्याभिवाद्य रामवचनं यथोक्तं प्रत्यवेदयत्। दशरथस्तूष्णीमेव तच्छ्रुत्वा विभ्रान्तचेतनो रामशोकाभिपीडितो मूर्छितो भूमौ निपपात।

नृपतौ मूर्छिते अन्तःपुरं बाधितं बभूव। सर्वाः स्त्रियो बाहू उद्धृत्य चुक्रुशुः। तदा सुमित्रया सहिता कौसल्या पतितं पतिमुत्थाप्योवाच। महाभाग! वनात्प्रत्यागतं दुष्करकारिणो रामस्येमं दूतं कस्मान्न प्रतिभाषसे? राघव! अनयं कृत्वाद्यैवं लज्जसे। सत्यवादिनस्ते पुण्यमस्तु। यद्येवं दुःखितस्तिष्ठसि कस्ते सहायो भवेत्? देव! यस्या भयात् सारथिं रामवार्तां नानुपृच्छसि सा कैकेयीह न तिष्ठति। विस्रब्धं प्रतिभाष्यताम्। बाष्पव्याकुलभाषिणी शोकाविग्ना कौसल्या महाराजं तथोक्त्वा सपदि धरण्यां निपपात। विलपन्तीं भुवि निपतितां कौसल्यां पतिं च दृष्ट्वा सर्वास्ताः स्त्रिय उच्चै रुरुदुः। तदा अन्तःपुरादुत्थितं रोदनध्वनिमाकर्ण्य वृद्धास्तरुणाः सर्वाः स्त्रियश्च समन्ततो रुरुदुः। तदा पुनरेव पुरं व्याकुलमासीत्।

## ५२

प्रत्याश्वस्तो मोहात् पुनः प्रत्यागतश्च राजा ततः सूतं रामवृत्तान्तं श्रावयितुमाजुहाव। कृताञ्जलिः सूतो दुःखितं वृद्धं परमसंतप्तं राममेवानुशोचन्तं नवगृहीतमिव द्विपं विनिःश्वसन्तमस्वस्थमिव कुञ्जरं ध्यायन्तं महाराजमुपातिष्ठत्[+]। रजसा ध्वस्ताङ्गमश्रुपूर्णमुखं दीनं समीपमागतं सूतं परमार्तो राजा पप्रच्छ। सूत! वृक्षमूलमुपाश्रितो धर्मात्मा रामः क्व नु वत्स्यति? अत्यन्तसुखितो रामः किमशिष्यति? भूमिपालात्मजः अनाथवत् कथं भूमौ शेते? यं यान्तं पदातिरथकुञ्जरा अनुयान्ति स्म स रामो विजनं वनमाश्रितः कथं वत्स्यति? रामलक्ष्मणौ वैदेह्या सार्धं व्यालैर्मृगैराचरितं कृष्णसर्पनिषेवितं वनं कथमुपस्थितौ? सुकुमार्या दीनया सीतया सह राजपुत्रौ रथादवरुह्य पादैः कथं गतौ? अश्विनौ मन्दरपर्वतवनमिवारण्यं प्रविशन्तौ ममात्मजौ त्वया दृष्टौ। तस्मात् त्वं कृतार्थोऽसि। सुमन्त्र!

---

[+] श्लोको ग्राह्यः। अथ सूतो महाराजं कृताञ्जलिरुपस्थितः। राममेवानुशोचन्तं दुःखशोकसमन्वितम्।

अरण्यमासाद्य रामः किमुवाच? लक्ष्मणः किमुवाच? सीता च किमुवाच? रामः कुत्रास्ते क्व शेते किं भुङ्क्ते? सर्वमेतत् कथय। इति नरेन्द्रेण पृष्टः सुमन्त्रो बाष्पावरुद्धया वाचा राजानमुवाच। महाराज! धर्ममेवानुपालयन् रामः अञ्जलिं कृत्वा शिरसा त्वां नमस्कृत्य मामुवाच। सूत! मद्वचनाद् महात्मनः पितुः पादौ शिरसा वन्दनीयौ। अविशेषेण सर्वमन्तःपुरं मद्वचनात् क्षेममभिवादनं च वाच्यम्। मम माता कौसल्या कुशलमभिवादनं चोक्त्वा ततः परमेवं वाच्या। देवि! महाराजं देववत् सेवस्व। भरतस्य मम कुशलं वाचयित्वा सर्वासु मातृषु यथान्यायं प्रवर्तस्वेति मम वचनं ब्रूहि। यौवराज्यस्थस्त्वं राजानं पितरमनुसृत्य राज्यं पालयेति स मम वाचा वक्तव्यः। इति मां ब्रुवन् रामो भृशमश्रूणि व्यहरत्। लक्ष्मणस्तु सुसंक्रुद्धो निःश्वसन् अयं राजपुत्रो रामः केनापराधेन विवासित इत्यपृच्छत्। लोभकारणेन वरदानकारणेन वा येन केनापि कारणेन यदि प्रव्राजितो रामः सर्वथा तद् दुष्कृतं कृतम्। रामस्य परित्यागे हेतुमहं न पश्यामि। अविवेकादसमीक्ष्य रामस्य विवासनं कृतम्। तन्नूनं दुःखं जनयिष्यति। अहं महाराजे पितृत्वं नोपलक्षये। राम एव मम भ्राता भर्ता बन्धुः पिता च। सर्वलोकप्रियः सर्वलोकहिते रतो रामस्त्वया त्यक्तः। अनेन कर्मणा त्वयि सर्वो लोकः कथमनुरज्येत? आत्माभिमानिनी जानकी निःश्वसन्ती भूतोपहतचित्तेवात्मानं विस्मृत्य स्थिता। अदृष्टपूर्वव्यसना दुःखेन रुदती मां किञ्चिदपि नोवाच। प्रयान्तं मामुद्वीक्ष्य परिशुष्यता मुखेन भर्तारं पश्यन्ती सहसा बाष्पं मुमोच। अश्रुमुखो रामः कृताञ्जलिर्लक्ष्मणबाहुमवलम्ब्यातिष्ठत्। तथैव दीना सीता रुदती राजरथं मां च निरैक्षत।

५३

वनं संप्रस्थिते रामे निवृत्तस्य ममाश्वा उष्णमश्रु विमुञ्चन्तो वर्त्मनि न प्रावर्तन्त। अथाहमुभाभ्यां राजपुत्राभ्यामञ्जलिं कृत्वा तद् दुःखं धारयन्

रथमास्थाय प्रस्थितः। रामः पुनर्मां शब्दापयेद्यदीति आशया तत्रैव गुहेन सार्धं बहून् दिवसान् स्थित आसम्*। महाराज! ते विषये वृक्षा अपि सपुष्पाङ्कुरकोरका रामव्यसनकर्शिताः परिम्लानाः। सत्त्वानि न चलन्ति। क्रूरमृगा न प्रसरन्ति। तद् वनं रामशोकपीडितं निष्कूजमभवत्। पद्मिन्यः कलुषोदका म्लानपद्मपत्राः सन्तप्तपद्मा लीनमीनविहंगमाः सन्ति। स्थलजानि च पुष्पाणि अल्पगन्धीनि नाद्य भान्ति। फलानि च पूर्ववन्न सन्ति। अयोध्यां प्रविशन्तं मां न कश्चिदभिनन्दति। राममपश्यन्तो जना मुहुर्मुहुर्निःश्वसन्ति। हर्म्यस्थिता नार्यो रथमवेक्ष्य रामादर्शनकर्शिता हाहाकारानकुर्वन्। आयतैर्विमलैरश्रुवेगपरिप्लुतैर्नेत्रैर्भृशमार्ताः स्त्रियः परस्परमभिवीक्षन्ते। रामविवासने शत्रुमित्रोदासीनान् सर्वान् समदुःखितानुपलक्षये। दुःखितमनुष्या दीनगजतुरङ्गमा आर्तस्वरपरिम्लाना निःश्वासनिःस्वना अयोध्या पुरी रामप्रव्राजनातुरा दुःखिता कौसल्येव मे प्रतिभाति। सूतस्य वचनं श्रुत्वा परमदीनया बाष्पोपहतया वाचा राजा तमुवाच। पापबन्धुजनया पापभावया कैकेय्या प्रेरितेन मया मन्त्रकुशलैर्वृद्धैः सह समालोचनं न कृतम्। सुहृद्भिरमात्यैर्नैगमैश्च अमन्त्रयित्वा मयेदं कार्यं स्त्रीहेतोः सहसा कृतम्। अथवेदं महद् व्यसनमवश्यंभावितया कुलस्यास्य विनाशायाकस्मात् प्राप्तम्। सुमन्त्र! यदि मया ते स्वल्पोऽप्युपकारः कृतोऽस्ति तर्हि मामाशु रामं प्रापय। प्राणा मां संत्वरयन्ति। यदि राज्येऽद्यापि ममैवाज्ञा प्रचलति तर्हि रामं निवर्तय। रामं विना मुहूर्तमपि जीवितुं न शक्ष्यामि। अथवा रामो बहुदूरं गतो भवति चेन्मामेव रथमारोप्य शीघ्रं रामाय दर्शय। वृत्तदंष्ट्रो महेष्वासो रामः क्वास्ति? एनं सीतया सह साधु यदि पश्येयं तर्हि जीवेयम्। लोहिताक्षं महाबाहुं धृतमणिकुण्डलं रामं यदि न पश्यामि यमक्षयं गमिष्यामि। एवं दुःस्थितोऽहं

---

* द्रष्टव्यः ५७ सर्गः।

राघवमिक्ष्वाकुकुलनन्दनमिह न पश्यामि। किमतो दुःखतरं स्यात्? हा राम! हा लक्ष्मण! हा दीने सीते! मां दुःखेनानाथवन्म्रियमाणं न जानीथ। देवि कौसल्ये! जीवता मया शोकसागरो दुस्तरः। दिदृक्षमाणोऽहमद्य सलक्ष्मणं रामं न लभे। इदं महत् कष्टम्। इति राजा विलपन् मूर्छितस्तूर्णं शयने पपात। एवं रामहेतोः करुणं द्विगुणं च विलप्य नृपे मूर्छिते कौसल्या भयमगमत्।

५४

ततः कौसल्या भूताविष्टेव वेपमाना गतचैतन्येव धरण्यां पुनःपुनः पतन्ती सुमन्त्रमब्रवीत्। रामः सीता लक्ष्मणश्च यत्र सन्ति तत्र मां नय। तान् विना क्षणमपि जीवितुं नोत्सहे। रथं शीघ्रं निवर्तय। मामपि दण्डकान् नय। अथ यदि तान् नानुगच्छामि यमक्षयं गमिष्यामि इति। बाष्पवेगोपहतया गद्गदया वाचा देवीमाश्वासयन् प्राञ्जलिः सूतः अब्रवीत्। शोकं मोहं दुःखजनितां व्याकुलतां च त्यज। दुःखं विसृज्य रामो वने वत्स्यति। धर्मज्ञो लक्ष्मणश्च वने जितेन्द्रियः सन् रामस्य पादौ परिचरन् परलोकं साधयति। सीता विजने वनेऽपिं गृहेष्विव वासं प्राप्य रामे सन्न्यस्तमानसा अभीता विश्वासं लभते। सीतायाः सुसूक्ष्ममपि दैन्यं न लक्षये। सा प्रवासानामभ्यस्तेव मे प्रतिभाति। पुरा नगरोपवनं गत्वा यथा रमते स्म तथैव निर्जनेषु वनेष्वपि सा रमते। पूर्णचन्द्रानना+ सीता विजनेऽपि वने सती हृष्टात्मा बालेव रामे रमते। अस्या हृदयं तद्गतं जीवितं च तदधीनम्। अयोध्यापि रामहीना तस्या वनं भवेत्। मार्गे वैदेही ग्रामान् नगराणि नदीप्रवाहान् विविधान् पादपांश्च परिपृच्छति। तस्याश्चन्द्रांशुसदृशी प्रभा प्रयाणेन वातवेगेन संभ्रमेणातपेन च नापगच्छति।

---

+ cr सीता बालचन्द्रनिभानना। सीताबालचन्द्रनिभानना इति पाठ्यः। अबालचन्द्र इति पदच्छेदः।

वैदेह्याः शतपत्रसदृशं पूर्णचन्द्रोपमं वदनं न विकम्पते। अलक्तरसरक्ताभौ अलक्तरसवर्जितौ तस्याश्चरणावद्यापि पद्मकोशसमप्रभौ स्तः। नूपुरशिञ्जितविलासयुक्तेव* सा सखेलं गच्छति। रामगतरागादिदानीमपि सा भूषणानि धरति+। अरण्ये सीता रामबाहुसंश्रिता गजं सिंहं व्याघ्रं वा वीक्ष्य न संत्रसति। तस्मात् ते स्वयमात्मा जनाधिपश्च न शोच्याः। इदं चरितं लोके शाश्वतीं प्रतिष्ठां प्राप्स्यति। ते शोकं विधूय हृष्टमानसा वने रताः। वन्यफलाशनाः पितुः शुभां प्रतिज्ञां परिपालयन्ति। तथा सुयुक्तवादिना सूतेन निवार्यमाणापि कौसल्या सुतशोककर्शिता प्रियेति पुत्रेति रामेति क्रोशान्नैव विरराम।

५५

पुनः कौसल्या भर्तारमाह। महाराज! सानुक्रोशो वदान्यः प्रियवादी त्वमिति त्रिषु लोकेषु प्रथितं ते महद् यशः पुत्रप्रव्राजनात् प्रणष्टमिव लक्षये[2+]। कथं सुखसंवृद्धौ तौ पुत्रौ सीतया सह वने दुःखं सहिष्येते? तरुणी सुखोचिता मैथिली कथमुष्णं शीतं च प्रसहिष्यते? सूपदंशान्वितं शुभमशनं भुक्त्वा वन्यं नैवारमाहारं कथं सा भोक्ष्यते? शुभं गीतवादित्रनिर्घोषं श्रुत्वा कथं सा क्रव्यादानां सिंहानां च भयंकरं शब्दं श्रोष्यति? महेन्द्रध्वजोन्नतो महाभुजो रामः परिघसंकाशं भुजमुपधाय क्व नु शेते? पद्मवर्णं सुकेशान्तं पद्मनिःश्वासं पुष्करेक्षणं रामस्य मुखं कदा द्रक्ष्यामि? नूनं वज्रसारेण निर्मितं मे हृदयं यदिदं तमपश्यन्त्याः सहस्रधा न फलति। यदि पञ्चदशे वर्षे रामो वनान्निवर्तिष्यते तदा भरतो राज्यं कोशं च जह्यादिति नोपलक्षये[3+]। यद्यपि जह्यात् तथापि भरतेनोपभुक्तं राज्यं

---

* नूपुरोद्घुष्टहेलेव। इव एवार्थे इति महेश्वरतीर्थः।

+ Cr तद्रागान्यस्तभूषणा। तद्रागान्नयस्तभूषणा इति पाठ्यः।

[2+] Cr यद्यपि। ग्राह्यः- यदिदम्। पङ्क्तिश्च ग्राह्या- पुत्रप्रव्राजनात् तत् ते प्रनष्टमिव लक्षये। [3+] Cr भरते नोपभोक्ष्यते। ग्राह्यः- भरतो नोपलक्ष्यते।

रामो विसृजेन्न तु स्वीकुर्यात्। एवं बलात्कारेणाच्छिद्य कनीयसा भ्रात्रा भुक्तं राज्यं ज्येष्ठो वरिष्ठश्च भ्राता किमर्थं नावमंस्यते? परेणाहृतं भक्ष्यं व्याघ्रो न खादितुमिच्छति। एवमेव नरव्याघ्रो रामः परलीढं नाङ्गीकरिष्यति। हविराज्यं पुरोडाशः कुशाः खादिरा यूपाश्च यातयामानि यज्ञे पुनर्नोपयुज्यन्ते। तथा रामः अन्यगृहीतमिदं राज्यं हृतसारां सुरां नष्टसोममध्वरमिवाङ्गीकर्तुं नालम्। बलवान् शार्दूलो वालधेरवमर्शनमिव राघव एवंविधमवमानं न मर्षयिष्यति। तादृशः सिंहबलो वृषभाक्षः स नरर्षभो मत्स्येनात्मजवत् पित्रैव स्वयं हतः। धर्मनिरतः पुत्रस्त्वया विवासितः। किमयं शास्त्रदृष्टो ब्राह्मणाचरितः सनातनो धर्मः? राजन्! नार्याः प्रथमा गतिः पतिः। द्वितीया गतिः पुत्रः। तृतीया गतिः पितृभ्रात्रादिबन्धुवर्गः। चतुर्थी गतिर्न विद्यते। कैकेयीवशं गतस्त्वं मे नास्ति*। रामश्च वनमाश्रितः। त्वां सेवमाना नाहं वनं गन्तुमिच्छामि। त्वया सर्वथा हतास्मि। त्वया सराष्ट्रं राज्यमिदं हतम्। मन्त्रिभिः सह स्वयं हतोऽसि। सपुत्राहं हतास्मि। पौरा हताः। तव सुतो भरतो भार्या कैकेयी च प्रहृष्टौ। दारुणशब्दसंश्रितामिमां गिरं निशम्य दुःखितो राजा मुमोह। तदा शोकमग्नः स स्वदुष्कृतं सस्मार।

## ५६

क्रुद्धया दुःखार्तया राममात्रैवं परुषं वाक्यं श्रावितो राजा दुःखितश्चिन्तयामास। चिन्तयतस्तस्य स्वेन शब्दवेधिना अज्ञानात् कृतं दुष्कृतं प्रत्यभात्। तेन शोकेन रामशोकेन च द्वाभ्यां दह्यमानो दशरथः कौसल्यामाह। कौसल्ये! त्वां प्रार्थये। अयमञ्जलिर्मया रचितः। त्वं परेष्वपि नित्यं वत्सला दयामयी च। देवि! धर्मं विमृशन्तीनां नारीणां गुणवान् निर्गुणोऽपि वा भर्ता प्रत्यक्षं

---

* तत्र त्वं चैव मे नास्ति इति cr पाठः। तत्र गतित्वेन परिगणितेषु त्वं मे नास्ति। अस्तीति विभक्तिप्रतिरूपकमव्ययम्। मे नास्तीति पाठः सम्यक्। इत्यत्र गोविन्दराजः। नासीति पाठान्तरम्।

दैवतं खलु। नित्यं धर्मपरा लोकसुवृत्तदुर्वृत्तज्ञा त्वं दुःखितापि सुदुःखितं मां कठिनं वक्तुं नार्हसि। दीनस्य भर्तुस्तत् करुणं वाक्यं श्रुत्वा कौसल्या प्रणाली नवोदकमिव बाष्पं व्यसृजत्। सा रुदती राज्ञः पद्मवदञ्जलिं शिरसि बद्ध्वा त्रस्ता संभ्रमात् त्वरमाणाक्षरमुवाच। देव! भूमौ निपतिता शिरसा याचे। त्वया याचिता हतास्मि। न खल्वहं त्वया हन्तव्या। श्लाघनीयेन धीमता पत्या या सम्प्रसाद्यते सा स्त्री इहपरलोकयोरुभयोर्भ्रंश्यति। धर्मज्ञ! अहं धर्मं जानामि। त्वां सत्यवादिनं जाने। परन्तु पुत्रशोकार्तया मया तत् किमपि भाषितम्। शोको धैर्यं शास्त्रज्ञानं सर्वं च नाशयति। शोकसमो रिपुर्नास्ति। शत्रुहस्तादापतितः प्रहारः सोढुं शक्यः। आपतितः शोकः सुसूक्ष्मोऽपि सोढुं न शक्यः। वनवासगतस्य रामस्याद्य पञ्च रात्रयो गण्यन्ते। शोकहताया ममायं कालः पञ्चवर्षोपमोऽस्ति। तं चिन्तयमानाया मम हृदि शोको नदीनां वेगेन महत् समुद्रसलिलमिव वर्धते। एवं कौसल्यायां सुवचः कथयन्त्यां सूर्यो मन्दरश्मिर्बभूव रजनी चाभ्यवर्तत। देव्या कौसल्यया तथा प्रसादितो+ नृपः शोकाक्रान्तो निद्राया वशमेयिवान्।

५७

अथ स्वल्पकालेन प्रतिबुद्धो दशरथः शोकोपहतचेतनश्चिन्तयामास। रामलक्ष्मणयोर्विवासाद् वासवोपमं तमसुरो राहुः सूर्यमिव महानुपद्रव आविवेश। रामवनगमनात् षष्ठ्यां* रजन्यां सः अर्धरात्रे स्वकृतं दुष्कृतं संस्मरन् पुत्रशोकार्तां कौसल्यामिदमब्रवीत्। कल्याणि! शुभं वा यदि वाशुभं कर्ता यदाचरति तदेवात्मनः कर्मजं सुखं वा दुःखं वा लभते। यः

---

+cr एवं प्रह्लादितो। ग्राह्यः – एवं प्रसादितो। *रामविवासनादयं षष्ठो दिवस इति ५७–३, ५६–१४ श्लोकाभ्यां सुष्ठु ज्ञायते। अतः ५३–३ श्लोकः अश्रद्धेयो यत्र सुमन्त्रो बहुदिनानि मया स्थितमिति दशरथमुवाच। रामेण सह सुमन्त्रो दिनद्वयं स्थितवान् तृतीयदिवसे प्रतिनिवर्तितः।

कर्मणामारम्भे अर्थानां गुरुलाघवं फलं दोषं वा न जानाति स मूढ उच्यते। कश्चिद्रम्यं पलाशपुष्पं दृष्ट्वा फलमपि तदनुरूपं भवेदिति मत्वा तत्फले गृध्नुराम्रवणं छित्वा यदि पलाशान् निषिञ्चति स फलागमे शोचति। सोऽहमाम्रवणं छित्वा पलाशवृक्षान् जलसेचनेन व्यवर्धयम्। दुर्मतिः फलागमे रामं त्यक्त्वा पश्चाच्छोचामि। कौसल्ये! शब्दवेधी युवेति लब्धयशसा धनुष्मता मयेदं पापं कृतम्। स्वयंकृतं तदिदं दुःखं मेऽनुसंप्राप्तम्। संमोहाद् बालेन यथा विषं भक्षितं स्यात् तथा शब्दवेध्यसंभवं फलं मेऽविज्ञातमभवत्। देवि! तदा त्वमनूढा। अहं युवराज आसम्। ततो मम मनःसंहर्षिणी[+] प्रावृडनुप्राप्ता। रविर्भौमान् रसान् गृहीत्वा जगदंशुभिस्तप्त्वा च परेतसंचरितां भीमां दक्षिणां दिशं प्रविवेश। सद्य उष्णमन्तर्दधे जलपूर्णाः स्निग्धा मेघा ददृशिरे। सर्वे भेकचातकबर्हिणो जहृषुः। हरिणयूथयुतः पतितेनासकृत्पतता च जलेन छन्नः पर्वतस्तोयराशिरिवाबभौ। अतिसुखे तस्मिन् काले मृगयाकृतसंकल्पः धनुर्बाणधरो रथेन सरयूं नदीमनुसृत्यागाम्। विचारहीनोऽहं तस्मिन् जलपानघट्टे नद्यां रात्रावभ्यागतं महिषं गजमन्यं श्वापदं वा जिघांसुरासम्। तदान्धकारे अचक्षुर्विषये नर्दतो वारणस्येव सरसि जलेन पूर्यमाणस्य कुम्भस्य ध्वनिमश्रौषम्। ततोऽहं गजप्रेप्सुर्दीप्तमाशीविषोपमं शरमुद्धृत्य शब्दं प्रत्यभिलक्ष्यापातयम्[2+]। तत्रोषसि हा हेति तोये पततो वनौकसो मानुषी व्यक्ता वागभूत्। अस्मद्विधे तपस्विनि कथं शस्त्रं निपतेत्? अहं जलं नेतुं रात्रौ निर्जनां नदीमागतोऽस्मि। इषुणा केनाहमभिहतः? मया कस्य किं वा कृतम्? अहिंसकस्य वने वन्येन जीवतो मद्विधस्य ऋषेः शस्त्रेण वधः कथं नु विधीयते? जटाभारधरस्य वल्कलाजिनवाससो

---

[+]cr मदकामविवर्धिनी। ग्राह्यः – मनःसंहर्षिणी मम।

[2+] पङ्क्तिर्ग्राह्या। शब्दं प्रति गजप्रेप्सुरभिलक्षमपातयम्।

मम वधं कोऽपेक्षते? कस्य किं वा मयापकृतम्?गुरुतल्पगमिवैनं न कोऽपि साधु मन्येत। आत्मनो जीवितक्षयं तथा नानुशोचामि यथा मद्वधे मातरं पितरं चोभौ। मयि मृते मया चिरकालभृतं वृद्धं तन्मिथुनं कथं जीविष्यति? वृद्धौ मातापितरावहं चैकेषुणा हताः। विवेकहीनेन मूढेन केन सर्वे वयं निहताः स्मः? करुणां तां गिरं श्रुत्वा धर्मासक्तस्य व्यथितस्य मम कराभ्यां सशरं धनुर्भुवि पपात। नष्टसत्त्वः सुदुःखितोऽहं तं देशं प्राप्य सरय्वास्तीरे बाणेन हतं तापसमपश्यम्। त्रस्तं क्षुब्धमानसं मां तेजसा दिधक्षन्निव नेत्राभ्यामुद्वीक्ष्य स परुषं वच एवमुवाच। राजन्! गुर्वर्थं जलं जिहीर्षुरहं त्वया ताडितः। वने निवसता मया तव किमपकृतम्? एकेन बाणेन मयि मर्मण्यभिहते वृद्धावन्धौ मम माता पिता द्वौ च निहतौ। दुर्बलावन्धौ पिपासितौ तावहं जलमानयामीत्याशया कष्टां तृष्णां चिरं संधारयिष्यतः। नूनं तपसो वा श्रुतस्य वा फलयोगो नास्ति यतो मे पिता भुवि पतितं शयानं मां न जानाति। अशक्तश्चालितुमप्यसमर्थो मे पिता जानन्नपि किं कुर्यात्? भिद्यमानमेकं वृक्षमन्यो वृक्षः कथं त्रायेत? राघव! त्वमेव शीघ्रं गत्वा मे पितुराचक्ष्व। यद्येवं कुर्यास्तर्हि वर्धितो वह्निर्वनमिव क्रुद्धस्त्वां न दहेत्। राजन्! इयमेकपदी यतो मे पितुराश्रमोऽस्ति। त्वं गत्वा तं प्रसादय। कुपितः स त्वां न दहेत्। मम देहाद् बाणमुत्कर्ष। जलवेग उन्नतं मृदु तीरमिव निशितः शरो मे मर्म पीडयति। नाहं द्विजः। तव मनसो व्यथा मा भूत्। वैश्येन शूद्रायां जातोऽस्मि। बाणाभिहतमर्मणः कृच्छ्रादेवं वदतो बाधया आनम्यमानस्य तस्य देहादहं शरमुदहरम्। जलार्द्रगात्रं बाधया विलप्य सन्ततमुच्छ्वसन्तं मर्मणि व्रणितं सरयूतीरे शयानं तं समीक्ष्याहं भृशं दुःखित आसम्।

५८

अज्ञानादहं तन्महत् पापं कृत्वा व्याकुलेन्द्रियः कथं नु पापविमुक्तिर्भवेदिति एको बुद्ध्याचिन्तयम्। ततः परमवारिणा पूर्णं तं घटमादाय यथाख्यातपथं

प्राप्याहं तमाश्रममगमम्। तत्राहं दुर्बलावन्धौ वृद्धौ तस्य पितरावपश्यम्। सर्वदा हस्तग्राहं नेयौ तौ लूनपक्षौ द्विजाविवास्ताम्। परिक्रमणाशक्तौ तावनाथवद् दीनौ पुत्रमुद्दिश्य संभाषणपरावासाताम्। परन्तु तयोराशा मया छिन्ना। मम पदशब्दं श्रुत्वा मुनिः पुत्र! किं चिरायसे? क्षिप्रं पानीयमानयेत्यभाषत। तात! यावत् त्वया सलिले क्रीडितं तावत्ते माता उत्कण्ठते। तस्मात् क्षिप्रमाश्रमं प्रविश। मात्रा मया वा यत्तेऽप्रियं कृतं तपस्विना त्वया तन्मनसि न कर्तव्यम्। गतिहीनयोरन्धयोरावयोस्त्वं गतिः। आवयोः प्राणास्त्वयि समासक्ताः। कथं नौ किञ्चिन्नाभिभाषसे? इत्यब्रवीत्। अहं तं मुनिं प्रेक्ष्य नितान्तं भीतः अव्यक्तया अप्रसरन्त्या हीनाक्षरया वाचाब्रुवम्। मनोवाक्कायान् स्थिरीकृत्य पुत्रदुःखजं भयं तस्मै अकथयम्। दशरथो नाम क्षत्रियोऽहम्। महात्मनस्ते पुत्रो नास्मि। सज्जननिन्दितमिदं दुःखं मया स्वकर्मणा प्राप्तम्। भगवन्! अहं चापहस्तः निपाने आगतं कञ्चित्[+] श्वापदं गजं वा जिघांसुः सरयूतीरमागतोऽस्मि। ततो मया सरसि जलेन पूर्यमाणस्य कुम्भस्य शब्दः श्रुतः। द्विपोऽयमिति मत्वा मया बाणेनाभिहतः। ततो नदीतीरं गत्वा बाणेन हृदि विनिर्भिन्नं गच्छत्प्राणं भुवि शयानं तापसमपश्यम्। भगवन्! शब्दमालक्ष्य गजजिघांसुना मया जलं प्रति नाराचो विसृष्टः। तेन ते सुतो निहतः। उद्धृते बाणे स तत्रैव स्वर्गमगमत्। म्रियमाणो भगवन्तावुभावन्धाविति शुशोच विललाप च। अज्ञानात् सहसा भवतः पुत्रो मया हतः। एवं गते यन्मया सम्प्रति करणीयं तन्मुनिरनुगृह्णातु। क्रूरं तद् वचः श्रुत्वा मुनिः शोककर्शितो निःश्वसन् कृताञ्जलिमुपस्थितं मामुवाच। राजन्! इदं पापं कर्म यदि त्वं मे स्वयं न कथयेस्तर्हि सद्यस्ते मूर्धा सहस्रधा फलेत्। क्षत्रियेणानपराधिनो विशेषतो वानप्रस्थस्य ज्ञानपूर्वको वधो वज्रिणमपि

---

[+] cr श्वापदं किञ्चित्। ग्राह्यः – श्वापदं कञ्चित्।

स्थानात् च्यावयेत्। अज्ञानादिदं कृतं तेन जीवसि। जानता यदि कृतं राघवाणां कुलमपि न स्यात्। तव का गणना? नृप! आवां तं देशं नय। अद्यान्तिमदर्शनं रुधिरावसिक्ताङ्गं प्रकीर्णाजिनवाससं भुवि शयानं निस्संज्ञं धर्मराजवशं गतं तं पुत्रं द्रष्टुमिच्छावः। अथैकोऽहं तौ तं देशं नीत्वा भार्यया सह मुनिं पुत्रमस्पर्शयम्। तपस्विनौ तावात्मनः पुत्रमासाद्य स्पृष्ट्वा तस्य शरीरे निपेततुः। तस्य पिता चेदमब्रवीत्। धार्मिक! पुत्र! यद्यहं ते प्रियो नास्मि+ मातरं पश्य। किं नु नालिङ्गसे? सुकुमार! मां प्रति भाषस्व। अपररात्रे वेदमन्यद् वा अधीयानस्य कस्य मधुरस्वरमहं श्रोष्यामि? पुत्र! स्नात्वा सन्ध्यामुपास्य अग्निहोत्रं कृत्वा समीपे आसीनः कः शोकभयार्दितं मां श्लाघयिष्यति? कन्दमूलानि फलानि च हृत्वा अकिञ्चित्करं वस्तुसंग्रहणाशक्तं चलनासमर्थं मां प्रियमतिथिमिव को भोजयिष्यति? वत्स! अन्धां वृद्धां दीनां पुत्रगर्धिनीं ते मातरं कथं भरिष्यामि? पुत्र! तिष्ठ! यमस्य सदनं प्रति मा गमः। श्वो मया जनन्या च सहितो यास्यसि। त्वया हीनावुभावपि शोकार्तौ वने अनाथौ क्षिप्रमेव यमक्षयं गमिष्यावः। ततो यमं दृष्ट्वा वक्ष्यामि। धर्मराजो मे क्षमताम्। मम पुत्रं मुञ्च येन स पितरौ बिभृयात्। पुत्र! पापकर्मणा निहतस्त्वमपापोऽसि। तेन सत्येन शस्त्रयोधिनां ये लोकाः सन्ति तान् गच्छ। संग्रामेष्वनिवर्तिनः अभिमुखा हता यां गतिं यान्ति तां परमां गतिं व्रज। यां गतिं सगरः शैब्यो दिलीपो जनमेजयो नहुषो धुन्धुमारश्च प्राप्तास्तां गतिं गच्छ। समस्तसत्पुरुषाणां या गतिः स्वाध्यायात्तपसश्च या गतिः भूदानकृत आहिताग्नेरेकपत्नीव्रतस्य च या गतिः गोसहस्रप्रदातॄणां पूज्यपोषकाणां देहत्यागिनां* च या गतिस्तां

---

+cr नन्वहम्। ग्राह्यः – न त्वहम्।

* महाप्रस्थानादिना यद्वा परलोकप्राप्तिसंकल्पपूर्वकं गङ्गायमुनादौ जलेऽग्नौ वा तनुं त्यजतामित्यर्थः इति गोविन्दराजः।

गतिं गच्छ। अस्मिन् कुले जातो दुर्गतिं नैव गच्छति। स एवं तत्रासकृत् कृपणं पर्यदेवयत्। ततो भार्यया सह पुत्रस्योदकक्रियां कर्तुं प्रवृत्तः। स मुनिपुत्रः स्वकर्मभिर्दिव्येन रूपेण मुहूर्तं पितरावाश्वास्य वाक्यमुवाच। भवतोः परिचर्यया महत् स्थानं प्राप्तोऽस्मि। भवन्तौ च क्षिप्रं मम समीपमुपैष्यतः। जितेन्द्रियो मुनिपुत्र एवमुक्त्वा दिव्येन सुन्दराकृतिमता विमानेन क्षिप्रं दिवमारुरोह। स तापसो भार्यया सह तूर्णमुदकं कृत्वा कृताञ्जलिमुपस्थितं मामुवाच। राजन्! यदेकपुत्रं मां शरेणापुत्रमकार्षीरद्यैव मां जहि। मरणे मे व्यथा नास्ति। त्वया अविज्ञानान्मे शुचिः सुतो निहतः। तस्मात् त्वामतिदारुणं शप्स्यमि येन सुदुःखमवाप्स्यसि। यथा मम साम्प्रतं पुत्रव्यसनजं दुःखं प्रवर्तते तथा त्वमपि पुत्रशोकेन कालं करिष्यसि। इति। भद्रे! कौसल्ये! तस्मादद्याहं पुत्रशोकेन जीवितं संत्यक्ष्यामि। उदारस्य तस्य मुनेर्वचोऽद्य ममागतम्। अपि रामो मां संस्पृशेत्? अद्य सकृत् समीपमागच्छेत्? न न। यन्मया तस्य कृतं तेनैवं न भवति। कौसल्ये! त्वां चक्षुषा न पश्यामि। मम स्मृतिर्विलुप्यते। यमदूता मां त्वरयन्ति। अहं जीवितक्षये धर्मज्ञं सत्यपराक्रमं रामं न पश्यामि। अतो दुःखतरं किं नु स्यात्? पञ्चदशे वर्षे ये चारुशुभकुण्डलं रामस्य मुखं पुनर्द्रक्ष्यन्ति ते देवा न मानुषाः। पद्मपत्रेक्षणं सुभ्रु सुरदनं चारुनासिकं चन्द्रनिभं रामस्य मुखं धन्या द्रक्ष्यन्ति। निवृत्तवनवासमयोध्यां पुनरागतं रामं स्वोच्चमार्गगतं शुक्रमिव सुखिनो द्रक्ष्यन्ति। आत्मभवोऽयं शोकः अनाथमचेतनं मां नदीरयः कूलमिव वेगेन विनाशयति। हा महाबाहो राघव! हा ममायासनाशन! इति विलपन् राजा दशरथो जीवितान्तमुपेयिवान्। उदारदर्शनो नराधिपो दीनं कथयन् प्रियपुत्रविवासनातुरः अर्धरात्रे गते भृशदुःखपीडितस्तदा प्राणं जहौ।

# ५९ *

रात्र्यां व्यतीतायामपरेऽहनि प्रातरेव वन्दिनो राजनिवेशनमुपाजग्मुः। ततः परिशुद्धाचारा राजसेवानिपुणाः स्त्रीवर्षवरभूयिष्ठा जना यथापुरमुपतस्थुः। स्नानशिक्षाविदः हरिचन्दनसम्पृक्तमुदकं काञ्चनैर्घटैर्यथाकालं यथाविधि आनिन्युः। कुमारीबहुलाः स्त्रियो मङ्गलविलेपनानि दन्तधावनवस्तूनि दर्पणवस्त्रभूषणादीनि चोपनिन्युः। अथ राज्ञः शयनसमीपस्थिता राज–भार्याः** शयनमुपगम्य भर्तारं प्रत्यबोधयन्। ता राज्ञः प्राणेषु शङ्किता वेपथुपरीताः प्रतिस्रोतस्तृणाग्राणां सदृशं प्रचकम्पिरे। अथ पार्थिवं दृष्ट्वा संवेपमानानां स्त्रीणां या अशुभशङ्का जाता सा निश्चिता बभूव। ततस्ता वराङ्गना अरण्ये नष्टयूथपाः करेणव इव दीनाः सस्वरं प्रचुक्रुशुः[3*]। तासामाक्रन्दशब्देन कौसल्या सुमित्रा च सहसा लब्धचेतने निद्रां तत्यजतुः। ते पार्थिवं दृष्ट्वा स्पृष्ट्वा च हा नाथेति परिक्रुश्य धरणीतले पेततुः। कौसल्या महीतले वेष्टमाना रजोध्वस्ता गगनच्युता तारेव नष्टकान्तिरदृश्यत। तदा दिष्टान्तं प्राप्तस्य राज्ञः सद्म सन्त्रस्तसम्भ्रान्तं पर्युत्सुकजनाकुलं सर्वतस्तुमुलाक्रन्दं परितापार्तबान्धवं च बभूव। पत्न्यो नृपं मृतं विज्ञाय संपरिवार्य सुदुःखिताः परस्परं हस्तौ गृहीत्वा अनाथवद् रुरुदुः।

---

* विलप्य विलप्य दशरथः प्राणांस्तत्याज। कौसल्या तस्य कथनं न शुश्राव न चान्येद्युः प्रातर्मृतं ददर्श किमिदमिति शङ्का जायेत। यद्यपि काव्ये प्रधाना एव विषयाः कथ्यन्ते तथापि कविनात्र किञ्चिद् वक्तव्यं न तूक्तमिति स्फुटमेव। परन्तु वाल्मीकेः रचनाविधानमेव तथा वर्तते। दशरथो यावद् विललाप तावद् रामायैव विललाप लक्ष्मणस्य सीताया वा कृते न विललाप। किमिदम्? विश्वामित्रेण सर्वाण्यस्त्राणि रामायैव दत्तानि लक्ष्मणायैकमपि न दत्तम्। तर्हि लक्ष्मण इन्द्रजिता दिव्यास्त्रैः कथमयुध्यत? तस्माल्लक्ष्मणाय च दत्तानीत्यूह्यम्। तथात्र कौसल्या पतिं श्रुतवतीत्यूह्यम्।

* स्त्रिय इति कथितम्। अष्टम ** श्लोकाधारेण मया भार्या इति लिखितम्।

६०

संशान्तमग्निमिवाम्बुहीनमर्णवमिव हतप्रभमादित्यमिव स्थितं स्वर्गस्थं राजानं प्रेक्ष्य बाष्पपूर्णाक्षी कौसल्या बहुविधशोककर्शिता राज्ञः शिर उपगृह्य कैकेयीं प्रति बभाषे। नृशंसे दुष्टचारिणि कैकेयि! सकामा भव। राजानं त्यक्त्वा राज्यैकस्पृहा भूत्वा अकण्टकं राज्यं भुङ्क्ष्व। रामो मां विहाय गतः। मम भर्ता च स्वर्गतः। विपथे सार्थहीनेवाहं जीवितुं नोत्सहे। त्यक्तधर्मणः कैकेय्या अन्यत्र का स्त्री आत्मनो दैवतं भर्तारं परित्यज्य जीवितुमिच्छेत्? अभक्ष्यं भक्षयन् लुब्धो तद्दोषान् न बुध्यते। तथा कुब्जामतिं स्वीकृत्य कैकेय्या राघवाणां कुलं हतम्। अनियोगे नियुक्तेन राज्ञा सभार्यं रामं विवासितं श्रुत्वा जनकोऽप्यहमिव परितप्स्यति। जीवन् रामो गृहाददृश्यतां गतः। दुःखानुचिता दीना सीता च वने उद्विजिष्यते। निशासु मृगपक्षिणां भयंकरघोषान् निशम्य सा नूनं रामं संश्रयिष्यते। वृद्धः अल्पपुत्रः स जनकश्च शोकसमाविष्टो वैदेहीमनुचिन्तयन् जीवितं त्यक्ष्यति। इत्थं भर्तारं संपरिष्वज्य विलपन्तीं कौसल्यामन्तःपुरकार्यनियुक्ताः स्त्रियस्ततो व्यपनिन्युः। अथादिष्टा अमात्या राजानं तैलद्रोण्यां संवेश्यानन्तरकार्याणि सर्वाणि चक्रुः। सर्वज्ञा मन्त्रिणः पुत्रेण विना राज्ञो दहनसंस्कारं कर्तुं नेषुः। तस्माद् भूमिपस्य शवं रक्षन्ति स्म। सचिवैस्तैलद्रोण्यां शायितं तं नराधिपं वीक्ष्य मृतं तमुद्दिश्य स्त्रियो हाहेति पर्यदेवयन्। स्रवद्बाष्पमुखा बाहूनुद्यम्य ताः कृपणं पर्यदेवयन्। नक्षत्रहीना निशेव भर्तृविवर्जिता स्त्रीव राज्ञा दशरथेन हीना अयोध्या पुरी कान्तिं जहौ। जना बाष्पपर्याकुला अभवन्। कुलाङ्गना हाहाभूताः। चत्वराणि गृहाणि च शून्यानि बभूवुः। इत्थमयोध्या पूर्ववन्नाशोभत। भास्करं विना द्यौरिव व्यपेतनक्षत्रगणा रात्रिरिव महात्मना दशरथेन रहिता बाष्पगद्गदजनव्या-कुलमार्गचत्वरा पुरी न बभासे। राज्ञि मृते नगर्यां पुरुषाः स्त्रियश्च संघशः समेत्य कैकेयीं विगर्हमाणा आर्ता बभूवुः।

६१

व्यतीतायां शर्वर्यां सूर्योदयानन्तरं राजाभिषेककर्तारो ब्राह्मणाः समेत्य राजसभां जग्मुः। मार्कण्डेयो मौद्गल्यो वामदेवः काश्यपः कात्यायनो गौतमो जाबालिश्चैते विप्रा अमात्यैः सह राजपुरोहितं वसिष्ठमभिमुखाः स्वस्वाभिप्रायं पृथगुदैरयन्। नृपे दशरथे पुत्रशोकेन पञ्चत्वमापन्ने वर्षशतोपमा रात्रिर्दुःखेनातीता। महाराजः स्वर्गतः। रामः अरण्यमाश्रितः। लक्ष्मणश्च रामेण सह गतः। भरतशत्रुघ्नौ केकयेषु राजगृहपुरे* मातामहनिवेशने स्तः। इक्ष्वाकुवंशीयानां कश्चिदिहाद्यैव राजा विधीयतां येनास्माकं राष्ट्रमराजकं भूत्वा विनाशं नावाप्नुयात्। अराजके जनपदे विद्युत्पङ्क्तियुतो महास्वनः पर्जन्यो महीं दिव्येन वारिणा नाभिवर्षति। अराजके जनपदे बीजमुष्टिर्न प्रकीर्यते। गृहमेधिनो वशे पुत्रः पत्नी वा न वर्तते। अराजके देशे धनं कस्यचिन्न भवति। भार्यापि स्वस्य न भवति। अन्यच्चेदमत्याहितमराजके देशे भवति यत्तत्र सत्यस्य पदं न भवति। अराजके देशे हृष्टा नराः सभां रम्यानारामान् देवालयान् धर्मशालाश्च न कारयन्ति। अराजके जनपदे यज्ञशीला दान्ता वेदाध्ययनसंपन्नाः संशितव्रता द्विजाः सत्राणि नान्वासते। अराजके जनपदे बहुनटनर्तकयुता राष्ट्रवर्धना उत्सवाः समावेशाश्च न वर्धन्ते। अराजके जनपदे न्यायस्थानेषु न्याया न सिद्ध्यन्ति। कथाप्रियाः कथकैर्नानुरज्यन्ते। अराजके जनपदे कामिनो नराः स्त्रीभिः सह शीघ्रगामिभिर्वाहनैरुपवनानि न निर्यान्ति। अराजके देशे कृषिगोरक्षणजीविनो धनवन्तः सुरक्षिता न भवन्ति। ते विवृतद्वारेषु गृहेषु न शेरते। अराजके जनपदे दूरगामिनो वणिजो बहुपण्यभारान् गृहीत्वा क्षेममध्वानं न गच्छन्ति। अराजके देशे एकचरः सायंस्थानवासी** जितेन्द्रियः परमात्मध्यानतत्परो न संचरति।

* राजगृहपुरमिदं मगधदेशीयादन्यत् स्याद्यतः केकयदेशो भारतात् पश्चिमोत्तरस्यामासीत्।

** यस्मिन् प्रदेशे सायंकालो भवति तत्र निवासी।

अराजके देशे योगक्षेमं न प्रवर्तते तथा सेना युधि शत्रून् न विषहते। अनुदका नद्य इव अतृणं वनमिव अगोपाला गाव इव अराजकं राष्ट्रं सीदति। अराजके देशे कस्यचित् स्वकं न भवति। नरा मत्स्या इव नित्यं परस्परं भक्षयन्ति। नृपे सति उल्लङ्घितसामाजिकनियमाः कृत्याकृत्यविचारशून्या लज्जाहीना जनाश्च राजदण्डनिपीडिताः साधुत्वाय कल्पन्ते। अहो! साध्वसाधुनी लोके व्यवस्थापयन् राजा यदि न भवेत् तर्हीदं तम इव स्यात् किञ्चन न प्रज्ञायेत। महाराजे जीवति वयं सर्वे सागरो वेलां प्राप्येव तव वचनं नातिक्रान्ताः स्मः। (सम्प्रत्यस्माकं विधेयता न पृथग् वक्तव्या।) हे ब्रह्मणश्रेष्ठ! स त्वं वृत्तं समीक्ष्य नृपं विना राज्यमरण्यभूतं विलोक्य त्वमेवेह योग्यमिक्ष्वाकुवंशकुमारमस्माकं राजानमभिषिञ्च।

६२

मार्कण्डेयादीनां वचनं श्रुत्वा वसिष्ठो मित्रामात्यगणान् सर्वान् ब्राह्मणांश्चेदं प्रत्युवाच। राज्ञा दत्तराज्यो+ भरतो भ्रात्रा शत्रुघ्नेन समेतः सुखी मातुलकुले वसति। शीघ्रं जवना दूता भ्रातरावानेतुं त्वरितैर्हयैर्गच्छन्तु। अस्मिन् विषये का विचारणा स्यादस्माकम्?* ते विप्रास्तथेत्यूचुः। तदा वसिष्ठो दूतानाकार्याह। सिद्धार्थ! विजय! जयन्त! अशोक! नन्दन! कार्यं ब्रवीमि। श्रूयताम्। इतः शीघ्रजवैर्हयैः शीघ्रं राजगृहं पुरं गच्छत। शोकमप्रदर्श्य भरतो मम शासनादिदं वाच्यः। पुरोहितस्त्वां कुशलं प्राह सर्वे मन्त्रिणश्च। त्वरमाणो निर्याहि। तवेह शीघ्रमवश्यकार्यमस्ति। भवन्तो गत्वा तस्मै रामविवासनं पितृमरणं राघवाणां क्षयं च मा शंसिषुः। केकयराजस्य भरतस्य चोपहारार्थं कौशेयानि वस्त्राणि वराणि भूषणानि चादाय क्षिप्रं गच्छन्तु। एवं वसिष्ठेनादिष्टा दूताः संत्वरिता ययुः। ते

---

+cr पुरे राजगृहे सुखी। ग्राह्यः – दत्तराज्यः परं सुखी। * राज्ञा राज्ये दत्ते वयं किं समीक्षामहे इत्यर्थः।

दूता हास्तिनपुरे गङ्गां तीर्त्वा प्रत्यङ्मुखा ययुः। पाञ्चालदेशं प्राप्य कुरुजाङ्गलदेशमध्यतः प्रसन्नोदकां दिव्यां नानाविहगसेवितां जनाकुलां शरदण्डां नदीं वेगेनातिजग्मुः। देवताधिष्ठितं सत्योपयाचनं नाम तीरस्थवृक्षमासाद्याभिवाद्य कुलिङ्गां पुरीं प्राविशन्। अभिकालं तेजोऽभिभवनं च ग्रामौ क्रान्त्वा बाह्लिकदेशमध्यस्थं सुदामपर्वतं ययुः। तद्देशस्थं विष्णुक्षेत्रं विपाशां नदीं शाल्मलीवृक्षं च ददृशुः। दूरेण मार्गेण श्रान्तवाहनास्ते दूतास्ततः पुरवरं गिरिव्रजमासेदुः। प्रभोः प्रियं कर्तुं राजकुलं प्रतिष्ठां च रक्षितुं ते दूता रात्र्यां तत् पुरं ययुः।

६३

ते दूता यस्यां रात्र्यां तां पुरीं प्राविशन् तस्यामेव रात्र्यां भरतेन दुष्टः स्वप्नो दृष्टः। रात्रेश्चरमयामे तं दुष्टस्वप्नं दृष्ट्वा भरतः सुभृशं पर्यतप्यत। तप्यमानं तं विज्ञाय प्रियवादिनो वयस्यास्तस्य संतापं विनेतुं सभायां प्रहसनभाषणानि चक्रुः। तस्य मनःशान्तिमुद्दिश्य केचन तन्त्रीवाद्यान्यवादयन्। केचन ननृतुः। अपरे नाटकानि प्रादर्शयन्। अन्ये विविधानि हास्यानि प्राहुः। भरतस्तैर्न प्राहृष्यत्। सखिभिर्वृतं तं कश्चित् सखापृच्छत्। सखे! सुहृद्भिः पर्युपासीनः किं न प्रमोदसे? श्रूयतां मम दैन्यकारणमिति तं भरतः प्रत्युवाच। स्वप्ने मलिनं मुक्तमूर्धजं पर्वतशिखरात् कलुषे गोमयह्रदे पतन्तं पितरमद्राक्षम्। तस्मिन् गोमयह्रदे प्लवमानः अञ्जलिना तैलं पिबन् मुहुर्मुहुर्हसन्निव च स मया दृष्टः। ततस्तिलमिश्रमन्नं भुक्त्वा पुनःपुनरधःशिरास्तैलाभ्यक्तसर्वाङ्गस्तैलमेवागाहत। अहं स्वप्ने सागरं शुष्कं चन्द्रं भुवि पतितं ज्वलितं जातवेदसं सहसा संशान्तं पृथिवीमवदीर्णां शुष्कान् विविधान् द्रुमान् विध्वस्तान् सधूमान् पर्वतांश्चापश्यम्। कार्ष्णायसे पीठे कृष्णवासा मम पिता निषण्णः। तं कृष्णाः पिङ्गलाश्च प्रमदाः प्रहसन्ति स्म। धर्मात्मा मे पिता रक्तमाल्यानुलेपनः खरयुक्तेन

रथेन दक्षिणामुखः प्रयातः। अस्यां रात्र्यां मया स्वप्ने सर्वमिदं भयावहं+ दृष्टम्। अहं रामो राजा लक्ष्मणो वा मरिष्यति। स्वप्ने यो नरः खरयुक्तेन यानेन याति तस्याचिरात् चितायां धूमशिखा संप्रदृश्यते। एतन्निमित्तमहं दीनोऽस्मि। ततो वो नाद्रिये। मम कण्ठः शुष्यतीव। मनो न स्वस्थमिव। आत्मानं जुगुप्सन्निवास्मि। न च कारणं पश्यामि। अदृष्टपूर्वामिमां स्वप्नगतिं वीक्ष्य राजानं प्रति भयं मम चित्तान्न निर्याति।

६४

तदा क्लान्तवाहनास्ते दूता असह्यपरिखं रम्यं राजगृहं प्रविश्य केकयराजेन राजपुत्रेण युधाजिता चार्चिता राज्ञः पादौ प्रणम्य भरतमूचुः। पुरोहितः सर्वे मन्त्रिणश्च त्वां कुशलं प्राहुः। त्वरमाणो निर्याहि। तव तत्र मुख्यं सपदि करणीयमस्ति। नृपात्मज! अत्र विंशतिकोटिमूल्यानि वस्त्राभरणादीनि केकयराजस्य देयानि। दशकोटिमूल्यानि मातुलस्य देयानि। सुहृज्जनानुरक्तो भरतस्तत् सर्वं प्रतिगृह्य दूतानिष्टवस्तुभिः संपूज्योवाच। मम पिता राजा दशरथः कच्चित् सुकुशली? कच्चिद् रामो लक्ष्मणश्च कुशलिनौ? आर्या धर्मनिरता राममाता कौसल्या कच्चिदारोग्यवती? धर्मज्ञा लक्ष्मणशत्रुघ्नयोर्माता मध्यमाम्बा सुमित्रा कच्चित् कुशलिनी? आत्मसुखाभिलाषिणी सदा तीव्रप्रवर्तना क्रोधना प्राज्ञमानिनी मे माता कैकेयी कच्चित् कुशलिनी?* सा किमुवाच? भरतेनैवमुक्तास्ते दूताः सप्रश्रयं तमूचुः। नरव्याघ्र! येषां कुशलमिच्छसि ते कुशलाः। दूतैरेवमुक्तो भरतस्तान् प्रत्युवाच। बाढम्। दूता मां त्वरयन्तीति राजानं विज्ञापयामि। एवमुक्त्वा मातामहसकाशं गत्वा प्राह। राजन्! दूतैरहं चोदितः। पितुः सकाशं गमिष्यामि। यदा मे त्वं स्मरिष्यसि तदा पुनरप्येष्यामि। मातामहो

---

+Cr भयावहाम्। ग्राह्यः – भयावहम्।

* सुतरामनुचितमिदं दूतानां पुरस्तान्मातृनिन्दाभाषणं भरतस्य।

राघवं शिरस्याघ्राय शुभं वाक्यमुवाच। तात! गच्छ। त्वामनुजाने। त्वया कैकेयी सुप्रजाः। मातरं पितरं च कुशलं पृच्छ। पुरोहितं वसिष्ठमन्यान् द्विजसत्तमान् भ्रातरौ रामलक्ष्मणौ च कुशलं पृच्छ। केकयराजो भरताय श्रेष्ठान् गजान् चित्रान् कम्बलानजिनानि धनं च सत्कृत्य ददौ। रुक्मनिष्काणां द्विसहस्रं हयानां शोडशशतानि चोपायनं ददौ। तथा अश्वपतिर्भरतायाभिप्रेतान् विश्वास्यान् गुणान्वितान् सदा समीपवर्तिनः अनुचरान् ददौ। मातुलो भरताय ऐरावतवंशभवान् इन्द्रशिरःपर्वत-भवांश्च प्रियदर्शनान् गजान् शीघ्रगमान् सुशिक्षितान् खरांश्चोपहाररूपेण ददौ। अन्तःपुरे अतिसंवृद्धान् व्याघ्रतुल्यवीर्यबलान्वितान् दंष्ट्रायुधान् महाकायान् शुनश्चोपायनं ददौ। भरतो मातामहं मातुलं युधाजितं चापृच्छ्य रथमारुह्य शत्रुघ्नसहितो ययौ। बहून् रुचिरान् रथान्[+] योजयित्वा उष्ट्रगोऽश्वखरैर्भृत्या यान्तं भरतमन्वयुः। सैन्येन गुप्तो भरत आत्मसमैरनुचरैः सह शत्रुघ्नमादाय पूज्यस्य मातामहस्य गृहाद् देवपुरुष इन्द्रलोकादिव ययौ।

## ६५

राजगृहात् प्राङ्मुखो भरतो निर्याय* दूरपारां ह्लादिनीं प्रत्यक्स्रोतस्तरङ्गिणीं शतद्रूं चातरत्। एलाधानग्रामे नदीं तीर्त्वा अपरपर्पटदेशं प्राप्य शिलाकर्षिणीं शिलावहां नदीं तीर्त्वा तत आग्नेयदिशायां शल्यकर्तनं नाम देशं जगाम। शिलावहां प्रेक्षमाणो महाशैलानतीत्य चैत्ररथवनं प्रति जगाम। ततो

---

[+]cr रथान् मण्डलचक्रांश्च। वर्तुलाकारचक्रान् रथानित्यर्थः। परन्तु चक्राणि सदा वर्तुलान्येव भवन्ति। मण्डलचक्रानिति विशेषणे को विशेषः? ग्राह्यः पाठः– रथानतिविचित्रांश्च।

* दूतास्त्वरिता लघुमार्गेण केकयदेशं जग्मुः। सैन्यसहितो भरतो दीर्घमार्गेणायोध्यां जगाम।

वेगवतीं पर्वतावृतत्वात् कलकलनादिनीं कुलिङ्गाख्यां नदीं तीर्णो यमुनां प्राप्य बलं व्यश्रामयत्। जलाप्लावनेन वाजिनां गात्राणि शीतीकृत्य क्लान्तांस्तानाश्वास्य स्वयं च तत्र स्नात्वा पीत्वा जलमादाय प्रायात्। जनसंचारहीनं महारण्यं भरतो भद्रेण यानेन मारुतः खमिवात्ययात्। ततो भरतस्तोरणस्य नाम प्रदेशस्य दक्षिणेन जम्बूप्रस्थं नाम ग्राममुपागमत्। ततो वरूथं नाम रम्यं ग्रामं ययौ। स तत्र रम्ये वने वासं कृत्वा प्राङ्मुख उज्जिहानानाम्नो नगरस्योद्यानं प्राप यत्र बहवः कदम्बवृक्षा आसन्। ततो भरतः सालवृक्षान् प्रियकवृक्षांश्च प्राप्य शीघ्रान् वाजिन आस्थाय सेनां पश्चादागन्तुमाज्ञाप्य त्वरितो ययौ। सर्वतीर्थनाम्नि स्थाने (एकरात्रं) वासं कृत्वा उत्तानिकां नाम नदीं विविधा अन्या नदीश्च पार्वतीयैस्तुरङ्गमैस्तीर्त्वा हस्तिपृष्ठकाख्यं* ग्रामं प्राप। ततः कुटिकानदीं लौहित्यग्रामे कपीवतीं नदीं च ततार। तत एकसालग्रामसमीपे स्थाणुमतीं नदीं विनतग्रामसमीपे गोमतीं नदीं च ततार। ततः कुलिङ्गनगरे सालवनं क्षिप्रमगच्छत्। तदा स सुपरिश्रान्तवाहनो बभूव। तत्र विश्रम्य शर्वर्यां वनं च समतीत्यारुणोदयसमये राज्ञा मनुना निर्मितामयोध्यां ददर्श। सप्तदिनप्रयाणेन सः अग्रतः अयोध्यां दृष्ट्वा सारथिमुवाच। पुण्योद्याना यशस्विनी यज्वभिर्गुणसंपन्नैर्वेद-पारगैर्ब्राह्मणैर्बहुभिः सम्पन्नैराकीर्णा राजर्षिपरिपालिता एषायोध्या वीथीषु जलसेचनसंस्काराभावात् पाण्डुमृत्तिका अस्पष्टेव मे दृश्यते। पुरायोध्यायां नरनारीणां महान् तुमुलः शब्दः समन्तात् श्रूयते स्म। तमद्याहं न शृणोमि। सायाह्ने पौरा उद्यानानि प्रविश्य क्रीडित्वोपरताः शीघ्रं स्वगृहं प्रति गच्छन्ति। इत्थमयोध्या मम दृष्टपूर्वा। कामिभिः परित्यक्तानि तान्युद्यानान्यद्य रुदन्तीव दृश्यन्ते। पुरी अरण्यभूतेव मे प्रतिभाति। यानैर्गजैर्वाजिभिर्गतागता नरमुख्या यथापुरं न दृश्यन्ते। अनिष्टान्यशुभान्यपशकुनानि बहून्यहं

---

* हस्तिनमारुह्य नदीं तीर्त्वेति च व्याख्या।

पश्यामि। तेन मे मनः सीदति। एवं वदन् श्रान्तवाहनो भरतो वैजयन्तद्वारेण पुरीं प्राविशत्। द्वाःस्थैरुत्थाय विजयमुक्तः+ तैः सहितो ययौ। प्रविचलन्मना भरतो द्वाःस्थं तं जनमादृत्य प्रतिनिवर्त्य क्लान्तं केकयसूतमब्रवीत्। सारथे! नृपतीनां विनाशने यादृशाः पूर्वं नः श्रुतास्तान् सर्वानाकारानहं पश्यामि। सर्वे स्त्रीपुरुषा मलिना अश्रुपूर्णाक्षा दीना ध्यानपराः कृशा उत्कण्ठिताश्च सन्ति। अयोध्यायामनिष्टानि दृष्ट्वा दीनमानसो भरतः सूतमेवमुक्त्वा राजगृहं जगाम। पूर्वमयोध्या इन्द्रपुरवत् प्रकाशमानासीत्। सम्प्रति चतुष्पथा गृहाणि वीथ्यश्च शून्याः। द्वारकवाटयन्त्रं धूलीधूसरम्। तादृशीं पुरीमयोध्यां दृष्ट्वा स दुःखेन संपूर्णतरो बभूव। अवाक्छिरा दुःखितश्च पितुर्वेश्म प्रविवेश।

६६

ततो भरतः पितुर्गृहे पितरमपश्यन् मातुर्गृहे मातरं द्रष्टुं जगाम। प्रोषितं सुतमागतं दृष्ट्वा हृष्टा कैकेयी सौवर्णमासनं त्यक्त्वोत्पपात। धर्मात्मा भरतः प्रविश्यैव शोभाहीनं स्वगृहं प्रेक्ष्य जनन्याः शुभौ चरणौ स्पृष्ट्वा नमश्चक्रे। सा तं मूर्धनि समुपाघ्राय परिष्वज्याङ्के आरोप्य प्रष्टुं समुपचक्रमे। मातामहगृहात् प्रस्थितस्य तेऽद्य कति रात्र्यो व्यतीताः? अपि शीघ्रं रथेनापततस्ते मार्गश्रमो नास्ति? पुत्र! अपि ते मातामहः सुकुशली? अपि ते मातुलो युधाजित् कुशली? तत्र ते वासः सर्वः सुखं व्यतीतः किम्? सर्वं वक्तुमर्हसि। एवं कैकेय्या प्रियया वाण्या पृष्टो भरतो मात्रे सर्वमाचष्ट। मातामहगृहात् प्रस्थितस्य मेऽद्य सप्तमी रात्रिः। अम्बायास्तातः कुशली युधाजिन्मे मातुलश्च। राजा मम मातामहो यद् धनं रत्नं च ददौ तद्वाहको जनो मार्गे परिश्रान्तोऽभवत्। अहं पूर्वमागतः। अहं राजवाक्यहरैर्दूतैस्त्वर्यमाण आगतः। अथेदानीं यदहं प्रष्टुमिच्छामि

+Cr विजयं पृष्टः। ग्राह्यः– विजयमुक्तः।

तदम्बा वक्तुमर्हति। हेमभूषितस्ते पर्यङ्कः शून्यः। अयं राजजनः प्रहृष्टो मे न प्रतिभाति। पिता प्रायः अम्बाया निवेशने भवति। किन्त्वद्य तमहं न पश्यामि। तं द्रष्टुमिच्छन्निहागतोऽस्मि। अम्ब! पितुश्चरणौ ग्रहीष्यामि। पृच्छतो मे तमाख्याहि। आहोस्विज्ज्येष्ठमातुः कौसल्याया निवेशनेऽस्ति किम्? सर्वं जानती राज्यलोभेन मोहिता कैकेयी घोरमप्रियमजानते भरताय प्रियवदाचख्यौ। तव पिता सर्वभूतानां या गतिस्तां गतिं गतः। धर्मवान् सद्वंशजातः शुचिर्भरतस्तद् वाक्यं श्रुत्वा पितृशोकेन भृशं पीडितः सहसा भूमौ पपात। ततो भरतः पितृमरणव्याकुलमतिर्विललाप। पितुरेतत् शयनं पुरा सुरुचिरं भाति स्म। अद्य तेन विहीनं न विभाति। तमार्तं भुवि पतितं कैकेयी उत्थाप्योवाच। महायशो! राजपुत्र! उत्तिष्ठोत्तिष्ठ। किं शेषे? त्वद्विधाः सभासम्मताः सन्तो न हि शोचन्ति। तदा बहुशोकावृतो भरतश्चिरं रुदित्वा भूमौ विपरिवृत्य च जननीमिदं प्रत्युवाच। राजा राममभिषेक्ष्यति यज्ञं नु यक्ष्यते इति मनसि ध्यायन् हृष्टः प्रयातोऽस्मि। तदिदमन्यथाभूतम्। मनो मम विदीर्णम्। नित्यं प्रियहिते रतं पितरं न पश्यामि। अम्ब! मय्यनागते पिता केन व्याधिना मृतः? रामादयो धन्या यैः पिता स्वयं संस्कृतः। कीर्तिमान् महाराजो मां प्राप्तं न जानाति। यदि जानाति ततः सत्वरं मां संनाम्य मूर्ध्न्युपजिघ्रेत्। रजसा ध्वस्तं मामभीक्ष्णं येन परिमार्जति सुखस्पर्शस्तातस्य स पाणिः क्व? यो मे भ्राता पितृतुल्य आप्तबन्धुश्च तस्य रामस्य मां शीघ्रमाख्याहि। धर्मं जानतः सतो ज्येष्ठो भ्राता पिता भवति। तस्य रामस्य पादौ ग्रहीष्यामि। स हीदानीं मम गतिः। आर्ये! मम पिता राजा किमब्रवीत्? आत्मनः पश्चिमं पितृसुसन्देशं[+] श्रोतुमिच्छामि। इति पृष्टा कैकेयी यथार्थमेवमब्रवीत्। सद्गतिमतां वरो महात्मा ते पिता रामेति हा सीते हा लक्ष्मणेति विलपन् परं लोकं गतः।

---

[+] Cr साधु सन्देशम्। पाठ्यः– साधुसन्देशम्।

तव पिता महाराजः पाशैरिव कालधर्मबद्ध इमां चरमां वाचं व्याजहार। सीतया सह पुनरागतं रामं लक्ष्मणं च धन्या द्रक्ष्यन्तीति। मातुस्तद् द्वितीयाप्रियवाक्यं श्रुत्वा भरतो दुःखाक्रान्तो भूत्वा भूयो मातरं पप्रच्छ। धर्मात्मा रामः सीतया लक्ष्मणेन च सह क्वेदानीं गतः? तथा पृष्टा तस्य माता प्रियमिति मत्वा विप्रियं वाक्यं सपदि वक्तुमुपचक्रमे। पुत्र! स रामः चीरवासा लक्ष्मणानुचरो वैदेह्या सह दण्डकारण्यं गतः। तच्छ्रुत्वा स्ववंशगौरवज्ञो भरतो भ्रातृचरित्रशङ्कया त्रस्तः पुनः पप्रच्छ। कच्चिन्न रामेण केनापि हेतुना ब्राह्मणधनं हृतम्? कच्चिदाढ्यो दरिद्रो वा अपापो तेन न हिंसितः? कच्चिद् रामः परदारान् नाभिमन्यते? स भ्रूणहेव कस्माद् दण्डकारण्ये विवासितः? अथ भरतस्य चपला माता स्त्रीस्वभावेन कृतं स्वकर्म श्रुत्वा पुत्रः प्रसन्नो भवतीति स्त्रीस्वभावेनैव विश्वस्य व्याहर्तुमुपचक्रमे। केनापि कारणेन रामेण किञ्चिद् ब्राह्मणधनं न हृतम्। आढ्यो दरिद्रो वा न कश्चित् तेनापापो हिंसितः। रामः परदारान् चक्षुर्भ्यां न पश्यत्यपि। पुत्र! मया तु रामस्याभिषेचनं श्रुत्वा तुभ्यं राज्यं रामस्य विवासनं च ते पिता याचितः। तव पिता स्वनियममवलम्ब्य तत् तथाकरोत्। लक्ष्मणेन सीतया च सह रामो वनं प्रेषितः। प्रियं पुत्रमपश्यन् राजा पुत्रशोकपरितप्तः पञ्चत्वं प्राप। धर्मज्ञ! त्वयेदानीं राजत्वमवलम्ब्यताम्। मया त्वत्कृते एवंविधमिदं सर्वं कृतं हि। तत् पुत्र! विधिज्ञैर्वसिष्ठमुख्यैर्द्विजेन्द्रैः सहितो राजानं विधिना संस्कृत्य अविक्लब आत्मानमुर्व्यामभिषेचय।

६७

पितरं मृतं भ्रातरौ विवासितौ च श्रुत्वा दुःखसन्तप्तो भरत इदमब्रवीत्। पित्रा पितृसमेन भ्रात्रा च विहीनोऽस्मि। कष्टमग्नः शोचामि। ममेदानीं राज्येन किं नु कार्यम्? राजानं मृतं रामं तापसं च कृत्वा मम दुःखस्योपरि दुःखमकरोः। व्रणे क्षारमादधा इव। त्वं कुलस्याभावाय कालरात्रिरिवागतासि।

मम पिता अङ्गारमुपगूह्य नावबुद्धवान्। मम जनन्यास्तव कारणेन पुत्रशोकाभिपीडिते कौसल्या सुमित्रा च यदि जीवेतां तद् दुष्करमेव। धर्मात्मा मम ज्येष्ठभ्राता गुरुजनेषु प्रवर्तनविधिं सम्यग् जानाति। स त्वयि स्वमातरीवानुत्तमां वृत्तिं वर्तते। तथा दीर्घदर्शिनी माता कौसल्या धर्मं समास्थाय त्वयि भगिन्यामिव वर्तते। पापे! तस्याः पुत्रं शोभनमतिं रामं चीरवल्कलवाससं वनवासाय प्रस्थाप्य कथं न शोचसि? सर्वहितकरं शूरं बुद्धिमन्तं यशस्विनं रामं चीरवसनं प्रव्राज्य किं फलं त्वया दृष्टम्? मम रामे कीदृशी भक्तिरस्तीति लुब्धायास्ते न ज्ञातम्। तस्माद् राज्यार्थं त्वया महानयमनर्थः संपादितः+। पुरुषव्याघ्रौ रामलक्ष्मणावपश्यन्नहं केन शक्तिप्रभावेण राज्यं रक्षितुं समर्थो भवेयम्? महाराजो नित्यं बलवन्तं रामं मेरुर्मेरुवनमिवाश्रितो* वर्तते स्म। तस्मादहं महावृषभसमुद्धृतं भारं प्राप्य दम्य इव केनौजसा वहेयम्? सामाद्युपायैर्बुद्धिबलेन च मे राज्यनिर्वहणशक्तिर्भवेदिति यदि त्वं मन्यसे तर्हि पुत्रगर्धिनीं त्वामहं सकामां न करिष्यामि। स्वजनप्रियं भ्रातरं वनान्निवर्तयिष्यामि। इत्युक्त्वा महात्मा भरतः अप्रियैर्बहुभिर्वाक्यैस्तां तुदन् शोकातुरो भूत्वा पर्वतगुहास्थितः सिंह इव भूयश्च ननाद।

६८

भरतो मातरं तथा गर्हयित्वा महता रोषेणाविष्टः पुनरेवाब्रवीत्। दुष्टचारिणि कैकेयि! राज्याद् भ्रंशस्व। धर्मेण परित्यक्ता त्वं मां पुत्रं मृतं मत्वा यावज्जीवं रुदिहि। पिता वा रामो वा किं नु तेऽपकृतवान् यौ त्वत्कृते मरणं विवासं च समं प्राप्तौ? अस्य कुलस्य विनाशनात् भ्रूणहत्यापापतुल्यं पापं प्राप्तासि। कैकेयि! त्वं नरकं गच्छ। भर्तुः

---

+cr त्वया नीतः। त्वयानीतः इति पाठ्यः। त्वया आनीतः इत्यर्थः। * अपाश्रितः इति सम्यगेव पाठः। अपाश्रयः = व्यपाश्रयः।

सलोकतां मा गच्छ। सर्वलोकप्रियं रामं विवास्य घोरेण कर्मणा यत् त्वयेदृशं पापं कृतं ततो ममापि भयमापादितम्। त्वन्निमित्तेन मे पिता मृतो रामोऽरण्यमाश्रितः अहं च जीवलोके अयशः प्रतिपादितः। नृशंसा राज्यकामुका दुर्वृत्ता पतिघातिनी च त्वं मातृरूपिणी मम शत्रुरसि। अहं न तेऽभिभाष्योऽस्मि। कुलदूषिण्यास्ते निमित्तेन कौसल्या सुमित्रा ममान्याश्च मातरो महता दुःखेनाविष्टाः। यतस्त्वया धार्मिको नित्यं सत्यपरायणो रामो वनं प्रस्थापितस्तद्दुःखात् पिता च त्रिदिवं गतस्ततस्त्वं धार्मिकस्य धीमतः अश्वपतेः पुत्री न भवितुमर्हसि। पितृकुलप्रध्वंसिनी राक्षसी तत्र जातासि। यत्पापप्रधाना त्वमसि तत् पापं पितृविनाकृते भ्रातृपरित्यक्ते सर्वलोकाप्रिये मयि च पतितम्। हे पापनिश्चये! धर्मसंयुक्तां कौसल्यां पुत्रभर्तृवियुक्तां कृत्वा कं लोकं त्वं प्राप्स्यसि? निरयमेव गमिष्यसि। कौसल्याया आत्मसंभवं राममात्मनिग्रहवन्तं बन्धुसंश्रयमस्मज्ज्येष्ठमत एव पितृसमं किं नावबुध्यसे? अङ्गप्रत्यङ्गजः पुत्रो मातुर्हृदयादपि जायते। तस्मान्मातुः पुत्रः प्रियतमः। बान्धवाः केवलं प्रियाः+। एकदा धर्मज्ञा सुरपूजिता कामधेनुरुर्व्यां हलं कर्षन्तौ मूर्छितौ पुत्रौ ददर्श किल। दिनार्धपरिश्रमश्रान्तौ पुत्रौ दृष्ट्वा पुत्रशोकेन बाष्पपर्याकुलेक्षणा रुरोद। तस्या अधस्ताद् व्रजतः सुरराजस्य गात्रे सूक्ष्माः सुगन्धिनस्ते बिन्दवः पतिताः। शोकसंतप्तां तां दृष्ट्वा प्राञ्जलिरिन्द्रोऽब्रवीत्। सर्वहितैषिणि! अस्मासु कुतश्चिन्महद् भयं न विद्यते कच्चित्? तव शोकः कुतोनिमित्तः? ब्रूहि। सुरराजेनैवं पृष्टा सुरभिः प्रत्युवाच। हे सुराधिप! पापं शान्तम्। कुतश्चिद् वः किञ्चिद् भयं न विद्यते। अहं विषमे स्थितौ सूर्यरश्मिप्रतापितौ दीनौ कृशौ कर्षकेण ताड्यमानौ कष्टमग्नौ एतौ स्वपुत्रौ बलीवर्दौ

---

+cr तस्मात् प्रियतरो मातुः प्रियत्वान्न तु बान्धवाः। ग्राह्यः- तस्मात् प्रियतमो मातुः प्रिया एव तु बान्धवाः।

दृष्ट्वा शोचामि। भारपीडितौ दुःखितौ यौ दृष्ट्वाहं परितप्ये तौ मम कायात् प्रसूतौ। पुत्रसमः प्रियो नास्ति। यस्याः पुत्रसहस्राणि सन्ति सा कामधुगपि शोचति। एकपुत्रं रामं विना कौसल्या कथं वर्तयिष्यति? एकपुत्रा साध्वी कौसल्या त्वया विवत्सा कृता। तस्मादिह प्रेत्य च त्वं सततं दुःखं लप्स्यसे। अहं भ्रातुः पितुश्च कृतदोषस्य पूर्णं प्रायश्चित्तं* यशसो वर्धनं च करिष्यामि। राममानाय्य स्वयमेवारण्यं प्रवेक्ष्यामि। इत्यरण्ये तोमराङ्कुशचोदितः संक्रुद्धो गज इव पन्नगवत् श्वसन् भुवि पपात। तदा संरक्तनेत्रः शिथिलाम्बरो विधूतसर्वाभरणो भूपतितो भरत उत्सवान्ते इन्द्रस्य केतुरिवासीत्।

६९

तथैव क्रोशतो महात्मनो भरतस्यागमनजनितं परिवारशब्दं** विज्ञाय कौसल्या सुमित्रामुवाच। क्रूरकार्यायाः कैकेय्याः सुतो भरत आगतः। दीर्घदर्शिनं तमहं द्रष्टुमिच्छामि। सुमित्रामेवमुक्त्वा विवर्णा मलिना कृशा वेपमाना विचेतना सा भरतसकाशं प्रतस्थे। भरतश्च शत्रुघ्नेन सह कौसल्यानिवेशनं प्रति प्रतस्थे। तौ दुःखार्तां नष्टचेतनां कौसल्यां प्रेक्ष्य दुःखितौ तां पर्यष्वजेताम्। सा भरतमुवाच। इदं ते राज्यकामस्याकण्टकं राज्यं प्राप्तम्। परन्तु महदिदं दुःखस्थानं यत् कैकेय्याः क्रूरेण कर्मणा शीघ्रं संप्राप्तम्। क्रूरदर्शिनी कैकेयी चीरवसनं मे पुत्रं वनं प्रस्थाप्य किं प्रयोजनं तत्र पश्यतीति न जाने। यत्र मे सुन्दराङ्गो महायशाः पुत्रोऽस्ति तत्र मामपि कैकेयी प्रस्थापयितुमर्हति। अथवाहं स्वयमेव सुमित्रानुचरा अग्निहोत्रं पुरस्कृत्य यत्र रामोऽस्ति तत्र सुखं प्रस्थास्ये। हस्त्यश्वरथसंपूर्णं

---

* अपचितिमिति पाठः। रामस्य पूजां पितुरन्त्येष्टिं चेति महेश्वरतीर्थगोविन्दराजौ।

** क्रोशन् भरतः कैकेयीगृहे आसीत्। अतस्तस्य कण्ठध्वनिर्दूरे स्वगृहस्थया कौसल्यया न श्रुतः स्यात्।

धनधान्यभरितं विस्तीर्णमिदं राज्यं तव मात्रा ते निर्यातितम्। बहुशोकावृतामेवं विलपन्तीं कौसल्यां प्राञ्जलिर्भरत एवं प्रत्युवाच। आर्ये! अजानन्तमकिल्बिषं मां कस्माद् गर्हसे? रामे मम विपुलां स्थिरां प्रीतिं जानासि। सत्यसंधः सतां श्रेष्ठो मम ज्येष्ठो भ्राता यस्यानुमते* वनं गतस्तस्य बुद्धिः कदाचन शास्त्रानुगा कृता मा भूत्। पूज्यो मे ज्येष्ठभ्राता यस्यानुमते वनं गतः स पापात्मनां सेवको भवतु सूर्याभिमुखं मलमूत्रविसर्जनं करोतु सुप्तां गां पादेन हन्तु। पूज्यो मे ज्येष्ठभ्राता यस्यानुमते वनं गतस्तस्य भृत्येन निर्वेतनं महत् कर्म कारयतः प्रभोः पापमस्तु। प्रजाः पुत्रवत् परिपालयमानस्य राज्ञो द्रोहिणां यत् पापं भवति तत्तस्य भवतु यस्यानुमते पूज्यो मे ज्येष्ठो भ्राता वनं गतः। षष्ठभागं करमुद्धृत्य प्रजा अरक्षतो नृपस्य यत् पापं भवति तत्तस्यास्तु यस्यानुमते पूज्यो मे ज्येष्ठो भ्राता वनं गतः। तपस्विभ्यो यागे यज्ञदक्षिणां प्रतिज्ञाय तां प्रतिज्ञां वितथीकुर्वतां यत् पापं स्यात् तत्तस्य भवतु यस्यानुमते पूज्यो मे ज्येष्ठो भ्राता वनं गतः। हस्त्यश्वरथपूर्णे शस्त्रसमाकुले युद्धे गत्वा शूरधर्मं विहाय परावर्तमानानां यत् पापं भवति तदस्तु तस्य यस्यानुमते पूज्यो मे ज्येष्ठो भ्राता वनं गतः। धीमता आचार्येण यत्नेनोपदिष्टं सूक्ष्मार्थं शास्त्रं स विस्मरतु यस्यानुमते पूज्यो मे ज्येष्ठो भ्राता वनं गतः। पायसं कृसरं छागमासं च अतिथिपितृपूजादिनिमित्तं विना यः खादति यश्च गुरूनवजानाति तस्य पापं स आप्नोतु यस्यानुमते पूज्यो मे ज्येष्ठो भ्राता वनं गतः। पुत्रदारभृत्यपरिवारितः स्वगृहे य एको मृष्टमश्नाति तस्य पापं सोऽधिगच्छतु यस्यानुमते पूज्यो मे ज्येष्ठो भ्राता वनं गतः। भृत्यस्त्रीवृद्धवधे भृत्यत्यागे च यत् पापमुच्यते स तत् प्राप्नोतु यस्यानुमते मम पूज्यो ज्येष्ठो भ्राता वनं गतः। प्रातःसायंसन्ध्याकालयोः

---

* यदि रामविवासः कदापि ममाभीप्सितः स्यात् तर्हि मम बुद्धिस्तादृशी स्यादित्यभिप्रायः। एवमनन्तरश्लोकेषु च।

शयानस्य यत् पापं भवति तत्तस्यास्तु यस्यानुमते पूज्यो मे ज्येष्ठो भ्राता वनं गतः। अग्निदायकस्य गुरुतल्पगस्य मित्रद्रुहश्च यत् पापं तत्तस्य भवतु। देवतानां पितृदेवतानां मातापित्रोश्च शुश्रूषामकुर्वतां यत् पापं भवति तत्तस्य भवतु यस्यानुमते पूज्यो मे ज्येष्ठो भ्राता वनं गतः। सतां लोकात् सतां कीर्त्याः सत्पुरुषाणां कर्मणश्च स क्षिप्रमद्यैव भ्रश्यतु यस्यानुमते पूज्यो मे ज्येष्ठो भ्राता वनं गतः। पतिपुत्राभ्यां विहीनां कौसल्यामेवमाश्वासयन्नेव दुःखार्तो भरतो निपपात। तथा दुष्करैः शपथैः शपमानमचेतनं शोकार्तं भरतं कौसल्योवाच। पुत्र! शपथैः शपमानो मे प्राणान् पीडयसि। ततो मम दुःखं भूयो वर्धते। वत्स! दिष्ट्या ते आत्मा धर्मान्न चलितः। सत्यप्रतिज्ञस्त्वं+ लक्ष्मणसमेतः सतां लोकानवाप्स्यसि। एवं दुःखेन विलपतो भरतस्य मनो मोहात् शोकावेगाच्च लुलितमभवत्। एवं लालप्यमानो विचेतनः प्रणष्टबुद्धिर्भूपतितो मुहुर्मुहुर्दीर्घं निःश्वसन्नेव भरतस्तां रात्रिमगमयत्।

७०

एवं शोकसंतप्तं भरतं मुनिर्वसिष्ठ उवाच। राजपुत्र! अलं शोकेन। भद्रं ते। पितुर्दाहसंस्कारं कुरु। इति। तद्वचः श्रुत्वा धैर्यमवलम्ब्य धर्मविद् भरतः सर्वाणि प्रेतकार्याणि चकार। तैलद्रोण्या उद्धृत्य भूमौ निवेशित आपीतवर्णवदनो भूपतिः प्रसुप्त इवालक्ष्यत। ततस्तं नानारत्नपरिष्कृते श्रेष्ठे शयने संवेश्य भरतः सुदुःखितो विललाप। राजन्! प्रोषिते मय्यनागते रामं लक्ष्मणं च विवास्य किं ते निश्चितम्? पुरुषसिंहेन रामेण हीनं दुःखितमिमं जनं हित्वा क्व यास्यसि? तात! त्वयि स्वः प्रयाते रामे च वनमाश्रिते तेऽस्मिन् पुरे को योगक्षेमं कल्पयिष्यति? राजन्! त्वया हीना पृथिवी विधवेव न राजते। नगरी हीनचन्द्रा रजनीव मे प्रतिभाति। एवं विलपन्तं दीनमानसं तं भरतं महामुनिर्वसिष्ठो भूय उवाच। राज्ञः

---

+Cr सत्यप्रतिज्ञो मे। ग्राह्यः – सत्यप्रतिज्ञो हि।

कर्तव्यानि प्रेतकार्याणि अचिरमव्यग्रं क्रियन्ताम्। भरतस्तथेति वसिष्ठवचनमभिपूज्य ऋत्विक्पुरोहिताचार्यान् तस्मिन् कर्मणि त्वरयामास। नरेन्द्रस्याग्न्यगाराद् बहिरानीता अग्नयो यथाविधि ऋत्विग्भिर्याजकैश्च गृहीताः। गतप्राणं राजानं शिबिकायामारोप्य बाष्पकण्ठा विमनसश्च परिचारका ऊहुः। जना नृपतेरग्रतो रजतं सुवर्णं विविधानि वासांसि च प्रकिरन्तो मार्गं ययुः। चन्दनागुरुगुग्गुलान् सरलपद्मकदेवदारूणि चाहृत्यापरे चितां चक्रुः। उच्चावचान् गन्धान् तत्र दत्वा ऋत्विजश्चितामध्ये भूमिपं संवेशयामासुः। ततः अग्निं हुत्वा जेपुः। सामगा यथाशास्त्रं सामानि जगुः। तदा राजभार्या वृद्धैः परिवृता यथार्हं शिबिकाभिरन्यैश्च यानैर्नगरात् तत्र निर्ययुः। ऋत्विजः शोकसन्तप्ताः कौसल्याप्रमुखाः स्त्रियश्चाहिताग्निं तं नृपमप्रदक्षिणं प्रदक्षिणं* च परिचक्रमुः। आर्तानां क्रोशन्तीनां निनादः क्रौञ्चीनामिव तत्र शुश्रुवे। पुनः पुनर्विलप्य स्त्रियो यानैः सरयूतीरं जग्मुः। नृपाङ्गना मन्त्रिपुरोहिताश्च भरतेन सार्धमुदकं कृत्वा अश्रुपूर्णनेत्रा नगरं प्रविश्य दशाहं भूशयानाः कष्टं व्यनयन्त।

७१

ततो भरत एकादशेऽहनि शौचं द्वादशेऽहनि श्राद्धकर्माणि च चकार। ब्राह्मणेभ्यो रत्नानि धनं पुष्कलमन्नं श्वेतच्छागसमूहं शतशो गा दासीदासं यानानि सुमहान्ति वेश्मानि च पितुरौर्ध्वदैहिकं ददौ। ततस्त्रयोदशे दिवसे प्रभातकाले संचयनार्थं श्मशानं गतो भरतः पितुश्चितामूले विमुक्तकण्ठं विलप्येदमुवाच। तात! मृतेन त्वया यस्य रक्षणेऽहं स्थापितस्तस्मिन् भ्रातरि रामे प्रव्रजिते शून्ये त्वया त्यक्तोऽस्मि। अनाथायाः कौसल्याया राम एव गतिः। तं वनं प्रस्थाप्य तां च त्यक्त्वा त्वं क्व गतः? भस्मना

---

* प्रसव्यमिति पाठः। प्रसव्यमप्रदक्षिणम्। इदं प्रदक्षिणस्याप्युपलक्षणमिति महेश्वरतीर्थगोविन्दराजौ।

अरुणं दग्धास्थियुतं पितृशरीरविनाशकृत् तच्चितास्थानं[+] दृष्ट्वा भरत उच्चैररोदीत्। यन्त्रेणोत्थाप्यमानः शक्रध्वजो यथा कदाचिच्च्युतः स्यात् तथा चितां दृष्ट्वा भरतो रुदन् पपात। तदा सर्वे तस्यामात्या अन्तकाले निपतितं ययातिमृषय इव सपद्युपजग्मुः। शत्रुघ्नश्च भरतं दृष्ट्वा शोकपरिप्लुतः[++] पितरमेव स्मरन् विसंज्ञो भुवि पपात। पितुस्तत्तत्कालोचिताभिमतप्रदानोपलालनकरान् गुणान् स्मृत्वा उन्मत्तवन्मनःस्थैर्यं विहाय सुदुःखितो विललाप। मन्थराप्रभवः कैकेयीग्राहसंकुलः अक्षोभ्यस्तीव्रो वरदानमयः शोकसागरः सर्वानमज्जयत्। तात! सुकुमारं बालं त्वया सततं लालितं विलपन्तं भरतं हित्वा भवान् क्व गतः? भोज्यानि पानानि वस्त्राण्याभरणानि च नः सर्वान् यथाभिरुचि ग्राहयसि। कोऽन्यो नस्तदद्य करिष्यति? धर्मज्ञेन महात्मना राज्ञा त्वया विहीनायाः पृथिव्या अयमवदारणकालोऽस्ति। परन्तु एषा पृथिवी नावदीर्यते। पिता स्वर्गं गतो रामश्चारण्यमाश्रितः। इदानीं जीवितुं मे का शक्तिरस्ति? अग्निं प्रवेक्ष्यामि। भ्रात्रा पित्रा च हीन इक्ष्वाकुपालितां सम्प्रति शून्यामयोध्यां न प्रवेक्ष्यामि। तपोवनं प्रवेक्ष्यामि। तयोर्भ्रात्रोर्विलपितं श्रुत्वा तद् व्यसनं च वीक्ष्यानुगामिनः सर्वे भूयो भृशं दुःखिता बभूवुः। ततो विषण्णौ श्रान्तौ च शत्रुघ्नभरतौ भग्नशृङ्गौ वृषभाविव धरण्यामलुठताम्[3+]। तदा महात्मा ज्ञानवान् दशरथस्य पुरोहितो वसिष्ठो भरतमुत्थाप्योवाच। बुभुक्षापिपासे शोकमोहौ जरामरणे (अथवा जन्ममरणे) चैतानि त्रीणि द्वन्द्वानि सर्वेषां प्राणिनां निर्विशेषं प्रवर्तन्ते। तान्यपरिहार्याणि। तस्मादेवं भवितुं नार्हसि[4+]।

---

[+] cr दग्धास्थिस्थानमण्डलम्। पाठचः- दग्धास्थि स्थानमण्डलम्। [++] cr शोकपरिप्लुतम्। ग्राह्यः - शोकपरिप्लुतः। [3+] cr संव्यचेष्टेताम्। ग्राह्यः - संव्यवेष्टेताम्। [4+] cr नैवं भवितुमर्हति। नैवं भवितुमर्हसि इति पाठः अधःसूचिकायामविद्यमानोऽपि B, C, D ग्रन्थेषु विद्यमानो ग्राह्यः।

तत्त्वज्ञः सुमन्त्रश्च शत्रुघ्नमुत्थाप्याभिप्रसाद्य च सर्वप्राणिजन्ममरणमुद्दिश्य बोधयामास। उत्थितौ तौ नरव्याघ्रौ वर्षातपविवर्णौ+ द्वावलिन्द्रध्वजाविवास्ताम्। अश्रूणि परिमार्जन्तौ रक्ताक्षौ दीनभाषिणौ तौ भरतशत्रुघ्नावमात्या अपरकार्याणि कर्तुं त्वरयामासुः।

७२

अथ रामं प्रति यात्रां समीहमानं भरतं शत्रुघ्न उवाच। रामः सर्वेषां गतिः। आत्मनो दुःखे स गतिरिति पृथक् किं वक्तव्यम्? स सत्त्वसंपन्नो रामः स्त्रिया वनं प्रव्राजितः। बलवान् वीर्यसम्पन्नो लक्ष्मण इति ख्यातो योऽस्मद्भ्रातास्ति सोऽपि पितृनिग्रहं कृत्वा राममस्मात् संकटात् किं न मोचितवान्? यो नार्या वशं गत उत्पथं समारूढः स राजा नयानयौ समवेक्ष्य पूर्वमेव निग्राह्यः। इति शत्रुघ्ने संभाषमाणे प्राग्द्वारे सर्वाभरणभूषिता कुब्जा दैवादागता। चन्दनसारेण लिप्ता राजवस्त्राणि बिभ्रती सुन्दरैर्मेखलादामभिः सा रज्जुबद्धा वानरीवादृश्यत। तदा द्वास्थस्तां महापापकारिणीं प्रसह्य गृहीत्वा शत्रुघ्नाय न्यवेदयत्। यस्याः कारणेन रामो वनं पिता मृतिं च गतौ सेयं पापा नृशंसा मन्थरा। तस्या यथोचितं दण्डनं कुरु। तच्छ्रुत्वा शत्रुघ्नः सर्वानन्तःपुरचरानुवाच। यया मे भ्रातॄणां पितुश्च तीव्रं दुःखमुत्पादितं सेयं स्वस्य नृशंसकर्मणः फलमश्नुताम्। एवमुक्त्वा[2+] शत्रुघ्नः सखीजनसमावृतां तां बलवदाशु जग्राह। सा उच्चैरोदनेन गृहमनादयत्। ततस्तस्याः सर्वः सखीजनः शत्रुघ्नं कुपितं विज्ञाय भृशं दुःखितः सर्वशो विपलायत। यथायं समुपक्रान्तस्तथा नः सर्वा निश्शेषं करिष्यतीति तस्याः सर्वः सखीजनो मिथो बभाषे। सानुक्रोशां धर्मज्ञां कौसल्यां शरणं यामः। सा हि नो ध्रुवा गतिरस्तु इति। रोषताम्राक्षः शत्रुघ्नस्तदा क्रोशन्तीं कुब्जां पृथिवीतले विचकर्ष। तस्या आकृष्यमाणाया अलंकारसमुदायः पृथिव्यां

---

+cr परिक्लिन्नौ। ग्राह्यः– परिग्लानौ। 2+cr एवमुक्ता। ग्राह्यः – एवमुक्त्वा।

ततस्ततो व्यशीर्यत। तेन भूषणसमुदायेन विकीर्णं राजनिवेशनं शरत्कालगगनवदशोभत। तदा तां रक्षितुं कैकेयी तत्र निपपात। परन्तु महाकोपात् शत्रुघ्नस्तामपि निर्भर्त्स्य परुषं बभाषे। परुषैस्तस्य वाक्यैर्वित्रस्ता कैकेयी पुत्रं भरतं शरणमगात्। तां प्रेक्ष्य क्रुद्धं शत्रुघ्नं स्त्रियः सर्वेषामवध्याः क्षम्यतामिति भरतः प्राह। दुष्टचारिणीं पापामिमां कैकेयीमपि हन्यां परन्तु रामो मह्यं कुप्यतीति न हन्मि। यद्यावामिमां कुब्जां हनिष्यावो धर्मात्मा रामो यदि जानाति च तदा त्वां च मां च नाभिभाषिष्यते। भ्रातुर्वचः श्रुत्वा शत्रुघ्नो रोषान्न्यवर्तत मन्थरां च मुमोच। सा कैकेय्याः पादमूले निपत्य निःश्वसन्ती विललाप। शत्रुघ्नविक्षेपविमूढसंज्ञां महार्तां कुब्जां कैकेयी वागुरालग्नां वीक्षमाणां क्रौञ्चीमिव समाश्वासयत्।

७३

ततश्चतुर्दशे दिवसे प्रभातसमये राजकर्तारः अमात्याः समेत्य भरतम-ब्रुवन्। अस्माकं महापूज्यो दशरथो ज्येष्ठं रामं लक्ष्मणं च प्रव्राज्य स्वर्गं गतः। हे महायशो राजपुत्र! त्वमद्य नो राजा भव। दैववशेन मन्त्रिणामैकमत्येन चानायकमपि राज्यं विद्रोहादीन् न करोति। राघव! सर्वमाभिषेचनिकमादाय स्वजनः श्रेणयश्च त्वां प्रतीक्षन्ते। भरत! पितामहपितृक्रमागतं स्थिरमिदं राज्यं गृहाण। आत्मानमभिषेचय। अस्मान् परिपालय। इति। धृतव्रतो भरत आभिषेचनिकं सर्वं वस्तुसमुदायं प्रदक्षिणं कृत्वा तं जनं प्रत्युवाच। ज्येष्ठस्य राजतास्मत्कुलस्य सम्प्रदाय इति सर्वे जानन्ति। अतो भवन्तः कुशला जना नैवं मां वक्तुमर्हन्ति। अस्माकं पूर्वो भ्राता रामो राजा भविष्यति। अहं तु चतुर्दश वर्षाण्यरण्ये वत्स्यामि। चतुरङ्गिणी महती सेना युज्यताम्। ज्येष्ठं भ्रातरं रामं वनादानेष्यामि। संस्कृतं सर्वमेतदाभिषेचनिकं पुरस्कृत्य रामार्थं वनं गमिष्यामि। तत्रैव तमभिषिच्य पुरस्कृतं रामं यज्ञादग्निमिवानेष्यामि। स्वां मातृगन्धिनीमिमां

सफलाशयाँ न करिष्यामि। अहं दुर्गे वने वत्स्यामि रामो राजा भविष्यति। शिल्पिभिः पन्थाः क्रियताम्। स्थपुटप्रदेशाः समाः क्रियन्ताम्। दुर्गमप्रदेशेषु सेनां समीक्षितुं रक्षिणः अनुसंयान्तु। रामार्थमेवं संभाषमाणं भरतं सर्वो जनः शोभनं श्रेष्ठं च वाक्यं प्रत्युवाच। ज्येष्ठाय दशरथसुताय राज्यं दित्सत एवं भाषमाणस्य ते शोभिता लक्ष्मीरुपतिष्ठताम्। स्पष्टं श्रेष्ठं च नृपात्मजप्रभाषितं तत् प्रतिज्ञावचनं निशम्य हृष्टानामार्यजनानां तं प्रत्यानन्दबाष्पबिन्दवो निपेतुः। सामात्यास्ते जना हृष्टा नरवर! तव वचनात् शिल्पिवर्गो मार्गनिर्माणकार्यमादिष्ट इति भरतमूचुः।

७४

ततः सर्वप्रदेशविदः सूत्रकर्मविशारदाः शूराः खनका यन्त्रप्रयोक्तारो भृतिकाः स्थपतयो वर्धकयो मार्गकर्तारो वृक्षच्छेदिनः कूपकराः सुधाकरा वंशकर्मकृतः समर्थाः पर्यवेक्षकाश्च पुरतः प्रतस्थिरे। एवं हर्षात् तं प्रदेशं प्रयातो जनौघः पर्वणि समुद्रस्य महावेगः प्रवाह इव शुशुभे। वर्त्मकर्मणि कोविदास्ते विविधोपेतैः साधनैः संघशः पुरस्तात् संप्रतस्थिरे। ते शाखा वीरुधो गुल्मान् बृहच्छिलाः शिला विविधान् द्रुमांश्च छिन्दन्तो मार्गं चक्रिरे। केचिदवृक्षेषु देशेषु वृक्षानरोपयन्। केचित् कुठारैष्टङ्कैर्दात्रैश्च वृक्षादीन् चिच्छिदुः। अपरे महाबलिनः प्रबलान् वीरणस्तम्बानुदमूलयन्। तत्र तत्र च दुर्गाणि स्थलानि चक्रुः। केचन कूपानायतश्वभ्राणि च पांसुभिरपूरयन्। अपरे निम्नभागान् समांश्चक्रुः। संक्रमान् बबन्धुः। निरोधान् बिभिदुः। अचिरेण कालेन जलपूर्णानि सरांसि बहूनि निर्ममुः। निर्जलदेशेषु वेदिकापरिमण्डितानुदपानान् खानयामासुः। सुधाकुट्टिमतलः प्रपुष्पितमहीरुहो मत्तोद्घुष्टद्विजगणः पताकालंकृतः चन्दनोदकसंसिक्तो नानाकुसुमभूषितः सेनायाः पन्थाः स्वर्गपथोपमो बह्वशोभत। निर्माणकर्मण्यधिकृता नरा मधुरफलवत्सु रमणीयेषु देशेषु भरतस्य निवासार्थं श्रेष्ठं गृहं निर्ममुः।

ज्योतिःशास्त्रविदः प्रशस्तेषु नक्षत्रेषु मुहूर्तेषु च भरतस्य निवेशान् स्थापयामासुः। ततः पताकाशोभितानि शिबिराणि जाह्नवीमभिव्याप्य स्थापयामासुः*। चन्द्रतारागणमण्डितममलं नभः क्षपायां यथा विराजते शुभशिल्पिनिर्मितो रम्यः स नरेन्द्रमार्गस्तथा व्यराजत।

७५

ततो वाग्विशेषज्ञाः सूतमागधा अभ्युदयप्रारम्भरात्रिचरमभागे भरतं मङ्गलयुतैस्तवैस्तुष्टुवुः। सुवर्णकोणाभिहतो यामदुन्दुभिः प्राणदत्। शङ्खान् शतशो दध्मुः। बहुविधानि वाद्यानि नादयामासुः। दिवमापूरयन्निव प्रवर्तितः सुमहान् स तूर्यघोषः शोकसंतप्तं भरतं भूयः शोकेनापीडयत्। ततो भरतः प्रबुद्धस्तं घोषं संनिवर्त्य नाहं राजेति तानुक्त्वा शत्रुघ्नमुवाच। शत्रुघ्न! पश्य। कैकेय्या लोकस्य महदपकृतम्। मयि दुःखानि विसृज्य राजा दशरथो गतः। धर्मतत्परस्य तस्य महात्मनो धर्ममूला एषा राजश्रीर्जले अकर्णिका नौरिव परिभ्रमति। इति विलपन्तं विचेतनं भरतं प्रेक्ष्य सर्वा योषितः सस्वरं कृपणं रुरुदुः। एवं विलपति भरते इक्ष्वाकुनाथस्य सभां वसिष्ठः प्रविवेश। परिवारयुतो धर्मात्मा राजधर्मज्ञो वसिष्ठः स्वर्णमयीं रम्यां मणिरत्नसमाकुलां सुधर्मासदृशीं सभां प्रविवेश। स उत्तमास्तरणावृतं काञ्चनमयं पीठमध्यास्त दूतांश्चानुशशास। अव्यग्रा ब्राह्मणान् क्षत्रियान् योधानमात्यान् गणवल्लभांश्च क्षिप्रमानयत। आत्ययिकं नः कृत्यमस्ति। ततो रथैरश्वैर्गजैरुपगच्छतां जनानां महान् कोलाहल उदपद्यत। तत आयान्तं भरतममात्यादयो दशरथं यथा तथा शतक्रतुममरा इव प्रत्यनन्दन्। दशरथसुतशोभिता सभा दशरथयुतेव तिमिनागसंवृतो मणिशङ्खशर्करायुतः स्तिमितजलो ह्रद इव पूर्ववद् बभौ।

७६

बुद्धिसंपन्नो भरतः पूर्णचन्द्रां शुक्रबृहस्पत्याद्युत्तमग्रहयुक्तां निशामिव

---

* श्लोकाः १७–२० संक्षिप्ताः।

शोभमानामार्यगुणसंपूर्णां निभृतों तां सभां ददर्श। तदोत्तमा सा विद्वज्जनसंपूर्णा सुरुचिरा पूर्णा सभा यथान्यायमासनानि विशतामार्याणां वस्त्रप्रभया अङ्गरागप्रभया च घनापाये पूर्णचन्द्रा शर्वरीवादृश्यत+। धर्मवित् पुरोहितो वसिष्ठः सर्वा राज्ञः प्रकृतीरुपस्थिताः प्रेक्ष्य भरतमिदं मृदु वाक्यमब्रवीत्। तात! राजा दशरथो धर्ममाचरन् धनधान्यवतीं स्फीतां पृथिवीं ते प्रदाय स्वर्गतः। तथा सत्यधृती रामः सतां धर्ममनुस्मरन् उदितः शशी ज्योत्स्नामिव पितुरादेशं नाजहात्। पित्रा भ्रात्रा च निहतकण्टकं राज्यं ते दत्तम्। मुदितामात्यस्तद् भुङ्क्ष्व। क्षिप्रमेवाभिषेचय। उदीच्याः प्रतीच्या दाक्षिणात्याः सिंहासनरहिता राजानः अपरान्तदेशीया द्वीपदेशीया राजानश्चासंख्यानि ते रत्नान्युपहरन्तु। धर्मज्ञो भरतस्तद् वाक्यं श्रुत्वा शोकपूर्णो मनसा रामं सस्मार। कलहंसस्वरो भरतो बाष्पेणाव्यक्तया वाचा सभामध्ये विललाप पुरोहितं च जगर्हे। चरितब्रह्मचर्यस्य विद्यानिष्णातस्य धीमतो धर्मे प्रयतमानस्य रामस्य राज्यं मद्विधः को हरेत्? दशरथस्य कोऽपि पुत्रः कथं राज्यापहारको भवेत्? राज्यमहं च रामस्य स्वः। इदं बुद्ध्वास्मिन् विषये धर्ममिदानीं वक्तुमर्हसि। ज्येष्ठः श्रेष्ठो धर्मात्मा दिलीपनहुषोपमो रामो दशरथवद् राज्यं लब्धुमर्हति। अनार्यजुष्टमस्वर्ग्यं पापं यद्यहं कुर्यां तर्हीक्ष्वाकुकुलदूषको भवेयम्। मात्रा कृतं पापं नाहं रोचये। इहस्थो वनदुर्गस्थं भ्रातरं कृताञ्जलिर्नमस्यामि। राममेवानुगच्छामि। श्रेष्ठः स एव राजा। स त्रयाणामपि लोकानां राज्यमर्हति। सर्वे सभासदो धर्मसंयुक्तं तद् वाक्यं श्रुत्वा रामे निहितचेतसो हर्षादश्रूणि मुमुचुः। यद्यार्यं वनाद् विनिवर्तयितुं न शक्ष्यामि तदार्यलक्ष्मणवत् तत्रैव वने वत्स्यामि। भवतां पूज्यानां समक्षं सर्वैरुपायै

---

+ श्लोको ग्राह्यः – वस्त्राङ्गरागप्रभया द्योतिता सा सभोत्तमा। सा विद्वज्जनसंपूर्णा सभा सुरुचिरा तदा।।

रामं विनिवर्तयितुं प्रयतिष्ये। धर्मात्मा भ्रातृवत्सलो भरत एवमुक्त्वा समीपस्थं सुमन्त्रमुवाच। सुमन्त्र! मम शासनात् तूर्णमुत्थाय गच्छ। क्षिप्रं यात्रामाज्ञापय। सैन्यं च समानय। महात्मना भरतेनैवमुक्तः सुमन्त्रः प्रहृष्टः सर्वं तद् यथासन्दिष्टमादिशत्[+]। रामस्य निवर्तने समाज्ञप्तां सैन्यस्य यात्रां श्रुत्वा प्रकृतयः सेनाध्यक्षाश्च प्राहृष्यन्। गृहे गृहे योधाङ्गना यात्रागमनमाज्ञाय हर्षिताः पतीन् त्वरयामासुः। ते बलाध्यक्षा हयैर्वृषभशकटैः स्यन्दनैर्योधैश्च सह सर्वं बलमचोदयन्। बलं सज्जं दृष्ट्वा भरतो गुरुसन्निधौ पार्श्वतः स्थितं सुमन्त्रं मे रथं त्वरयस्वेत्यब्रवीत्। भरताज्ञया हर्षितः सुमन्त्र उत्तमहयैर्युक्तं रथं गृहीत्वा प्रययौ। तदा सत्यधृतिः प्रतापवान् भरतो महारण्यगतं भ्रातरं प्रसादयिष्यन्नब्रवीत्। जगतो हिताय वनस्थं रामं प्रसाद्यानेतुमिच्छामि। अतो बलस्य योगाय सुमन्त्र! तूर्णं गच्छेति। एवमाज्ञापितः सुमन्त्रः प्रकृतिप्रधानान् सेनामुख्यान् सुहृज्जनं च शशास। ततः प्रतिगृहं राजन्या विप्रा वैश्याः शूद्राश्च समुत्थायोष्ट्रान् खरान् रथानुत्तमजातिभवान् हयान् गजांश्च बहूनयूयुजन्।

७७

ततो भरतः प्रातःकाले समुत्थितः श्रेष्ठं रथमास्थाय रामदर्शनकाङ्क्षया प्रययौ। तस्याग्रतः सर्वे मन्त्रिणः पुरोहिताश्च रथैर्ययुः। यथाविधि कल्पितानि नव नागसहस्राणि यान्तं भरतमन्वयुः। षष्टी रथसहस्राणि धनुरादिविविधायुधधरा योधा लक्षहयाश्च भरतमन्वयुः। रामानयनसंहृष्टाः कैकेयी सुमित्रा कौसल्या च भास्वता यानेन ययुः। मान्यजनसमुदायाः सलक्ष्मणं रामं द्रष्टुं हृष्टमानसाश्चित्रास्तस्यैव कथाःकथयन्तः प्रयाताः। मेघश्यामं महाबाहुं स्थिरसत्त्वं दृढव्रतं जगतः शोकनाशनं रामं कदा द्रक्ष्यामः? उदयमानः सूर्यः सर्वस्य लोकस्य तम इव दृष्टमात्रो रामो नः

---

[+] व प्रहृष्टः सोऽदिशत्। ग्राह्यः – हृष्टस्तदादिशत्।

शोकमपनेष्यति। इति शुभाः कथाः कथयन्तः संप्रहृष्टा अन्योन्यमालिङ्गन्तो नागरा ययुः। राजप्रिया व्यापारिणः प्रकृतयश्च हृष्टा रामं दिदृक्षवो ययुः। मणिकाराः शोभनकुम्भकाराः सूत्रकर्मकृतः शस्त्रोपजीविनो मयूरपिञ्छालङ्कारकराः क्राकचिका अलंकर्तारो वेधका दन्तकराः सुधाकारा गन्धोपजीविनः सुवर्णकाराः कम्बलधावका अङ्गमर्दनेन सह स्नापका+ वैद्याः सुगन्धधूपकाः शौण्डिका रजकास्तुन्नवाया महत्तरा ग्रामघोषनिवासिनः स्त्रीभिः सह शैलूषाः कैवर्तकाश्च ययुः। निश्चलचित्ताः सुवृत्ता वेदविदः सहस्रशो ब्राह्मणा यान्तं भरतं गोशकटैरनुजग्मुः। सुवेषाः शुद्धवसनास्ताम्राङ्गलेपनास्ते सर्वे विविधैर्यानैः शनैर्भरतमन्वयुः। भरतानुयायिनी मुदिता सा सेना गङ्गातीरमासाद्य व्यवातिष्ठत। सेनामनुगतां शिवोदकां गङ्गां च वीक्ष्य भरतः सचिवानब्रवीत्। यदि भवन्तोऽङ्गीकुर्वन्ति सर्वं सैन्यं निवेशयन्तु। इदानीं विश्रान्ताः श्वो महानदीं प्रतरिष्यामः। नदीमवतीर्य स्वर्गतस्य महीपतेरूर्ध्वदेहभवसुखप्रयोजनायोदकं दातुमिच्छामि। तथेत्युक्त्वा अमात्याः सावधानचित्तास्तां सेनां स्वस्वेष्टेन पृथक् पृथङ् न्यवेशयन्। विविधोपकरणयुतां तां सेनां गङ्गानद्यास्तीरे निवेश्य महात्मनो रामस्य निवर्तनं विचिन्तयन् भरत उवास।

## ७८

तदा निषादराजो गुहो गङ्गातीरे निविष्टां सेनां दृष्ट्वा संत्वरितो ज्ञातीनब्रवीत्। इतः सागरवन्महती सेना प्रदृश्यते। तस्या अन्तमूहितुमपि न शक्नोमि। महाकारः कोविदारवृक्षचिह्नितध्वजो यस्य रथे दृश्यते स कैकेयीपुत्रो भरतोऽस्मान् दाशान् बन्धयिष्यति हनिष्यति वा। अथवा पित्रा राज्याद् विवासितं रामं हन्तुं समायाति। रामो मम प्रभुः सखा च।

---

+ cr स्नापकाच्छादकाः। ग्राह्यः– स्नापकोच्छादकाः। उच्छादकाः अङ्गमर्दकाः इति गोविन्दराजः।

तस्य प्रयोजनं समीहमाना गङ्गातीरे सन्नद्धास्तिष्ठत। मांसमूलफलभोजिनो नदीरक्षाव्यापृताः सर्वे दाशाः स्वसैन्ययुक्ता नदीं गङ्गामन्वाश्रितास्तिष्ठन्तु। अस्माकं पञ्चशतनौषु एकैकस्यां शतं शतं युवानः कैवर्ताः सन्नद्धास्तिष्ठन्तु इत्यभ्यचोदयत्। यदि भरतो रामविषये सुबुद्धिः+ स्यात् तर्हीयं सेनाद्य क्षेमं गङ्गां तरिष्यति। गुह इत्युक्त्वा मत्स्यमांसमधून्युपायनं गृहीत्वा भरतमभिचक्राम। आयान्तं तं संप्रेक्ष्य सुमन्त्रो विनयेन भरतायाचचक्षे। ज्ञातिसहस्रेण परिवारित एष प्रभुर्गुहो दण्डकारण्यमार्गेषु कुशलो वृद्धस्ते भ्रातुः सखास्ति। काकुत्स्थ! तस्मान्निषाधाधिपतिर्गुहस्त्वां पश्यतु। स रामलक्ष्मणयोर्वासस्थानं निश्चयं विजानीते। तच्छुभं वचनं श्रुत्वा शीघ्रं गुहो मां पश्यतु इति भरत उवाच। लब्धानुज्ञः संहृष्टो गुहो ज्ञातिभिः परिवारित आगम्य प्रह्वो भरतमुवाच। अयं देशस्तव गृहारामसमः। वयं ते नम्राः*। सर्वे वयं तवाज्ञावशवर्तिनः। अस्माकं दाशकुले वस। निषादैः समुपाहृतं मूलं फलमार्द्रं शुष्कं मांसमन्यद् बहुविधं वन्यं चास्ति। स्वाशिता सेनेमां रात्रिं वत्स्यत्वित्याशंसे। विविधैर्वाञ्छितैः पदार्थैरर्चितः श्वः ससैन्यो गमिष्यसि।

७९

एवमुक्तो भरतो निषादाधिपतिं गुहं हेत्वर्थसहितं वाक्यं प्रत्युवाच। हे भ्रातुः सखे! महतीं मम सेनां त्वमेकोऽभ्यर्चितुमिच्छसि। महांस्ते कामः। तवादरेणैव स कृत इति मन्यस्व। इत्युक्त्वा भूयो भरत आह। गुह! कतरेण मार्गेण भरद्वाजाश्रमं गमिष्यामि? गङ्गानूपोऽयं देशो भृशं गहनो दुरत्ययश्च। तच्छ्रुत्वारण्यसंचारी गुहः प्राञ्जलिस्तमब्रवीत्। राजपुत्र!

---

+ cr यदा तुष्टस्तु भरतो। ग्राह्यः– यदादुष्टस्तु भरतो।

*वञ्चिताश्चापि ते वयम्। गत्यर्थकवञ्चुधातोरयमर्थो निष्पाद्यः। पुरःसूचनामदत्वा त्वया वयं वञ्चिता यतस्ते स्वागतमस्माभिर्न कृतमिति महेश्वरतीर्थगोविन्दराजौ।

सावधाना धन्विनो दाशास्त्वामनुगमिष्यन्ति। अहं च त्वामनुगमिष्यामि। परन्त्विदं ज्ञातुमिच्छामि। रामे दुर्भावेन कच्चित् त्वं न व्रजसि? इयं ते महती सेना मे शङ्कां जनयतीव। आकाश इव निर्मलो भरत एवमभिभाषमाणं गुहं श्लक्ष्णया वाचाब्रवीत्। यदा मम मनसि रामे द्रोहबुद्धिर्जायते स कालः कदापि मा भूत्। रामं प्रति मां शङ्कितुं नार्हसि। स मे पितृसमो ज्येष्ठो भ्राता। वनवासिनं रामं निवर्तयितुं यामि। अन्या बुद्धिस्ते न कार्या। अहं सत्यं ब्रवीमि। तच्छ्रुत्वा संहृष्टवदनो गुहो भरतं प्रति पुनर्बभाषे। हन्त! अयत्नादागतं राज्यं त्यक्तुमिच्छसि। त्वं धन्यः। त्वया तुल्यं जगतीतले न पश्यामि। त्वं कृच्छ्रगतं रामं प्रत्यानेतुमिच्छसि। नूनं शाश्वती ते कीर्तिर्लोकेषु संचरिष्यति। एवं गुहे भरतेन संभाषमाणे सूर्योऽस्तं गतो रजनी चागता। श्रीमान् भरतः सेनां संनिवेश्य गुहेन परितोषितः शयनं गतः। शत्रुघ्नश्च शयनं गतः। महात्मा भरतो धर्मदृष्टिः शोकानर्हश्च। तादृशस्तस्य रामचिन्तामयः शोक उपस्थितः। दावाग्नि–संतप्तवृक्षे गूढो वह्निस्तं पादपमिव शोकाग्निर्भरतस्य मनसि प्रज्वलन् तं दहति स्म। सूर्यांशुसंतप्तो हिमवान् यथा हिमं प्रसृतस्तथा भरतः सर्वगात्रेभ्यः शोकाग्निसंभवं स्वेदं[+] सृतः। दुःखरूपेण महाशैलेन कैकेयीपुत्रो भरत आक्रान्तः। तस्मिन् शैले ध्यानं दुर्भेदशिलाः। पुनः–पुनर्विनिःश्वसितं धातवः। दैन्यं पादपसंघः। शोकायासाधयः शिखराणि। प्रमोहोऽनन्तजन्तुसमुदायः। सन्ताप ओषधयो वेणवश्चासन्। सपरिवारो भरतो गुहेन सार्धं पुनः समागतोऽभवत्। सुदुर्मना गुहो भरतं पुनश्चाग्रजं प्रति समाश्वासयत्।

---

[+] cr प्रसृतः सर्वगात्रेभ्यः स्वेदः शोकाग्निसंभवः। ग्राह्यः– प्रसृतः सर्वगात्रेभ्यः स्वेदं शोकाग्निसंभवम्। अत्र गोविन्दराजः। स्वेदः शोकाग्निसंभव इति पाठस्तु न दृष्टान्तानुरूपः। स्वेदं प्रसृतः हिमं प्रसृत इत्यत्र गत्यर्थत्वात् कर्तरि क्तः।

८०

ततो वननिवासी गुहो महात्मने भरताय लक्ष्मणस्य सद्गुणसंपत्तिमाचचक्षे। भ्रातृरक्षणार्थमधिककालं जाग्रतं शरचापधरं सद्गुणसंपन्नं लक्ष्मणमहमब्रवम्। तात! लक्ष्मण! इयं सुखा शय्या त्वदर्थमुपकल्पिता। प्रत्याश्वसिहि। अस्यां सुखं शेष्व। वयं सर्वे कष्टसहिष्णवः। त्वं सुखोचितः। रामं रक्षितुं वयं जागरिष्यामः। लोके मम रामात्प्रियतरः कश्चन नास्ति। उत्सुको मा भूः। किं तवाग्रतोऽसत्यमहं ब्रवीमि? नैवासत्यं भणामि। रामस्य प्रसादादहमस्मिन् लोके सुमहद् यशो विपुलौ धर्मार्थौ च प्राप्तुमाशंसे। सोऽहं धनुष्पाणिः सर्वैः स्वबन्धुभिः सह सीतया सह शयानं रामं रक्षिष्यामि। अस्मिन् वने सदा चरतो मे किञ्चिदविदितं नास्ति। वयं युधि चतुरङ्गं बलमपि प्रसहेमहि। एवमस्माभिरुक्तो लक्ष्मणः सविनयमस्मानाह। (पत्रे १७२-१७३, ४५ सर्गः। रामे सीतया सह ... शर्वरी अत्यवर्तत।) अपरेद्युः प्रभाते उभावस्मिन् भागीरथीतीरे जटाः कारयित्वा मया सुखं संतारितौ। ततो जटाधरौ द्रुमचीरवाससौ कुञ्जरयूथपोपमौ श्रेष्ठधनुर्बाणखड्गधरौ परस्परमवेक्षमाणौ सीतया सह रामलक्ष्मणौ गतौ।

८१

भरतो भृशमप्रियं गुहस्य वचनं श्रुत्वा यत्र तदप्रियं श्रुतं तत्रैव ध्यायन् निषसाद। मुहूर्तं प्रत्याश्वस्य भृशं दुःखितस्तोत्रैरतिविद्धो द्विप इव सहसा पपात। अनन्तरस्थितः शत्रुघ्नस्तदवस्थं भरतं परिष्वज्य शोकेन विसंज्ञ उच्चै रुरोद। तत उपवासकृशा दीना भर्तृवियोगकर्शिताः सर्वा भरतस्य मातरः समापेतुः। ता रुदत्यः पतितं तं पर्यवारयन्। कौसल्या रुदती तं परिष्वज्य परिपप्रच्छ। पुत्र! व्याधिः कच्चित् ते शरीरं न परिबाधते? अद्य राजकुलस्य जीवितं त्वदधीनम्। रामे भ्रात्रा सह वनं गते राज्ञि दशरथे वृत्ते त्वां दृष्ट्वा जीवामि। त्वमेकोऽद्यास्माकं नाथः। कच्चिन्न

त्वया लक्ष्मणस्य रामस्य सीताया वा किञ्चिदप्रिय श्रुतम्? तदा स मुहूर्तं समाश्वस्य कौसल्यां परिसान्त्व्य गुहमुवाच। मम भ्राता सीता लक्ष्मणश्च रात्रौ क्वावसन्? कस्मिंश्छयने किं भुक्त्वा अस्वपन्? गुह! शंस। हृष्टो गुहः प्रियहितेऽतिथौ रामे यथात्मना प्रवर्तितं तद् भरतमकथयत्। मया रामाय भोजननिमित्तं बहुविधमन्नं भक्षा विविधानि फलानि च सर्वं बहूपहृतम्। रामस्तत् सर्वं प्रतिन्यवर्तयत् क्षत्रधर्ममनुस्मरन् न तत् प्रत्यगृह्णात्। अस्माभिर्न प्रतिग्राह्यम्। सर्वदा देयम्। इति तेन वयमनुनीताः। लक्ष्मणेनानीतं वारि सीतया सह पीत्वा उपावसत्। जलशेषेण लक्ष्मणोऽपि तथाकरोत्। ततस्ते त्रयो वाङ्नियताः सन्ध्यामुपासत। पश्चात् सौमित्रिः स्वयं बर्हींष्यानीय रामाय क्षिप्रं स्वास्तरमकरोत्। रामस्तस्मिन् स्वास्तरे सीतया सह समाविशत्। तयोः पादौ प्रक्षाल्य लक्ष्मणोऽपचक्राम। इदमेव तदिङ्गुदीमूलं यत्र रामः सीता च तां रात्रिं शयितौ। इदमेव तत् तृणं च। अङ्गुलीत्राणानि धृत्वा शरपूर्णेषुधी पृष्ठे नियम्य सज्यं महद् धनुरुपोह्य लक्ष्मणो निशां रामस्य परितः केवलमतिष्ठत्। अहं च मम बन्धुभिःसाकं सकार्मुको लक्ष्मणेन सह रामं परिपालयन् स्थितोऽभवम्।

८२

तच्छ्रुत्वा भरतो मन्त्रिभिः सहेङ्गुदीमूलमागम्य तां रामशय्यामवेक्ष्य सर्वा मातृरुवाच। महात्मना रामेणेह भूमौ शर्वर्यां शयितम्। इयं शय्या तस्य विमर्दिता। महाभाग्यकुलोत्पन्नस्य महाभाग्यस्य दशरथस्य पुत्रो राम उर्व्यां स्वप्तुं नार्हति। राम उत्तमशयनेषु शेते स्म येषामुपरि अजिनानि वरास्तरणानि च विस्तृतान्यभवन्। सोऽद्य महीतले कथं शेते? मम भ्राता रामो बहुवर्णपुष्पसंचयप्रकीर्णेषु शुकसंघरुतेषु प्रासादाग्रोत्तमगृहेषु गीतवादित्रनिर्घोषैर्वराभरणनिःस्वनैर्मृदङ्गश्राव्यशब्दैश्च सततं प्रतिबोधितो बहुभिः सूतमागधैर्वन्दिभिश्च गाथाभिरनुरूपाभिस्तुतिभिश्च काले वन्दितः।

इदं लोके अश्रद्धेयम्। सत्यमिति मे न प्रतिभाति। मम भावो मुह्यते। अयं स्वप्न इति मे मतिः। नूनं किमपि दैवतं न कालाद् बलवत्तरं यतो दशरथपुत्रो रामो भूमावशेत। अस्यैव कालस्य प्रभावेण विदेहराजस्य दुहिता दशरथस्य स्नुषा सीता च भूमावशेत। इयं मम भ्रातुः शय्या। इदं तृणं तस्य परिवर्तितेन विमृदितम्। मन्ये साभरणा सीतास्मिन् शयने तदा सुप्ता। तत्र तत्र कनकबिन्दवः सक्ता दृश्यन्ते। सुव्यक्तं तदा सीतयोत्तरीयमिहासक्तम्। सक्ता एते कौशेयतन्तवः प्रकाशन्ते। साध्व्याः स्त्रिया भर्तुः शय्या सुखा मन्ये। येन सुकुमारी सती मैथिली दुःखमस्मिन् शयने न व्यजानात्। सार्वभौमकुलजातः सर्वलोकसुखावहः सर्वलोकप्रियः प्रियं महद् राज्यं त्यक्त्वा सुखभागी दुःखानर्हो रामो भुवि शयितः। पतिमनुगता वैदेही खलु सिद्धार्था। महात्मना तेन हीना वयं संशयिताः। स्वर्गते दशरथे अरण्याश्रिते रामे पृथिवी नायकरहिता शून्येव मे प्रति-भाति। वने वसतोऽपि तस्य बाहुवीर्याभिरक्षितां वसुन्धरां न कश्चिदाक्रमितुमीहते। शून्यप्राकाररक्षामयन्त्रितहयद्विपामपावृतपुरद्वारां दुःखितसेनां विषमस्थामरक्षितां राजधानीं भक्षान्[+] विषकृतानिव शत्रवो नाभिमन्यन्ते। अद्यप्रभृत्यहं जटाचीराणि धारयन् नित्यं फलमूलाशनो भूमौ तृणेषु वा शयिष्ये। रामकृतां प्रतिज्ञां ममोपरि धृत्वा शिष्टं कालं तस्य कृतेऽहं वने सुखं निवत्स्यामि। तथा कृतेऽस्य प्रतिज्ञा मिथ्या न भविष्यति। भ्रातुरर्थाय वने वसन्तं मां शत्रुघ्नोऽनुवत्स्यति। रामो लक्ष्मणेन सहायोध्यां पालयिष्यति ब्राह्मणा राममयोध्यायामभिषेक्ष्यन्ति। अपि देवता इमं मे मनोरथं सत्यं कुर्युः? मया स्वयं बहुप्रकारं शिरसा प्रसाद्यमानो रामो यदि नाङ्गीकरिष्यति ततो वने वसन्तं तं चिरायानुवत्स्यामि। स मामुपेक्षितुं नार्हति।

---

[+] cr भक्ष्यान्। ग्राह्यः– भक्षान्। भक्ष्यन्ते इति भक्षाः। कर्मणि घञ्। बालमनोरमा। संस्कृतं भक्षाः. कौ. सू. १२१७.

८३

भरतस्तत्रैव गङ्गाकूले रात्रिं व्युष्य प्रातरुत्थाय शत्रुघ्नमब्रवीत्। शत्रुघ्न! उत्तिष्ठ। गुहं शीघ्रमानय। सोऽस्मान् गङ्गां तारयिष्यति। एवं प्रेरितः शत्रुघ्नो भ्रातरं रामं विचिन्तयन् जागर्मि नाहं स्वपिमीत्यवोचत्। एवमन्योन्यं तयोः संवदतोर्गुह आगम्य प्राञ्जलिर्भरतमब्रवीत्। काकुत्स्थ! कच्चिन्नदीतीरे शर्वरीं सुखमवात्सीः? कच्चित् सहसैन्यस्य तव सर्वमनामयम्? रामवशवर्ती भरतः स्नेहादुदीरितं तद् गुहस्य वचनं श्रुत्वा इदमब्रवीत्। निषादराज! शर्वरी नः सुखा। त्वया वयं सम्मानिताः। इदानीमस्मान् दाशा बह्वीभिर्नौभिर्गङ्गां सन्तारयन्तु। ततो गुहो भरतशासनं श्रुत्वा त्वरितो नगरं पुनः प्रविश्य बन्धुजनमुवाच। उत्तिष्ठत। प्रबुध्यध्वम्। सदा वो भद्रमस्तु। नावः समनुकर्षत। सेनां तारयिष्यामः। एवं राज्ञा शासितास्ते शीघ्रं समन्ततः पञ्चशतानि नावः समानिन्युः। महाघण्टाधराः पताकाभिः शोभमाना युक्तवाताः सुसंहता नावः स्वस्तिकाख्या अन्याश्चानिन्युः। ततो गुहः पाण्डुकम्बलसंवृतामानन्दकरध्वनिकारिणीं कल्याणीं स्वस्तिकनाम्नीं नावमुपाहरत्। तां नावं प्रथमं पुरोहितो वसिष्ठो गुरवो ब्राह्मणाश्चारुरुहुः। ततो भरतः शत्रुघ्नः कौसल्या सुमित्रा कैकेयी अन्या राजयोषितश्चारुरुहुः। पश्चाद् राजबन्धूनां स्त्रियः शकटा आपणाश्चान्या नाव आरुरुहुः। केचिज्जनाः स्वनिवासस्थानं दाहयामासुः*। केचित् तीर्थं जगाहिरे। केचिद् भाण्डानि गृहीत्वा नौषु निदधुः। तेषां घोषः स्वर्गमस्पृशत्। पताकिन्यो दाशैः स्वयमधिष्ठितास्ता नावस्तदा आरूढं जनं वहन्त्य आशु संपेतुः। काश्चिन्नावो नारीभिः पूर्णाः। काश्चिदश्वैः पूर्णाः। काश्चिद् रथान् वृषभान् महाधनं च वहन्ति स्म। ता नावः परं तीरं गत्वा तं

---

* सैनिकैः स्वनिवासदहनं शात्रवैरनभिज्ञानार्थं यद्वा विजयलक्ष्मीप्राप्त्यर्थमिति व्याख्यातारः।

जनमवरोप्य प्रत्याजग्मुः। तदा दाशबन्धुभिर्नावो विचित्राभिर्गतिभिश्चालिताः। सवैजयन्ता गजा गजारोहप्रचोदिता नदीं तरन्तः सध्वजाः पर्वता इव प्रकाशन्ते स्म। केचिन्नाव आरुरुहुः। केचित् प्लवैस्तेरुः। केचित् कुम्भैर्घटैश्च तेरुः। केचिद् बाहुभिस्तेरुः। दाशैः स्वयं गङ्गां सन्तारिता सा सेना मैत्रनामके मुहूर्ते श्रेष्ठं प्रयागवनं प्रययौ। महात्मा भरतश्चमूं विश्राम्य यथोपजोषं निवेश्य मुनिप्रवरं भरद्वाजं द्रष्टुमृत्विग्भिः सह प्रतस्थे।

८४

धर्मज्ञो भरतः क्रोशादेव भरद्वाजाश्रमं दृष्ट्वा सर्वं बलमवस्थाप्यायुधानि परिवारं च विसृज्य क्षौमे वाससी वसित्वा पुरोधसं पुरोधाय मन्त्रिभिः सह पद्भ्यामेव जगाम। ततो भरद्वाजस्य दर्शनदूरेऽमात्यानवस्थाप्य पुरोहितमनुसृत्य जगाम। महर्षिर्भरद्वाजो वसिष्ठं दृष्ट्वैवार्घ्यमर्घ्यमिति शिष्यान् ब्रुवन् तूर्णमासनादुत्तस्थौ। स वसिष्ठेन समागतो भरतेनाभिवादितश्च। तदायं दशरथस्य पुत्र इति भरद्वाजोऽजानात्। भरद्वाजस्तयोः प्राधान्यक्रमेणार्घ्यं पाद्यं फलानि च दत्वा कुलस्य कुशलमपृच्छत्। अयोध्यायां सैन्ये कोशे मित्रेषु मन्त्रिषु च क्षेममपृच्छत्। मृतं जानन् दशरथस्य प्रसंगमपि नाकरोत्। वसिष्ठो भरतश्च भरद्वाजं शरीरेऽग्निषु शिष्येषु वृक्षेषु मृगपक्षिषु चानामयं पप्रच्छतुः। सर्वं कुशलमुक्त्वा भरद्वाजो रामगतस्नेहं पुरस्कृत्य भरतं प्रत्युवाच। राज्यं प्रशासतस्तवेहागमने किं कार्यम्? सर्वमेतन्ममाचक्ष्व। मम मनः शङ्कते। कौसल्यासुतो रामः सभ्रातृकः सभार्यः स्त्रीनियुक्तेन पित्रा चतुर्दशसमा वनं प्रव्राजितः। कच्चिदकण्टकं राज्यं भोक्तुमनाः सानुजस्य तस्य पापं कर्तुमिह नेच्छसि? एवमुक्तो भरतो दुःखात् पर्यश्रुनयनः संसज्यमानया वाचा भरद्वाजं प्रत्युवाच। भगवानपि यद्येवं मां मन्यते तर्हि हतोऽस्मि। मयि दोषं नाशङ्केथाः। मा

मामेवं प्रश्नेन तुद। दूरस्थे मयि मे माता यदवोचत् न तन्ममेष्टम्। तेनाहं न तुष्टः। नाहं तद् वचनमाददे। अहं तु नरश्रेष्ठं तं प्रसाद्यायोध्यां प्रति-नेतुं तस्य पादौ नमस्कर्तुं चेहायातोऽस्मि। भगवन्! मामेवंगतं मत्वा प्रसादं कर्तुमर्हसि। सम्प्रति महीपती रामः क्वास्ति? तन्मे शंस। तेन वचनेन प्रसन्नो भरद्वाज आह। नरोत्तम! गुरुषु सत्प्रवर्तनं दमः साधूनामनुयानं चेदं सर्वं राघववंशजे त्वयि युज्यते। त्वन्मनस्स्थमेतदहं जाने। दृढीकर्तुं तव कीर्तिमत्यर्थं समभिवर्धयितुं च त्वामपृच्छम्। तव भ्राता चित्रकूटे महागिरौ वसति। तं देशं श्वो गन्तासि। मन्त्रिभिः सहाद्येह वस। सुप्राज्ञः काङ्क्षितार्थप्रदानदक्षस्त्वं ममेममभिलाषं कर्तुमर्हसि। तद्वाक्येन भृशं हृष्टो भरतस्तथेत्युक्त्वा तदाश्रमे निशानिवासाय बुद्धिं चकार।

८५

तदा स मुनिस्तत्रैव निवस्तुं निश्चितवन्तं भरतमातिथ्येन न्यमन्त्रयत्। भरतो मुनिमाह। भगवन्! अरण्ये योऽतिथिसत्कारः संभवः स कृतस्त्वया पाद्येनार्घ्येण च। भरद्वाजः प्रहसन्निव प्रत्युवाच। मां प्रति त्वं प्रीतिमान् येन केनचित् सन्तुष्यसीति जाने। तव सेनाया भोजनव्यवस्थां कर्तुमिच्छामि। यस्मिन् कृते मम सन्तोषो भवति तत् ते कर्तुमिच्छामि। पुरुषर्षभ! किमर्थं सेनां दूरे निक्षिप्येहागतोऽसि? सबलः कस्मादिह नोपयातः? प्राञ्जलिर्भरतो मुनिं प्रत्युवाच। भागवन्! पूज्यस्य ते भयात् ससैन्य इह नोपयातोऽस्मि। उत्तमाश्वा मनुष्या मत्तवारणाश्च महतीं भूमिं प्रच्छाद्य मामनुयान्ति। तवाश्रमेषु वृक्षानुदकं भूमिं पर्णशालाश्च न दूषयेयुरित्यहमेक एवागतः। ततः सेना इत आनीयतामिति महर्षिणाज्ञप्तो भरतस्सेनां तत्र समानयत्। अथ भरद्वाजः अग्निशालां प्रविश्य त्रिराचम्य जलेन मुखं द्विः परिमृज्य आतिथ्यकार्यनिर्वहणार्थं विश्वकर्माणमाजुहाव। अहमातिथ्यं कर्तुमिच्छामि।

गृहनिर्माणार्थं विश्वकर्माणमाह्वये। तदातिथ्यं मे संविधीयताम्। प्राक्स्रोतसः प्रत्यक्स्रोतसश्च पृथिव्यामन्तरिक्षे च स्थिता नद्यः सर्वशोऽद्य समायान्तु। नद्यः काश्चिन्मैरेयं काश्चित् सुनिष्ठितां सुरामन्या इक्षुरसोपमं शीतं जलं च स्रवन्तु। देवगन्धर्वान् विश्वावसुहाहाहूहून् देवजात्या गन्धर्वजात्याः सर्वा अप्सरसश्चाह्वयामि। घृताचीं विश्वाचीं मिश्रकेशीमलम्बुसां शक्रं ब्रह्माणं च याः सेवन्ते ताः सर्वाः सपरिच्छदास्तुम्बुरेण सार्धमाह्वयामि। उत्तरकुरुदेशे चैत्ररथाख्यं दिव्यं वनमस्ति। तस्य पत्राणि उत्तमवासांसि भूषणानि फलानि दिव्यनार्यश्च भवन्ति। तत् कौबेरं वनमिहैतु। भगवान् सोम उत्तममन्नं विविधं बहु भक्ष्यं भोज्यं चोष्यं लेह्यं च मे विधत्ताम्। पादपप्रच्युतानि विचित्राणि माल्यानि सुरादीनि पेयानि विविधानि मांसानि च ददातु। समाधिना अप्रतिमेन तेजसा तपसा च युक्तः स मुनिः शास्त्रोक्तस्वरेणैवमब्रवीत्। स महर्षिः कृताञ्जलिः प्राङ्मुखोऽध्यायत्। तदा तानि सर्वाणि दैवतानि पृथक् पृथगाजग्मुः। ततो मलयं दर्दुरं चोपस्पृश्य स्पर्शेन शरीरमाह्लादयन् सुखः शिवः स्वेदनुदोऽनिलो ववौ। ततो मेघाः पुष्पवृष्टिमवर्षन्। देवदुन्दुभिघोषः सर्वासु दिक्षु शुश्रुवे। वायवः सुखकरा ववुः। अप्सरोगणा ननृतुः। देवा गन्धर्वाश्च प्रजगुः। वीणाश्च+ प्रत्यवादयन्। उच्चारितः श्लक्ष्णो लयसमन्वितः समः स शब्दो द्यां भूमिं प्राणिनां श्रवणानि च विवेश। नृणां श्रोत्रसुखे तस्मिन् दिव्ये शब्दे उपरते भरतस्य सैन्यं विश्वकर्मणो निर्माणं ददर्श। पञ्चयोजनं यावत् समन्ताद् भूमिः समा नीलमणिवैदूर्यमणिसन्निभैर्बहुभिः शाद्वलैश्छन्ना च बभूव। तस्मिन् प्रदेशे फलभूषणा बिल्वाः कपित्थाः पनसा बीजपूरका आमलक्यश्चूताश्च वृक्षा बभूवुः। उत्तरेभ्यः कुरुभ्यो दिव्यं वनमाजगाम बहुभिस्तीरजैर्वृक्षैर्वृता दिव्या नदी च। शुभ्राणि चतुश्शालानि गजवाजिनां शालाः शुभानि

---

+ cr वीणा प्रमुमुचुः स्वरान्। ग्राह्यः– वीणाश्च प्रत्यवादयन्।

हर्म्यप्रासादसंयुक्ततोरणानि चाविर्बभूवुः। सितमेघनिभं सुतोरणं शुक्लमाल्यकृतालङ्कारं दिव्यगन्धसमुक्षितं चतुरश्रमसंबाधं शयनासनयानवद् दिव्यैः सर्वरसैर्युक्तं दिव्यभोजनवस्त्रवदुपकल्पितसर्वान्नं धौतनिर्मलभाजनं क्लृप्तसर्वासनं स्वास्तीर्णशयनोत्तमं श्रीमद् राजवेश्म चाविर्बभूव। महर्षिणानुज्ञातो भरतो रत्नसंपूर्णं तद् वेश्म प्रविवेश। सपुरोहिताः सर्वे मन्त्रिणस्तमनुजग्मुः। तद् गृहसंविधानं दृष्ट्वा मुदायुज्यन्त+। मन्त्रिभिःसार्धं भरतस्तत्र दिव्यं राजासनं व्यजनं छत्रं च दृष्ट्वा तत् सर्वं रामस्य राजभोग्यं वस्तु संभाव्य प्रदक्षिणं चक्रे। रामाय नमस्कृत्यासनं पूजयामास। वालव्यजनमादाय सचिवासने न्यषीदत्। सर्वे मन्त्रिपुरोहिता यथाक्रमं निषेदुः। ततः सेनापतिः तत्पश्चात्तन्नचूनाधिकारी प्रशास्ता चोपविविशतुः। ततो भरद्वाजस्य शासनात् क्षणकाले तत्र पायसकर्दमा नद्यो भरतमुपातिष्ठन्त। तासामुभयकूलयोः पाण्डुमृत्तिकालेपना ब्रह्मप्रसादजा दिव्या रम्या आवसथाश्चाविर्बभूवुः। तस्मिन्नेव मुहूर्ते दिव्याभरणभूषिता ब्रह्मप्रहिता विंशतिसाहस्राः स्त्रियं आगुः। सुवर्णमणिमुक्ताप्रवालशोभिताः कुबेरप्रहिता विंशतिसाहस्राः स्त्रिय आगुः। याभिर्गृहीतः पुरुषः सोन्माद इव लक्ष्यते ता विंशतिसाहस्रा अप्सरसो नन्दनादाजग्मुः। नारदस्तुम्बुरुर्गोपः पर्वतः सूर्यवर्चसः श्रेष्ठा गन्धर्वराजानश्च भरतस्याग्रतो जगुः। अथ भरद्वाजस्य शासनादलम्बुसा मिश्रकेशी पुण्डरीका वामना च भरतस्य समीपं ननृतुः। देवोद्यानेषु चैत्ररथवने च यानि पुष्पाणि सन्ति भरद्वजस्य शासनात् तानि प्रयागेऽदृश्यन्त। भरद्वाजस्य तेजसा बिल्वा मार्दङ्गिका विभीतकास्तालवादका अश्वत्था नर्तकाश्चाभवन्। ततः सरलास्तालास्तिलका नक्तमालकाश्च वृक्षाः प्रहृष्टाः कुब्जा वामनाश्च भूत्वा तत्र सम्पेतुः। स्त्रीलिङ्गशब्दाः

---

+ cr बभूवुश्च मुदा युक्ता तं दृष्ट्वा वेश्मसंविधिम्। ग्राह्यः– बभूवुश्च मुदा युक्ता दृष्ट्वा वेश्मविधिं ततः।

शिंशपामलकीजम्बूवृक्षाः स्त्रीशरीरं कृत्वा भरद्वाजाश्रमेऽवसन्। हे मद्यपाः! यावदिच्छत तावत् सुरां पिबत। हे बुभुक्षिताः! पायसं पिबत। सुमेध्यानि मांसानि च भक्ष्यन्तामिति सैनिका उक्ताः। एकैकं सैनिकं सप्ताष्ट प्रमदा उद्वर्तनं कृत्वा रम्येषु नदीतीरेषु स्नापयामासुः। रुचिरलोचनाः स्त्रियस्तेषां संवाहनं चक्रुः। तेषां शरीराणि परिमृज्य तान् सुरामपाययन् स्वयं चापिबन्। मुनिकल्पिता महाबला वाहनपालका इक्ष्वाकुसेनाया हयान् गजानुष्ट्रान् खरान् बलीवर्दांश्चेक्षून् मधुमिश्रितलाजांश्च भोजयन्ति स्म +। अश्वबन्धः अश्वं नाजानात्। कुञ्जरग्रहः कुञ्जरं न ज्ञातवान्। मत्ता प्रमत्ता मुदिता च सर्वा चमूर्ददृशे। सर्वकामैस्तर्पिता रक्तचन्दनलिप्ता अप्सरोगणसंयुक्ताश्च सैन्या इत्थमुदैरयन्। अयोध्यां न गमिष्यामः। दण्डकान् न गमिष्यामः। भरतस्य कुशलमस्तु। रामस्य च सुखमस्तु। इति पदातयो हस्त्यश्वारोहास्तेषां परिचारकाश्च तथालब्धसत्कारा नियमरहिता भूत्वा वाचमुदैरयन्। बहुसहस्राणि भरतस्यानुयातारः सम्प्रहृष्टा विनेदुः। अयं स्वर्ग इति प्रोचुश्च। अमृतोपमं तदन्नं भुक्तवतां तेषां दिव्यांस्तान् भक्ष्यपदार्थान् दृष्ट्वा पुनर्भक्षणे मतिर्बभूव। सहस्रशो दासा दास्यः स्त्रियः सैनिकाश्च नूतनवस्त्राणि धृत्वा भृशमतृप्यन्। तत्र कुञ्जराः खरा उष्ट्रा बलीवर्दा अश्वा मृगाः पक्षिणश्च सुभृता भूत्वा अन्याहारं नापैक्षन्त। तत्राशुक्लवासाः क्षुधितो मलिनो रजोध्वस्तकेशो वा कश्चिन्नरो नासीत्। तत्र सैनिकाः शुक्लान्नभरितानि पुष्पालङ्कृतानि सहस्रशो लोहपात्राणि ददृशुः। तानि श्रेष्ठव्यञ्जनयुतैरजवराहमांसैर्विविधफलरसैर्गन्धरसान्वितैः सूपैश्च पूर्णान्यासन्। वनपार्श्वेषु पायसकर्दमाः कूपा बभूवुः। गावः कामदुघा द्रुमा मधुच्युतश्चासन्। मैरेयपूर्णा वाप्यस्तासां परितः पिठरेषु प्रतप्ता मृगमयूरकुक्कुटमांसचयाश्चाभवन्*। एवं बहुविधभोग्यवस्तुनिचयं

---

+ पङ्क्तिर्ग्राह्या – अभोजयन् वाहनपास्तेषां भोज्यं यथाविधि।

* ६६–७३ श्लोका न अनूदिताः।

भरतसेना प्राप। तत्रत्या सर्वे मनुष्या महर्षिणा भरतस्य कृतं स्वप्न-कल्पमद्भुतं तदातिथ्यं दृष्ट्वा व्यस्मयन्त। इत्येवं नन्दने देवानामिव रम्ये भरद्वाजाश्रमे तेषां भरतसैन्यानां रममाणानां सा रात्रिरत्यवर्तत। भरद्वाजेनानुज्ञातास्ता नद्यो वराङ्गना गन्धर्वाश्च यथागतं प्रतिजग्मुः। तत्पश्चादपि ते सैनिकाः सुरापानमत्ता दिव्यागुरुचन्दनोक्षिताः प्रमर्दितप्रकीर्णस्रगुत्तमाश्चासन्।

८६

ततः कृतातिथ्यः सपरिवारो भरतस्तां रजनीमुषित्वा अनुज्ञां प्रार्थयितुं भरद्वाजसकाशं जगाम। हुताग्निहोत्र ऋषिः प्राञ्जलिमागतं भरतं प्रेक्ष्याभ्यभाषत। इहास्मद्विषये तव रात्रिः सुखं गता कच्चित्? आतिथ्ये तव जनः सन्तुष्टः कच्चित्? शंस। भरत आश्रमान्निष्क्रान्तं तमृषिं प्रणम्योवाच। भगवन्! सामात्यबलवाहनस्त्वयात्यर्थं सर्वकामैस्तर्पितः सुखोषितोऽस्मि। प्रेष्यैः सह सर्वे वयमपेतश्रमाः सुभुक्ता उत्तमगृहेषु सुखोषिताः स्मः। त्वामामन्त्रये। भ्रातुः समीपं प्रस्थितं मां मैत्रेण चक्षुषा वीक्षस्व। धर्मज्ञ! धार्मिकस्य मम भ्रातुराश्रमस्थानं निर्दिश। केन मार्गेण तत्र गन्तव्यं कियच्च दूरम्? इति पृष्टो भरद्वाजो भ्रातृदर्शनलालसं भरतं प्रत्युवाच। भरत! सार्धयोजनद्वयदूरे विजने वने रम्यनिर्झरकाननश्चित्रकूटो+ गिरिरस्ति। तस्योत्तरपार्श्वे मन्दाकिनी नदी प्रवहति। तीरस्थैः पुष्पितवृक्षैः सा संछन्ना वर्तते। तस्यास्तीरयोः रम्याणि पुष्पितानि काननानि सन्ति। तत्सरितः अनन्तरं चित्रकूटः पर्वतोऽस्ति। तस्मिन् तयोः पर्णकुटी अस्ति। ध्रुवं तौ तत्र वसतः। प्रथमं दक्षिणेन मार्गेण गत्वा ततो नैर्ऋत्यां गन्तव्यम्। तन्मार्गेण गजवाजिरथाकीर्णां वाहिनीं वाहय। ततो रामं द्रक्ष्यसि। प्रयाणवार्तां श्रुत्वा दशरथभार्या यानानि हित्वा भरद्वाजं पर्यवारयन्। कृशा दीना वेपमाना

---

+ cr रम्यनिर्दरकाननः। ग्राह्यः– रम्यनिर्झरकाननः।

कौसल्या मुनेश्चरणौ सुमित्रया सह जग्राह। असफलया वाञ्छया सर्वलोकगर्हिता कैकेयी लज्जिता मुनेश्चरणौ जग्राह। तं महामुनिं प्रदक्षिणं कृत्वा भरतस्यादूराद् दीनमनाः स्थिता। तदा भरद्वाजो भरतं पप्रच्छ। राघव! तव मातृणां का कस्य मातेति ज्ञातुमिच्छामि। एवं पृष्टो भरतः प्राञ्जलिरुवाच। भगवन्! दीना शोकानशनकर्शिता एषा पितुर्महिषी कौसल्या। धातारमदितिरिवैषा रामं सुषुवे। एषा दुर्मना वनान्तरे शीर्णपुष्पा कर्णिकारशाखेव कौसल्याया वामभुजं श्लिष्टा सुमित्रा तिष्ठति। लक्ष्मणशत्रुघ्नावेतस्याः सुतौ। अपरामेषां मम मातरं कैकेयीं विद्धि। अस्या एव कारणेन रामलक्ष्मणौ मरणतुल्यमरण्यवासं गतौ। पुत्रविहीनो राजा दशरथः स्वर्गं गतः। ऐश्वर्यकामा आर्यरूपिणी अनार्या पापनिश्चया मम महतो व्यसनस्य कारणं चैषा। ताम्राक्षः स बाष्पगद्गदया गिरा एवमुक्त्वा क्रुद्धो नाग इव निशश्वास। तदा तं भरद्वाजः अर्थवद् वचनं प्रत्युवाच। भरत! कैकेयी त्वया दोषेण नावगन्तव्या। एतद् रामप्रव्राजनं सुखोदर्कं भविष्यति। भरतो भरद्वाजमभिवाद्य प्रयाणाय सिद्धः प्रदक्षिणं कृत्वा तेनानुज्ञातः सैन्यमचोदयत्। ततो बहुविधो जनः प्रयाणार्थी दिव्यान् हेमपरिष्कृतान् युक्तान् वाजिरथानध्यारोहत्। हेमकक्ष्याः पताकिनः करेणवो गजाश्च वर्षतौ जीमूता इव सघोषाः संप्रतस्थिरे। महान्ति लघूनि च विविधानि यानानि प्रययुः। पदातयः पादैरेव ययुः। अथ कौसल्याप्रमुखाः स्त्रियो रामदर्शनकाङ्क्षिण्यो मुदिता विशिष्टैर्वाहनैः प्रययुः। श्रीमान् भरतो नवोदितसूर्यतुल्यभासां सिद्धां शुभां शिबिकामास्थाय सपरिवारः प्रययौ। गजवाजिरथाकुला सा महासेना उत्थितो महामेघ इव दक्षिणां दिशमावृत्य मृगपक्षिभिर्जुष्टानि वनानि व्यतिक्रम्य प्रयाता। संप्रहृष्टद्विपवाजियोधा मृगपक्षिसंघान् वित्रासयन्ती भरतस्य सा सेना तन्महद् वनं प्रविगाहमाना रराज।

८७

प्रयातया तया महत्या सेनयारण्ये अर्दिता मृगसमूहनायकाः सयूथाः संप्रदुद्रुवुः। वनराजीषु गिरिषु नदीषु च ऋक्षाः पृषतसंघा रुरवश्च समन्ततः अदृश्यन्त। धर्मात्मा स भरतः प्रीतो नादिन्या महत्या चतुरङ्गया सेनया वृतः संप्रतस्थे। महात्मनो भरतस्य समुद्रप्रवाहसमाना सेना प्रावृष्यम्बुदो द्यामिव महीं संछादयामास। तुरङ्गवारणसमूहैर्व्याप्ता भूश्चिरकालमनालक्ष्या बभूव। दूरमध्वानं गत्वा श्रान्तवाहनो भरतो वसिष्ठमब्रवीत्। यथा मया श्रुतं यथा चैतद्देशरूपं लक्ष्यते तथा तर्कयामि भरद्वाजोक्तं तं देशं प्राप्ताः स्मः। अयं चित्रकूटो गिरिः। इयं मन्दाकिनी नदी। दूराददो नीलमेघनिभं वनं प्रकाशते। मामकैर्वारणैर्गिरेः रम्याणि सानून्यवमृद्यन्ते। यथा सान्द्रनीलमेघा वर्षाकाले वर्षं मुञ्चन्ति तथा पर्वतसानुषु वृक्षाः कुसुमानि मुञ्चन्ति। शत्रुघ्न! किन्नरसंचरितमिमं पर्वतं पश्य। मकरैः सागर इव समन्तान्मृगैराकीर्णः+। प्रचोदिताः शीघ्रवेगा एते मृगगणाः शरदि गगने वायुप्रहता मेघराज्य इव भान्ति। अमी पर्वतसानवो मेघतुल्येषु शिरोऽग्रेषु दाक्षिणात्या नरा इव कुसुमापीडान् धरन्ति। घोरदर्शनमिदं वनं पूर्वं निश्शब्दं भूत्वा सम्प्रत्यस्मदागमनेन जनाकीर्णायोध्येव मे प्रतिभाति। अश्वखुरैरुदीरितो रेणुराकाशं प्रच्छाद्य तिष्ठति। मम प्रियं कुर्वन्निव शीघ्रं तमनिलो वहति। अस्माकं रथाः शीघ्रं कानने संपतन्ति। पश्य। एतान् बर्हिणः अन्यांश्च पक्षिणः पश्य। वित्रासिता एते पर्वतं स्वनिवासं प्रविशन्ति। अयं देशो नितान्तं मनोज्ञो मे प्रतिभाति। तपस्विनां निवासोऽयं नूनं स्वर्गपथ एव। अस्मिन्नरण्ये बहवः पृषतमृगाः कुसुमैश्चित्रिता इव मनोज्ञरूपा मृगीभिः सहिता लक्ष्यन्ते। सैन्याः प्रतिष्ठन्ताम्। कानने रामलक्ष्मणौ साधु विचिन्वन्तु। भरतवचनेन शस्त्रपाणयः पुरुषास्तद्वनं

---

+ cr हयैः समन्तादाकीर्णम्। ग्राह्यः– मृगैःसमन्तादाकीर्णम्।

विविशुस्ततो धूमं च ददृशुः। ते निवृत्यामनुष्ये प्रदेशेऽग्निर्न भवति। व्यक्तं राघवावत्रैव स्तः। यद्यत्र राघवौ न स्तस्तर्हि अन्ये तपस्विनः सन्तीति भरतमूचुः। साधुसम्मतं तेषां वचनं श्रुत्वा भरतः सैन्यानुवाच। भवन्तो यत्तास्तिष्ठन्तु। इतोऽग्रतो न गन्तव्यम्। अहं (शत्रुघ्नसहितः) सुमन्त्रो गुरुश्च गमिष्यामः। एवमुक्तास्ते तत्र समन्ततस्तस्थुः। यत्र धूमाग्रं दृष्टं तत्र भरतो दृष्टिं समादधात्+। भरतेन तत्र व्यवस्थापिता सेनाग्रतो धूममेव निरीक्षमाणापि प्रियस्य रामस्य समागमोऽचिरेण भवतीति विज्ञाय जहर्ष।

८८

चित्रकूटप्रवेशानन्तरं रामस्तत्र बहून् दिवसान् न्यवसत्। गिरिवनप्रियो रामो वैदेह्याः प्रियमाकाङ्क्षन् स्वं चित्तं च विलोभयन् रम्यं विस्मयकरं तं गिरिं पुरन्दरः शचीमिवैकदा भार्यामदर्शयत्। भद्रे! रमणीयमिमं गिरिं पश्यतो राज्याद् भ्रंशनं सुहृद्भिर्विना स्थितिश्च मे मनो न बाधते। नानाद्विजगणसंयुतं खमुद्विद्धैरिव धातुमद्भिः शिखरैर्विभूषितमिममचलं पश्य। धातुविभूषिता अचलेन्द्रस्य केचित्प्रदेशा रजतसंकाशाः केचित् क्षतजसन्निभाः केचित् पीतमाञ्जिष्ठवर्णाः केचिदिन्द्रनीलमणिप्रभाः पुष्परागस्फटिककेतकाभाः केचित् केचिन्नक्षत्रप्रभाः केचिद्रसप्रभाश्च विराजन्ते। अयं शैलः अदृष्टैर्नानामृगगणैर्व्याघ्रैस्तरक्षुभिः ऋक्षैश्च वृतो बहुपक्षिसमाकुलश्च भाति। किञ्च पुष्पफलवद्भिर्विस्तारच्छा-यावद्भिर्मनोरमैर्नानाविधैर्वृक्षैराकीर्णः। रम्येषु शैलप्रस्थेषु द्वन्द्वशो रममाणान् पश्यतां कामोद्दीपकान् किन्नरान् पश्य। एते विद्याधराः स्वस्त्रीभिः सह क्रीडन्ति। तेषां खड्गा आभरणानि च शाखास्ववसक्तानि। तेषां क्रीडास्थानानि पश्य। अयं शैलः क्वचित् क्वचिज्जलप्रपातैरुद्-भेदैर्निष्यन्दैश्च प्रवाहैर्मदस्रावी द्विप इव भाति। नानापुष्पभवान् गन्धान्

---

+ cr समादधत्। ग्राह्यः- समादधात्।

वहन् गुहानिर्गतः समीरणो घ्राणं तर्पयन् अभ्येत्य कं नरं न प्रहर्षयेत्? सीते! त्वया लक्ष्मणेन च सह यदीहानेकाः शरदो वत्स्यामि तदापि मां शोको न प्रधक्ष्यति। बहुपुष्पफले नानाद्विजगणसंयुते विचित्रशिखरे रम्येऽस्मिन् पर्वते प्रीतिमानस्मि। अनेन वनवासेन धर्मे पितुरनृणता भरतस्य प्रियं च फलद्वयं मे प्राप्तम्। मनोवाक्कायप्रियाणि+ विविधानि दृश्यानि पश्यन्ती चित्रकूटे मया सह रमसे कच्चित्? राज्ञां मरणानन्तरमुत्तमं जन्म प्राप्तुमिमं वनवासमेवामृततुल्यं मे पूर्वे प्रपितामहा राजर्षयः प्रोचुः। अभितः शतशो विशालशैलशिला अनेकैर्नीलपीतसितारुणैर्वर्णैः शोभन्ते। स्वप्रभाभ्राजमानाः पर्वतस्य सहस्रश ओषध्यो निशि हुताशनशिखा इव भास्यन्ति। सीते! अस्य पर्वतस्य केचिद् देशा गृहवत् केचिदुद्यानवत् केचिदेकशिलाश्च भान्ति। चित्रकूटो वसुधां भित्वा समुत्थित इव भाति। चित्रकूटस्यासौ कूटः सर्वतो रम्यो दृश्यते। इह कामिनः कुष्ठपुन्नागतगरभूर्जपत्राणि कुशेशयदलानि च संस्तार्य स्वशयनानि कृतवन्तः। कामिभिर्मृदिता अपविद्धाश्च कमलस्रजो दृश्यन्ते तथा त्यक्तानि विविधानि फलानि च। पश्य। बहुमूलफलोदकः पर्वतोऽसौ चित्रकूटः अलकां मानससरसीमुत्तरान् कुरूंश्चातिशेते। अस्मिन् पर्वते त्वया लक्ष्मणेन च सहेमं कालं विहृत्य कुलधर्ममानन्दं च वर्धयामि।

८९

अथ रामः शैलान्निवृत्य शुभजलां रम्यां मन्दाकिनीं नदीं मैथिलीमदर्शयत्। रामः सीतां प्राह। विचित्रपुलिनां रम्यां हंससारससेवितां कुसुममयीं मन्दाकिनीं नदीं पश्य। सर्वतो नानाविधैस्तीररुहैः पुष्पफलद्रुमैर्वृता कुबेरस्य सौगन्धिकसरसीमिव राजन्तीमिमां नदीं पश्य। साम्प्रतं मृगयूथनिपीतानि कलुषाम्भांस्यपि रमणीयानि तीर्थानि मे रतिं संजनयन्ति। प्रिये!

---

+ cr मनोवाक्कायसंयतान्। ग्राह्यः– मनोवाक्कायसंमतान्।

जटाजिनधरा वल्कलोत्तरीया ऋषयो नियतकाले नदीं मन्दाकिनीं स्नातुमवगाहन्ते। संशितव्रता एतेऽपरे मुनयो नियमादूर्ध्वबाहव आदित्यं समन्त्रपठनमुपासते। मारुतोद्धूतशिखरैर्नदीमभितः पत्रपुष्पाणि विकिरद्भिः पादपैः पर्वतो नर्तितुमुद्युक्त इव लक्ष्यते। इयं नदी क्वचिन्मणिनिकाशोदका क्वचित् पुलिनशालिनी क्वचित् सिद्धजनाकीर्णा च भासते। वायुनिर्धूतान् पुष्पसंचयान् व्याप्तानपरान् जलमध्यगान् पोप्लूयमानांश्च पश्य। कल्याणि! मधुरवचसो रथाङ्गनामानः पक्षिणः शुभा गिरो निष्कूजन्तस्तान् पुष्पराशीनधिरोहन्ति। शोभने! त्वयि (दृश्यमानायां) सहस्थितायां चित्रकूटस्य मन्दाकिन्याश्च दर्शनमयोध्यावासादधिकानन्दकरं मन्ये। विधूतकलुषैस्तपोदमशमान्वितैः सिध्दैर्नित्यविक्षोभितजलां मन्दाकिनीं नदीं मया सह विगाहस्व। रक्तश्वेतपद्मान्यवमज्जयन्ती मन्दाकिन्यां विगाह्य सखीवत् क्रीड। त्वमरण्यमृगान्[+] पौरजनवत् पर्वतमयोध्यावदिमां नदीं सरयूवन्नित्यं मन्यस्व। धर्मात्मा लक्ष्मणो मन्निदेशे व्यवस्थितः। त्वं चानुकूला। मम प्रीतिं युवां जनयथः। त्रिषवणं कुर्वन् मधुमूलफलाशनस्त्वया सहाद्यायोध्यायै राज्याय वा न स्पृहयामि। रम्या मन्दाकिनी हरिणयूथैः लोलिता। गजसिंहवानरास्तस्यां जलं पिबन्ति। सुपुष्पितवृक्षैरलंकृतामिमां नदीं प्राप्य यः सुखी न स्यात् स लोके न स्यात्। इति रामो मन्दाकिनीं प्रति सुसंगतं वचो ब्रुवन् प्रियासहायो नयनाञ्जनप्रभं रम्यं चित्रकूटपर्वतं चचार।

९०

इत्थं सीतया सह विहृत्य रामे तत्रासीने उपागच्छतो भरतसैन्यस्य रेणुः शब्दश्च नभःस्पृशौ प्रादुरास्ताम्। एतस्मिन्नन्तरे महता शब्देन त्रस्ता यूथपा मृगाः सयूथास्ततो दिशो दुद्रुवुः। तदा रामः सैन्यसमुद्भूतं शब्दं

---

[+] cr गजयूथ। ग्राह्यः– मृगयूथ।

श्रुत्वां विद्रुतान् मृगान् दृष्ट्वा सौमित्रिमुवाच। लक्ष्मण! इतः पश्य। गम्भीरस्तुमुलः शब्दः श्रूयते। राजा वा राजतुल्यो वा वने मृगयामटति। अथवा कश्चित् श्वापदः प्रविष्टः। सर्वं यथास्थितं ज्ञातुमर्हसि। लक्ष्मणस्त्वरया सालवृक्षमारुह्य सर्वा दिशः प्रेक्षमाणः पूर्वां दिशमवैक्षत। तत उत्तराभिमुखः प्रेक्षमाणो रथाश्वगणसंबाधां यत्तैः पदातिभिर्युक्तां महतीं चमूं ददर्श। अश्वगजसंपूर्णा रथध्वजविभूषिता महती सेनायातीति रामाय शशंस पुनश्चोवाच। भवानग्निं संशमयतु*। सीता गुहां भजताम्। चापं सज्यं कुरुष्व। क़वचं धृत्वा बाणान् गृहाण। रामो लक्ष्मणं प्रत्युवाच। भोः सौमित्रे! अवेक्षस्व। इमां चमूं कस्य मन्यसे। रामेणैवमुक्तो लक्ष्मणः पावकवद् रुष्टस्तां सेनां दिधक्षन्निवाब्रवीत्। कैकेयीपुत्रो भरतः अभिषेकं प्राप्य राज्यं संपन्नमिच्छन् नौ हन्तुं समभ्येति। स्पष्टमिदम्। दृश्यमाने रथे महान् कोविदारवृक्षध्वजः प्रकाशते। एते आश्विकाः शीघ्रगैरश्वैर्ध्वजमनुसृत्यायान्ति। गजारूढाः सादिनश्च संहृष्टा भ्राजन्ते। गृहीतचापौ गिरिमाश्रयावहे। अथवा धृतकवचौ धृतायुधाविहैव तिष्ठावः। राम! अपि रणे कोविदारध्वजोऽस्मद्वशमागच्छेत्? अपि भरतं द्रक्ष्यामि यत्कृते त्वया सीतया मया च महद् व्यसनं संप्राप्तम्? भवान् यन्निमित्तं शाश्वताद् राज्यात् च्युतः स भरतः प्राप्तः। सोऽयं शत्रुर्मे वध्यः। राम! भरतस्य वधे नाहं दोषं पश्यामि। पूर्वापकारिणां वधोऽधर्मो न विधीयते। एतस्मिन् निहते कृत्स्नां वसुन्धरामनुशाधि। राज्यलोभिनी कैकेयी अद्य युद्धे मया हतं पुत्रं हस्तिभग्नं द्रुममिव सुदुःखार्ता पश्येत्। बन्धुपरिवारयुतां कैकेयीं च हनिष्यामि। महतः कलुषादद्य मेदिनी परिमुच्यताम्। संयतमिमं क्रोधमवमानं च हुताशनं कक्ष्येष्विवाद्य शत्रुसैन्येषु मोक्ष्यामि। अद्य निशितैः शरैः शत्रुशरीराणि भिन्दन् चित्रकूटस्यैतत् काननं शोणितोक्षितं

---

* धूमात् शत्रुरात्मनः स्थानं नाभिजानीयादिति अग्नेर्निर्वापणम्।

करिष्ये। मया शरैर्निर्भिन्नहृदयान् कुञ्जरांस्तुरगान् निहतान् नरांश्च श्वापदाः परिकर्षन्तु। अस्मिन्[+] महावनेऽहंससैन्यं भरतं हत्वा शराणां धनुषश्चानृणो भविष्यामि। संशयो नास्ति।

९१

अथ रामः सुसंरब्धं क्रोधमूर्छितं लक्ष्मणं सान्त्वयित्वा एवमाह। महाप्राज्ञे भरते स्वयमत्रागते धनुषा खड्गेन वा किं कार्यम्? समुचिते समये भरतोऽस्मान् द्रष्टुमिच्छति। एषोऽस्मासु मनसापि किञ्चिदप्रियं नाचरेत्। कदा किं नु विप्रियं भरतेन ते कृतपूर्वं यतस्तं शङ्कसे विभेषि च? भरतस्ते निष्ठुरमप्रियं वचो न वाच्यः। भरते दूषिते अहं दूषितो भवेयम्। कस्यांचिदप्यापदि पुत्राः पितरं कथं नु हन्युः? भ्राता वा आत्मनः प्राणं भ्रातरं हन्यात्? राज्यस्य हेतोस्त्वमिमां वाचं यदि प्रभाषसे तर्हि भरतं दृष्ट्वा राज्यं लक्ष्मणाय प्रदीयतामिति वक्ष्यामि। यद्येवं वक्ष्यामि नूनं भरतो बाढमित्येव वक्ष्यति। धर्मशीलेन भ्रात्रा तथोक्तः सर्वदा रामहितासक्तो लक्ष्मणो लज्जया भृशं संकुचितगात्रो बभूव। व्रीडितं लक्ष्मणं दृष्ट्वा राम उवाच। अस्मान् द्रष्टुं पिता दशरथः स्वयमागत इति मन्ये। वनवासक्लेशं चिन्तयित्वा अत्यन्तसुखसेविनीं वैदेहीं पिता गृहं प्रतिनेष्यति। उत्तमवंशजौ मनोरमौ वायुवेगसमौ तावेतौ हयोत्तमौ संप्रकाशेते। महाकायः शत्रुंजयो नाम तातस्य स उन्नतो नागो वाहिनीमुखे चलति। तदाकर्ण्य सालाग्रादवतीर्य लक्ष्मणः प्राञ्जलिः रामस्य पार्श्वतस्तस्थौ। सम्मर्दो न भवेदिति भरतेनादिष्टा सेना तत्पर्वतस्य परित आवासमकल्पयत्। गजवाजिरथाकुला सेक्ष्वाकुचमूरध्यर्धयोजनं पर्वतस्य पार्श्वे आवृत्य न्यविशत्। धर्मं पुरस्कृत्य दर्पं विधूय रामस्य प्रसादनार्थं नीतिमता भरतेन प्रणीता सा सेना चित्रकूटे व्यराजत।

९२

प्रभुर्नरश्रेष्ठो भरतः सेनां निवेश्य पित्राज्ञानुसारिणो रामस्य समीपं पादचारेण गन्तुमियेष। स्थानमनतिक्रम्य निविष्टे सैन्ये भरतो भ्रातरं

---

[+] cr धनुषश्चाहमनृणोऽस्मि महावने। ग्राह्यः– धनुषश्चाहमनृणोऽस्मिन् महावने।

शत्रुघ्नं विनयेनाह। सौम्य! नरसंघैर्निषादैश्च सहितः क्षिप्रमिदं वनं समन्ततः अन्वेषितुमर्हसि। यावद् रामं लक्ष्मणं सीतां च न द्रक्ष्यसि तावन्मे शान्तिर्न भविष्यति। चन्द्रसंकाशं पद्मपलाशाक्षं भ्रातुः शुभमाननं यावन्न द्रक्ष्यामि तावन्मे शान्तिर्न भविष्यति। भ्रातुः राजचिह्नयुतौ चरणौ यावच्छिरसा न धारयिष्यामि तावच्छान्तिर्मे न भविष्यति। राज्यार्हो रामः अभिषेकक्लिन्नः पितामहपितृक्रमागते राज्ये यावन्न स्थास्यति तावन्मे शान्तिर्न भविष्यति। सागरान्तायाः पृथिव्या भर्तारं राममनुगच्छन्ती महाभागा वैदेही कृतकृत्यास्ति। नन्दने कुबेर इव रामो यस्मिन् वसति सोऽसौ हिमालयसमश्चित्रकूटः सुभगोऽस्ति। यद्रामः अध्यास्ते क्रूरमृगनिषेवितं दुर्गमिदं वनं कृतकृत्यम्। एवमुक्त्वा भरतो महद् वनं पद्भ्यामेव प्रविवेश। स गिरिसानुजातपुष्पिताग्रद्रुमजालानां मध्ये गत्वा चित्रकूटगिरौ पुष्पितं सालमासाद्य रामाश्रमगतस्याग्नेरुच्छ्रितं ध्वजं धूमं ददर्श। तं धूमं दृष्ट्वा रामोऽत्रास्तीति ज्ञात्वा अम्भसः पारं गत इव सहबान्धवो भरतो मुमुदे। महात्मा स भरतश्चित्रकूटगिरौ पुण्यजनसंयुतं रामाश्रमं वीक्ष्य चमूं निवेश्यैव पुनर्गुहेन सार्धं त्वरितो जगाम।

९३

सेनां स्थापयित्वोत्सुको भरतः शत्रुघ्नेन सह चिह्नानि पश्यन् भ्रातरं द्रष्टुं जगाम। मातृः शीघ्रमानेतुं वसिष्ठं संदिश्य त्वरितमग्रे जगाम। सुमन्त्रश्च शत्रुघ्नं समीपे अनुससार। रामदर्शनाभिलाषो भरतस्येव तस्य च बभूव। गच्छन्नेव भरतस्तपोवने भ्रातुः पर्णशालां तत्पार्श्वेऽन्यां लघुं पर्णशालां च ददर्श। तस्याः शालाया अग्रतो भरतः अवभग्नानि काष्ठानि अवचितानि पुष्पाणि च ददर्श। शीतकारणान्मृगाणां महिषाणां च करीषैः कृतान् महासंचयांश्च ददर्श। सर्वाणि तानि दृष्ट्वा हृष्टो भरतो गच्छन्नेव शत्रुघ्नममात्यांश्चाब्रवीत्। भरद्वाजनिर्दिष्टं देशं वयं प्राप्ता इतः समीपे

मन्दाकिन्यस्तीति मन्ये। चीराण्युच्चैर्बद्धानि। अयं सायंकाले गन्तुमिच्छता लक्ष्मणेनाभिज्ञानकृतः पन्था भवेत्। उन्नतदन्तास्तरस्विनो गजा अन्योन्यमभिगर्जन्तोऽस्मिन् शैलपार्श्वे परिक्रामेयुः। अरण्यवासिनो मुनयः सदा यं संरक्षितुमिच्छन्ति तस्याग्नेः संकुलो धूमो दृश्यते। पुरुषश्रेष्ठं गुरुसत्कारकारिणं पूज्यं महर्षिसदृशं रामं हृष्टोऽहमत्र द्रक्ष्यामि। ततो भरतश्चित्रकूटं प्रति किञ्चित्कालं गत्वा मन्दाकिनीमनुप्राप्यामात्यादीनिदमाह। जनेन्द्रः पुरुषश्रेष्ठो रामो निर्जनं वनं प्राप्य वीरासने आसक्तो धरायामास्ते। धिङ् मे जन्म जीवितं च। मन्निमित्तेन रामो व्यसनं प्राप्तः सर्वान् भोगान् परित्यज्य वने निवसति। इति लोकनिन्दितोऽहमद्य प्रसादयन् रामस्य सीतायाश्च पादेषु पुनःपुनर्निपतिष्यामि। एवं विलपन् भरतो महतीं मनोरमां पर्णशालां ददर्श। सा सालतालाश्वकर्णानां मृदुपर्णैर्बहुभिरावृता यज्ञे कुशैस्तीर्णा वेदिरिवासीत्। तस्यां शालायां वज्रायुधनिभाः कार्यभारसाधना रुक्मपृष्ठा दृढाः शत्रुबाधकाः चापा आसन्। भोगवत्यां सर्पा इव सूर्यकिरणसमाना घोरा दीप्तमुखास्तूणीगताः शरा आसन्। काञ्चनकोशस्थौ द्वौ खड्गौ रुक्मबिन्दुविचित्रे द्वे चर्मणी काञ्चनभूषितानि चित्राण्यासक्तानि गोधाङ्गुलित्राणि च तत्रासन्। मृगैः सिंहगुहेव सा पर्णशाला शत्रूणामनाधृष्या स्थिता। भरतस्तत्र रामनिवेशने ईशानकोणं प्रति प्रवणां* विशालां पवित्रां वेदिं ददर्श यस्यामग्निर्ज्वलति स्म। मुहूर्तं निरीक्ष्योटजे आसीनं जटामण्डलधारिणं ज्येष्ठभ्रातरं रामं ददर्श। स रामः कृष्णाजिनं वल्कलानि च दधार। तमभितः पावकोपमा कान्तिर्व्याप्ता। सिंहस्कन्धो महाबाहुः पुण्डरीकनिभेक्षणः सागरान्तायाः पृथिव्याः पतिर्धर्ममाचरन् सीतया लक्ष्मणेन च सह दर्भसंस्तीर्णे स्थण्डिले ब्रह्मवदुपविष्टः। तं दृष्ट्वा महादुःखितो भरतोऽभ्यधावत्।

---

* cr प्रागुदक्स्रवणां। ग्राह्यः– प्रागुदक्प्रवणाम्।

विलप्य दुःखं धारयितुमशक्नुवन्नस्पष्टं वचनमुवाच। सभायाममात्यादिभिरुपासितुं यो युक्तः सोऽयं ममाग्रजो वन्यैर्मृगैरुपासीन आस्ते। यो महात्मा पुरा बहुसहस्राणि वस्त्राण्युपयुङ्क्ते स इदानीं धर्ममाचरन् द्वे मृगाजिने प्रवस्ते। यस्तदा विविधाश्चित्राः सुमनसोऽधरत् सोऽयं राम इमं जटाभारं कथं सहते? शास्त्रविहितैर्यज्ञैर्यस्य धर्मसंचयो युक्तः स रामः शरीरक्लेशसंभूतं धर्मं परिमृगयते। महार्हचन्दनसेवितगात्रः पूज्यो भ्राता बत मलजुष्टो दृश्यते। सुखोचितो रामो मम कारणेनेदं दुःखं प्राप्तः। धिङ् मम नृशंसस्य लोकविगर्हितं जीवितम्। इति विलपन् प्रस्विन्नमुखो भरतो रामस्य पादावप्राप्य पपात। सकृदार्येति स दीनमुवाच। पुनर्वक्तुं न शशाक। शत्रुघ्नश्च रुदन् रामस्य चरणौ ववन्दे। रामश्च तावुभौ समालिङ्ग्याश्रूणि मुमोच। ततोऽरण्ये रामलक्ष्मणावाकाशे सूर्यचन्द्रौ शुक्रबृहस्पतिभ्यामिव सुमन्त्रेण गुहेन च समीयतुः। सर्वे ते वनौकसस्तत्र महत्यरण्ये समागतान् वारणराजतुल्यान् तान् भ्रातॄन् समीक्ष्य हर्षं प्रविहायाश्रूणि मुमुचुः।

९४

रामो भरतं परिष्वज्य शिरस्युपाघ्रायाङ्के आरोप्यावहितचित्तः पप्रच्छ। तात! त्वमरण्यमागतः। क्व नु ते पितास्ति? तस्य जीवतस्त्वं वनमागन्तुं नार्हसि। प्रहृष्टोऽस्मि यदस्मिन्नरण्ये दूरादागतं वैवर्ण्यादिना दुर्विज्ञेयावयवं भरतं चिरस्य पश्यामि किन्तु त्वं वनं किमागतोऽसि? सत्यप्रतिज्ञो राजसूयाश्वमेधानामाहर्ता धर्मनिश्चयो राजा दशरथः कच्चित् कुशली? ब्राह्मणो विद्वान् धर्मनित्यो महाद्युतिः स इक्ष्वाकूणामुपाध्यायो वसिष्ठो पूज्यते कच्चित्? कच्चित् कौसल्या सुखिनी सुमित्रा च? कच्चिदार्या देवी कैकेयी नन्दति? विनयसंपन्न उत्तमकुलोत्पन्नो बहुश्रुतोऽसूयारहितः कर्तव्यनिर्देशकः पुरोहितस्त्वया कच्चित् सत्कृतः? अग्निकार्येषु त्वया नियुक्तो विधिज्ञो मतिमानृजुः पुरोहितः सदा हुतं च होष्यमाणं च कच्चित्

काले वेदयते? मन्त्ररहितबाणान् मन्त्रसहितास्त्राणि च ज्ञातवन्तमर्थशास्त्रविशारदमुपाध्यायं सुधन्वानं त्वं कच्चिन्मन्यसे? आत्मसमाः शूराः शास्त्रज्ञा जितेन्द्रियाः कुलीना इङ्गितज्ञाश्च त्वया कच्चिन्मन्त्रिणः कृताः? राघव! शास्त्रकोविदैर्मन्त्रधरैरमात्यैः सुसंवृतो मन्त्रो राज्ञां विजयमूलं भवति हि। निद्रावशो न भवसि कच्चित्? कच्चित् काले प्रबुध्यसे? कच्चिदपररात्रेषु कर्तव्यसामर्थ्यं चिन्तयसि? एको बहुभिः सह वा कच्चिन्न मन्त्रयसे? कच्चित्ते मन्त्रितो मन्त्रो राज्ये जनविदितो न भवति? लघुसाधनं महाफलमर्थं विनिश्चित्यालस्यं विहाय कच्चित् क्षिप्रमारभसे? अन्ये राजानः सुकृतानि कृतप्रायाणि वा ते सर्वकार्याणि न तु कर्तव्यानि कच्चिद् विदुः? तव तवामात्यानां वा मन्त्रितं तर्कैरुक्त्यान्योपायैर्वा इतरैः कच्चिन्न बुध्यते? मूर्खाणां सहस्रादेकं पण्डितं कच्चिदिच्छसि यतः अर्थकृच्छ्रेषु पण्डितो महन्निश्रेयसं कुर्यात्। आश्रितैर्बहुभिरपि मूर्खैः राज्ञः सहायता नास्ति। मेधावी शूरो दक्षो विचक्षणोऽमात्य एकोऽपि राजानमल्पराजं वा महतीं श्रियं प्रापयेत्। मुख्या भृत्या महत्सु कर्मस्वेव कच्चिद् योजिताः? मध्यमा मध्यमेषु अधमा अधमेष्वेव कच्चिद् योजिताः? विविधरहस्य-परीक्षासूत्तीर्णान् पितामहपितृक्रमागतान् शुचीन् श्रेष्ठानमात्यान् त्वं श्रेष्ठेषु कर्मसु कच्चिन्नियोजयसि? पतितं याजका इव कामुकं स्त्रिय इव अत्यधिककरप्रतिग्रहीतारं त्वां प्रजाः कच्चिन्नावजानन्ति? उपायिनं विद्यावन्तं भृत्यभेदासक्तं शूरमैश्वर्यकामं प्रत्यर्थिनं यो राजा न हन्ति स तेन हन्यते। हृष्टः शूरो मतिमान् धैर्यवान् शुचिः कुलीनोऽनुरक्तो दक्षश्च सेनापतिः कच्चित् त्वया कृतः? बलवन्तो युद्धविशारदा दृष्टापदाना विक्रान्ता मुख्या वीराः कच्चित् त्वया सत्कृत्य मानिताः? बलस्य दातव्यमन्नं यथोचितं वेतनं च विलम्बं विना यथाकालं कच्चिद् ददासि? भृताः सेवका भक्तवेतनयोः कालातिक्रमणाद् भर्तारं प्रति

कुप्यन्ति द्रुह्यन्ति च। सुमहान् सोऽनर्थः। सर्वे प्रधानत उत्तमकुलजाताः कच्चित् त्वामनुरक्ताः? त्वयि समाहितास्तवार्थेषु प्राणान् कच्चित् संत्यजन्ति? स्वदेशोद्भूतो विद्वान् दक्षिणः समयस्फूर्तिमान् यथोक्तवादी पण्डितः कच्चित् त्वया दूतः कृतः? शत्रुपक्षे अष्टादशतीर्थानि* स्वपक्षे पञ्चदशतीर्थानि** च त्रिभिस्त्रिभिर्गूढचारैः कच्चिद् वेत्सि? पराजित्य निष्कासितान् शत्रून् पुनरागतान् सर्वदा दुर्बलान् परिगणय्य कच्चिन्नोपेक्षसे? कच्चिन्नास्तिकान् ब्राह्मणान् न सेवसे? पण्डितमानिनोऽज्ञाना एते परमार्थतो बुद्धिं घ्नन्ति। एते दुष्पण्डिता मुख्येषु धर्मशास्त्रेषु विद्यमानेषु तर्कशास्त्रीयां बुद्धिं प्राप्य निरर्थं प्रवदन्ति। वीरैरस्माकं पूर्वकैः पूर्वमध्युषितामन्वर्थनाम्नीं दृढद्वारां हस्त्यश्वरथसंकुलां सदा स्वकर्म-निरतैर्जितेन्द्रियैर्महोत्साहैरार्यैः सहस्रशो ब्राह्मणैः क्षत्रियैर्वैश्यैर्वृतां विविधाकारैः प्रासादैर्वृतां पण्डितपूर्णां संतोषयुतां स्फीतामयोध्यां कच्चित् परिरक्षसि? चैत्यशतैर्जुष्टः सुनिविष्टजनाकुलो देवस्थानैः प्रपाभिस्तटाकैश्चोपशोभितः सुकृष्टक्षेत्रः पशुमान् हिंसावर्जितः अदेवमातृको रम्यः श्वापदरहितो जनपदः कच्चित् स्फीतः सुखं वसति च? सर्वे कृषिगोरक्षणजीविनः कच्चित्ते दयिताः? सर्वो लोको वाणिज्यमाश्रित्य कच्चित् सुखं प्रवर्तते? रक्षणेनापदां परिहारेण च तेषां भरणं त्वया कच्चित् कृतम्? राज्ञा विषयवासिनः सर्वे धर्मेण रक्ष्याः खलु। कच्चित् स्त्रियः सान्त्वयसि? कच्चित् तास्त्वया सुरक्षिताः? कच्चिदासामधिकं न विश्वसिहि? कच्चित् ता गुह्यं न भाषसे? गजानामुत्पत्तिवनं कच्चित् त्वया गुप्तम्?

---

*मन्त्रिणः पुरोहितो युवराजः सेनापतिर्द्वारपालाः अन्तःपुराधिकारिणः कारागाराध्यक्षा धनाध्यक्षाः कार्यनियोजकाः प्राड्विवाकाः सेनानायका नगराध्यक्षः कर्मकर्तारः सभाधिकृता धर्माधिकारिणो दण्डपाला दुर्गपालाः सीमापालाश्च शत्रुपक्षे अष्टादश तीर्थानि। **उपर्युक्तेषु त्रीनादीन् विहायान्ये।

कच्चित् ते पर्याप्ताः कुञ्जराः सन्ति तैस्तृप्यसि च? नित्यं पूर्वाह्णे उत्थायोत्थाय महापथे जनानां विभूषितमात्मानं कच्चिद् दर्शयसि? कच्चित् सर्वाणि दुर्गाणि धनधान्यायुधोदकैर्यन्त्रैः शिल्पिभिर्धनुर्धरैश्च परिपूर्णानि? कच्चित् तवायोऽधिको व्ययोऽल्पतरश्च? कच्चित् ते आर्जितं धनमपात्रेषु न गच्छति? तव व्ययो देवपितृब्राह्मणाभ्यागतयोधमित्रवर्गेषु कच्चिद् गच्छति? यदि कस्मिंश्चिदार्ये विशुद्धात्मनि शुचौ मनुष्ये दुष्कर्मारोप्यते+ तर्हि स शास्त्रकुशलैः परीक्षणीयः। तथा अकृत्वा लोभात् कच्चित् स न दण्ड्यते* ? चौर्यं कुर्वन् दृष्टो गृहीतः पृष्टो निर्धारितश्च चोरो धनलोभात् कच्चिन्न मुच्यते? बहुश्रुतास्तवामात्या आढ्यदरिद्रयोर्विवादे प्राप्ते तं व्यवहारं पक्षपातबुद्धिरहिताः कच्चित् पश्यन्ति? मिथ्याभिशस्तानां यान्यश्रूणि पतन्ति तानि यथेच्छमनुशासतः पुत्रपशून् घ्नन्ति। वृद्धान् बालान् मुख्यान् पण्डितान् (अथवा वैद्यान्) दानेनानुरागेण वाचा चैतैस्त्रिभिः कच्चिन्मानयसि? गुरुन् वृद्धांस्तापसान् देवता अतिथीन् देवालयान् यागादिपुण्यकर्मकृतो ब्राह्मणांश्च कच्चिन्नमस्यसि? अर्थेन धर्मं धर्मेणार्थं कामेन धर्मार्थावुभौ च कच्चिन्न विबाधसे? हे कालज्ञ! अर्थं धर्मं कामं च सर्वान् यथोक्तकालेषु विभज्य कच्चित् सेवसे? सर्वशास्त्रार्थकोविदा ब्राह्मणाः पौरैर्जानपदैश्च सह कच्चित् ते शर्माशंसन्ते? नास्तिकत्वमसत्यं क्रोधं प्रमादं निर्णयरहितदीर्घालोचनं ज्ञानिनामुपेक्षामालस्यं पञ्चेन्द्रियेषु विशृङ्खलप्रवर्तनं कार्याणामेकचिन्तनमर्थज्ञानविहीनैः सह मन्त्रणं निश्चितकार्याणामनारम्भं मन्त्रस्यापरिरक्षणं मङ्गलस्याप्रयोगं बहुशत्रून् प्रत्येककाले युद्धाभिगमनं चैतान् चतुर्दश राजदोषान् कच्चित् त्वं वर्जयसि? स्वादुकृतं भोज्यमेकः कच्चिन्नाश्नासि? कच्चिन्मित्रेभ्यः संप्रयच्छसि?

---

+ cr क्षारितश्चोरकर्मणा। ग्राह्यः– क्षारितश्चापकर्मणा।

* वध्यते इति पाठः। तस्यार्थो दण्ड्यते इति। दृश्यतां मम निबन्धः केचन शब्दार्थाः, साहितीजगती १९९०.

९५

रामस्य वचनं श्रुत्वा भरतः प्रत्युवाच। धर्माद् विहीनस्य मे राजधर्मेण किं प्रयोजनम्? राजन्! अयं शाश्वतो धर्मोऽस्मासु सदा स्थितो यज्ज्येष्ठपुत्रे स्थिते कनीयान् नृपो न भवेत्। तस्मात् त्वं मया सार्धं समृद्धामयोध्यां गच्छ। अस्मत्कुलस्य क्षेमायात्मानमभिषेचय। राजा च मनुष्य इति जना मन्येरन्। मम तु यस्य धर्मार्थसहितं वृत्तममानुषं स राजा देवत्वे सम्मतः। मयि केकयस्थे त्वयि चारण्यमाश्रिते यायजूकः सत्पुरुषसम्मानितो नः पिता दिवं गतः। अतः प्रथमं पितुरुदकं क्रियताम्। अहं शत्रुघ्नश्च पूर्वमेव कृतोदकौ स्वः। राम! प्रियपुत्रेण दत्तं पितृलोकेष्वक्षय्यं भवतीत्याहुः। भवानेव पितुः प्रियतमः। भरतोक्तां दुःखकरीं पितृमरणवार्तां श्रुत्वा रामश्चैतन्यं जहौ। मनःपीडाकरमशनितुल्यं भरतवचनं श्रुत्वा सहसा बाहू उद्धृत्य परशुना कृत्तः पुष्पिताग्रो द्रुम इव भुवि पपात। तथा निपतितं दन्ताभ्यां कूलं हत्वा परिश्रान्तं प्रसुप्तं कुञ्जरमिव स्थितं शोककर्शितं रामं सर्वतो वैदेह्या सह भ्रातरो रुदन्तः सलिलेन सिषिचुः। स रामः पुनः संज्ञां लब्ध्वा नेत्राभ्यामस्रमुत्सृजन् बहु कृपणं भाषितुमुपाक्रमत। मम शोकेन पिता मृतो मया न संस्कृतः। दुर्भगेन मया तस्य महात्मनः किं प्रयोजनम्? भरत! त्वया शत्रुघ्नेन च पिता सर्वेषु प्रेतकार्येषु सत्कृतः। अहो! त्वं कृतार्थोऽसि। निवृत्तवनवासोऽपि निष्प्रधानां व्याकुलां पित्रा राज्ञा विनाकृतामयोध्यां गन्तुं नोत्सहे। पितरि परलोकगते समाप्तवनवासं मां पुनरयोध्यायां कोऽनुशासिष्यति? पुरा पिता मां सुवृत्तं प्रेक्ष्य सान्त्वयन् यानि वाक्यान्याह श्रवणसुखानि तानि कुतः श्रोष्यामि? भरतमेवमुक्त्वा भार्यामभ्येत्य शोकपीडित उवाच। सीते! ते श्वशुरो मृतः। लक्ष्मण! त्वं पित्रा हीनोऽसि। राजा स्वर्गत इति भरतो दुःखवार्तामाचष्टे। ततो रुदतीं सीतां सान्त्वयित्वा स्वयं दुःखितो दुःखितं

लक्ष्मणमुवाच। इङ्गुदिपिण्याकमुत्तरीयचीरं चानय। तातस्योदकक्रियार्थं गमिष्यामि। सीता पुरस्ताद् व्रजतु। लक्ष्मण! त्वं तामनुसर। अहं पश्चाद् गमिष्यामि। सुदारुणा ह्येषा गतिः*। ततस्तेषां नित्यानुग आत्मज्ञानी रामे दृढभक्तिमान् सुमन्त्रस्तैर्नृपसुतैः सार्धं राममाश्वास्यालम्ब्य शिवां मन्दाकिनीनदीमवातारयत्। ततस्ते सुतीर्थां रम्यां सदा पुष्पितकाननां शीघ्रस्रोतसं मन्दाकिनीं नदीं कृच्छ्रादुपगम्याकर्दमं शिवं घट्टमासाद्य तात! एतज्जलं त्वत्कृते भवतु इति वदन्तः सिषिचुः। ततो रामो जलाञ्जलिं प्रगृह्य दक्षिणाभिमुखो रुदन्नाह। हे राजशार्दूल! पितृलोकगतस्य तेऽद्य मद्दत्तमेतद्विमलं तोयमक्षयमुपतिष्ठतु। ततो रामो मन्दाकिनीतीरादुद्गम्य भ्रातृभिः सह पितुः पिण्डप्रदानं चकार। बदरीमिश्रमिङ्गुदिपिण्याकं दर्भसंस्तरे न्यस्य महता दुःखेन रुदन् राम उवाच। महाराज! वयं यदशनास्तदिदं प्रीतो भुङ्क्ष्व। पुरुषो यदन्नो भवति तस्य देवतास्तदन्ना हि। ततो रामस्तेन मार्गेणैव नदीतटात् प्रत्यागम्य रम्यसानुं महीधरमारुरोह। पर्णशालाद्वारमासाद्य बाहुभ्यां भरतलक्ष्मणावुभौ परिजग्राह। वैदेह्या सह रुदतां तेषां भ्रातॄणां शब्दान्नर्दतां सिंहानां शब्दादिव गिरौ प्रतिध्वनि+ र्बभूव। तं व्याकुलं शब्दं श्रुत्वा त्रस्ता भरतसैनिका ध्रुवं रामेण भरतः संगतः। मृतं पितरं शोचतां तेषामेव महान् शब्दोऽयमिति ते परस्परमूचुः। अथ सर्वे च ते स्वस्थानानि परित्यज्य तत्स्वनाभिमुखा एकमनसः प्रधाविता जग्मुः। अन्ये हयैरन्ये गजैः सुकुमारा अन्ये स्वलंकृतै रथैरन्ये पद्भिरेव ययुः। सर्वो जनः अचिरप्रोषितं रामं चिरविप्रोषितमिव द्रष्टुकामः सहसा आश्रमं जगाम।

---

* दुःखितानां गतिरेषा हि स्नानार्थं स्त्रीबालपुरस्सरेति। तथा पितृमेधसूत्रे। इति महेश्वरतीर्थः।

+ cr प्रतिश्रुत्काभवत्।ग्राह्यः- प्रतिश्रुत्कोऽभवत्। प्रतिश्रुत्कः प्रतिध्वनिरिति महेश्वरतीर्थगोविन्दराजौ।

तत्र भ्रातृणां समागमं द्रष्टुकामास्त्वरिताः खुरनेमिस्वनाकुलैर्बहुविधैर्यानैस्ते ययुः। बहुभिर्यानैः खुरनेमिसमाहता भूमिरभ्रसमागमे द्यौरिव तुमुलं शब्दं मुमोच। तेन ध्वनिना वित्रासिताः करेणुपरिवारिता नागा गन्धेनावासयन्तस्ततोऽन्यद् वनं जग्मुः। सर्वे मृगाः पक्षिणश्च वितत्रसुः। आकशो वित्रस्तैः पक्षिभिरावृती भूमिर्मनुष्यैश्च। धर्मज्ञः स रामो बाष्पपूर्णाक्षान् सुदुःखितांस्तान् नरान् समीक्ष्य पितृवन्मातृवच्च पर्यष्वजत। रामः कांश्चित् परिषष्वजे। केचित्तमभ्यवादयन्। सर्वान् वयस्यान् बान्धवान् यथार्हं सममन्यत। तदा सर्वेषां तेषां रुदतां महान् शब्दो बभूव।

९६

वसिष्ठो दशरथस्य दारान् पुरतः कृत्वा रामदर्शनतर्षितस्तत्राभिजगाम। राजपत्न्यश्च मन्दाकिनीं प्रति मन्दं गच्छन्त्यस्तत्र रामलक्ष्मणसेवितं तत् तीर्थं ददृशुः। बाष्पपूर्णमुखी दीना कौसल्या सुमित्रामन्या राजयोषितश्चाब्रवीत्। निर्विषयीकृतानामनाथानां सीतारामलक्ष्मणानामिदमेव प्रथमावासस्थानं तीर्थम्। सुमित्रे! तव पुत्रो लक्ष्मणो मम पुत्राय नित्यमतन्द्रित इतो जलं स्वयं हरति। पश्चात् सा दक्षिणाग्रेषु दर्भेषु महीतले पितुर्न्यस्तमिङ्गुदिपिण्याकं ददर्श। देवी कौसल्या आर्तेन रामेण पितुर्न्यस्तं तं पिण्डं भूमौ वीक्ष्य सर्वा दशरथस्त्रिय उवाच। रघुकुलोत्पन्नेन रामेणेक्ष्वाकुनाथस्य महात्मनः पितुः रघुकुलोत्पन्नस्य दशरथस्य यथाविधिदत्तमिदं पिण्डं पश्यत। देवसमानस्य भुक्तभोगस्य महात्मनस्तस्य पार्थिवस्यैतद् भोजनं युक्तं न मन्ये। महेन्द्रसदृशश्चतुरन्तां महीं भुक्त्वा राजा कथमिङ्गुदिपिण्याकं भुङ्क्ते? ऋद्धिमान् रामः पितुरिङ्गुदिक्षोदमदात्। अतो लोके दुःखतरं किञ्चिन्मे न प्रतिभाति। रामेण पितुर्दत्तमिङ्गुदिपिण्याकं समीक्ष्य मे हृदयं दुःखेन सहस्रधा कथं न स्फोटति? तदा ताः सपत्न्य एवमार्ता तामाश्वास्य नीत्वा जग्मुः। आश्रमं प्राप्य स्वर्गाच्च्युतममरमिव स्थितं रामं ददृशुः। सर्वभोगैः

परित्यक्तं तं वीक्ष्य सस्वरं रुरुदुः। रामः समुत्थाय सर्वासां मातॄणां चरणान् जग्राह। ताः सुखस्पर्शैर्मृद्वङ्गुलितलैः पाणिभिः रामस्य पृष्ठाद् रजः प्रममार्जुः। लक्ष्मणश्च सर्वा मातॄः संप्रेक्ष्य दुःखितो रामादनन्तरं शनैः पुनःपुनरभ्यवादयत्। मातरो लक्ष्मणं रामवदाददिरे। दुःखिता सीतापि श्वश्रूणां चरणान् गृहीत्वा तासामग्रतस्तस्थौ। दुःखितां वनवासकृशां तां माता दुहितरमिव परिष्वज्य कौसल्योवाच। विदेहराजदुहिता दशरथस्नुषा रामपत्नी बत निर्जने वने दुःखं संप्राप्ता। वैदेहि! आतपसंतप्तं पद्ममिव परिक्लिष्टमुत्पलमिव रजसा ध्वस्तं काञ्चनमिव जलदच्छन्नं चन्द्रमिव ते मुखं प्रेक्ष्य व्यसनारणिसंभवः शोकाग्निरग्निः स्वोत्पत्तिस्थानं काष्ठमिव मां मनसि भृशं दहति। आर्तायां जनन्यामेवं ब्रुवत्यां रामो वसिष्ठमासाद्य तस्य पादौ जग्राह। बृहस्पतेरिन्द्र इवाग्निसमस्य पुरोहितस्य पादौ रामः प्रगृह्य तेन सहोपविवेश। तयोरुपविष्टयोर्भरतो मन्त्रिभिः पुरप्रधानैः सैनिकैश्च सह भ्रातरमासाद्योपविवेश। कृताञ्जलिं रामसमीपे उपविष्टं भरतं प्रेक्ष्य किमेष वक्ष्यतीति जनानां कौतूहलं बभूव। सत्यधृतिः स रामो महानुभावो लक्ष्मणो धार्मिको भरतश्च सुहृद्भिर्वृता अध्वरे सदस्यैः सहितास्त्रयोऽग्नय इव विरेजुः।

९७

लक्ष्मणसहितो रामो गुरुभक्तं भ्रातरं भरतं समाश्वास्य प्रष्टुं समुपचक्रमे। चीरजटाजिनानि धृत्वेमं देशं किं त्वमागतोऽसि? राज्यं त्यक्त्वा तवेहागमनकारणं वक्तुमर्हसि। रामेणेत्युक्तो भरतो मनसि शोकं बलवन्नियम्य प्राञ्जलिराह। पूजनीयं त्वां पिता परित्यज्य सुदुष्करं कर्म कृत्वा पुत्रशोकाभिपीडितः स्वर्गं गतः। मम मात्रा कैकेय्या नियुक्त आत्मयशोहरं सुमहदिदं पापं चकार। सा मम जननी राज्यफलमप्राप्य शोककर्शिता विधवाभवत्। महाघोरे निरये सा पतिष्यति। तव दासभूतस्य मे

प्रसादं कर्तुमर्हसि। अद्यैव मघवानिव राज्येनाभिषिञ्चस्व। इमाः सर्वाः प्रकृतयो विधवा मातरश्च त्वत्सकाशमनुप्राप्ताः। अतः प्रसादं कर्तुमर्हसि। तत्कारणेनानुपूर्व्या युक्तमात्मनि च युक्तं राज्यं धर्मेण प्राप्नुहि। सुहृदः सकामान् कुरु। शरत्कालरजनीविमलेन शशिनेव त्वया प्रभुणा समग्रा भूमिः सनाथा भवतु। एभिः सचिवैः सार्धं मया शिरसा याचितोऽसि। अहं तव भ्राता शिष्यो दासश्च। मम प्रसादं कर्तुमर्हसि। पुरुषश्रेष्ठ! तस्मात् शाश्वतं पित्र्यं पूजितं च सर्वमिदं प्रकृतिमण्डलमतिक्रमितुं नार्हसि। एवमुक्त्वा भरतः सबाष्पो रामस्य पादौ शिरसा पुनर्नमश्चकार। रामः पुनः–पुनर्निःश्वसन्तं मत्तमातङ्गसदृशं भ्रातरं भरतं परिष्वज्येदमब्रवीत्। कुलीनः सत्त्वसम्पन्नस्तेजस्वी चरितव्रतस्त्वद्विधो जनो राज्यहेतोः कथं पापमाचरेत्? (अतस्त्वयि मे मनागपि संदेहो नास्ति।) त्वयि सूक्ष्ममपि दोषं न पश्यामि। त्वं बाल्याज्जननीं विगर्हितुं न चार्हसि। धार्मिकश्रेष्ठ! पितरि लोकसत्कृतं यावद् गौरवं भवति जनन्यामपि तावता गौरवेण भवितव्यम्। धर्मशीलाभ्यामेताभ्यां मातापितृभ्यां वनं गच्छेत्युक्तोऽहमन्यत् कार्यं कथं समाचरिष्यामि? त्वयायोध्यायां लोकसत्कृतं राज्यं प्राप्तव्यं मया वल्कलवाससा दण्डकारण्ये वस्तव्यम्। महाराजो दशरथो लोकसन्निधावेवं विभागं कृत्वा व्यादिश्य च दिवं गतः। धर्मात्मा लोकमान्यः स राजा तव प्रमाणम्। त्वं पित्रा दत्तं यथाभागमुपभोक्तुमर्हसि। सौम्य! अहं तु चतुर्दश समा दण्डकारण्यमाश्रितो महात्मना पित्रा दत्तं भागमुपभोक्ष्ये। यन्महात्मा पिता मामब्रवीत् तदेवात्मनः परमं हितं मन्ये न तु राज्यप्राप्तिम्।

## ९८

ततः सुहृद्गणैर्वृतानां तेषां भ्रातृणां शोचतामेव रजनी जगाम। प्रभाते सुहृद्भिः सह मन्दाकिन्यां हुतं जप्यं च चक्रुः। ततः सर्वे एकत्रोपविविशुः। ते मौनं स्थिताः। कश्चित् किञ्चिन्नाब्रवीत्। अथ मित्रमध्ये भरतो

राममुवाच। मम माता अङ्गीकारिता। यद् राज्यं पित्रा मे दत्तं तदहं ते ददामि। अकण्टकं राज्यं भुङ्क्ष्व। महदिदं राज्यखण्डं वर्षासु महता जलवेगेन भिन्नः सेतुरिव वर्तते। त्वदन्येनैतद् राज्यं स्थापयितुमशक्यम्। हे महीपते! अश्वस्य गतिं खर इव गरुत्मतो वेगमन्यपक्षीव तव गतिमनुगन्तुमहं न शक्नोमि। राम! यः परैर्नित्यश उपजीव्यते तस्य जीवितं धन्यम्। यः परानुपजीवति तस्य जीवितं निन्द्यम्। केनचिद्रोपितो वृक्षो वामनदुरारोहो महान् वर्धितो पुष्पितश्च भूत्वा यदि फलानि न विदर्शयेत् तर्हि यस्य फलस्य कृते स वृक्षो रोपितः तत्फलादानेन वृक्षरोपकस्य प्रीतिं न जनयेत्। प्रभुश्रेष्ठस्त्वं भृत्यान् नो यदि न पालयसि अस्यामुपमायामर्थं+ वेत्तुमर्हसि*। महाराज! राज्ये स्थितमरिंदमं त्वां श्रेष्ठा वणिजः शिल्पिनोऽन्ये च जनसमुदायाः प्रतपन्तमादित्यमिव पश्यन्तु। तवानुयाने मत्ताः कुञ्जरा नर्दन्तु। अन्तःपुरगता नार्यः प्रीता नन्दन्तु। इत्थं रामं राज्यस्वीकाराय प्रार्थयमानस्य भरतस्य वचः श्रुत्वा नागरा विविधा जनाश्च साध्वित्यमन्यन्त। निश्चितबुद्धिर्धैर्यवान् राम एवं विलपन्तं भरतं समाश्वासयत्। सर्वोऽपि नरोऽस्वतन्त्रो न च यथेष्टकारी। एनं कृतान्त इतस्ततः परिकर्षति। सर्वे निचयाः क्षयान्ताः। सर्वे समुच्छ्रयाः पतनान्ताः। संयोगा विप्रयोगान्ताः। मरणान्तं जीवितम्। पक्वानां फलानां पतनादन्यत्र भयं यथा नास्ति तथा जातस्य नरस्य मरणादन्यत्र भयं नास्ति। दृढस्थूणमप्यगारं यथा जीर्णं भूत्वावसीदति तथा नरा जरामृत्युवशं गताः सीदन्ति। इह गच्छन्त्यहोरात्राणि ग्रीष्मे सूर्यांशवो जलमिव सर्वेषां प्राणिनामायूंषि क्षिप्रं क्षपयन्ति। स्थितस्य च गतस्य च यस्य ते आयुर्हीयते तमात्मानं त्वमनुशोच। अन्यं किमनुशोचसि? मनुष्येण सहैव मृत्युर्व्रजति।

---

+ cr त्वमर्थम्। ग्राह्यः– तमर्थम्। * यदि त्वमभिषेकमप्राप्यास्मान् न पालयसि तर्हि पिता प्रीतिमान् न भविष्यतीति भावः।

सहैव निषीदति। सुदीर्घमध्वानं गतेन तेन सहैव मृत्युर्यात्वा सहैव निवर्तते। तं न जहाति। अवयवेषु वलयः प्राप्ताः। शिरोरुहाः श्वेता अभवन्। पुरुषो जरया जीर्णः। किं कृत्वात्मानं समर्थं कुर्यात्? आदित्ये उदिते मनुष्याः कार्योत्सुका नन्दन्ति। अस्तमिते रवौ विश्रमितुं नन्दन्ति। आत्मनो जीवितक्षयं नावबुध्यन्ते। ऋतुप्रारम्भं दृष्ट्वेह नवं नवं पुष्पफलादिकमागतमिति हृष्यन्ति। परन्तु ऋतूनां परिवर्तेन प्राणिनां प्राणसंक्षयो भवति। यथा महार्णवे काष्ठं च काष्ठं च समेयातां समेत्य कंचन कालमासाद्य व्यपेयातामेवं दाराः पुत्रा ज्ञातयो धनानि च समेत्य वियुज्यन्ते। एषां विश्लेषो ध्रुवः। अस्मिन् लोके कोऽपि प्राणी यथेच्छं न प्रवर्तते। तस्मात् प्रेतस्य वा तमनुशोचतो वा मरणादिविषये प्रभावो नास्ति। गच्छन्तं सार्थं पथि स्थितोऽहमपि भवतां पृष्ठत आगमिष्यामीति यथा ब्रूयात् तथा पूर्वैर्गतः पितामहपितृक्रमागतो मार्गो ध्रुवः। यस्य व्यतिक्रमो नास्ति तं मार्गं प्राप्तः किमर्थं शोचेत्? यथा प्रवाहो न निवर्तते तथा वयः पतत्येव। एवं स्थिते देहिना आत्मा सुखसाधने धर्मे नियोक्तव्यः। एवं कृते प्रजाः सुखभाजो भवन्ति। धर्मात्मा नः पिता भूरिदक्षिणान् सर्वान् शुभान् क्रतून् कृत्वा गतपापः स्वर्गं गतः। अस्माकं पिता भृत्यानां भरणात् प्रजानां सम्यक् परिपालनात् कररूपेण धर्मतः अर्थादानाच्च स्वर्गं गतः। राजा दशरथो बहुविधैर्यज्ञैरिष्ट्वा पुष्कलान् भोगानवाप्योत्तममायुः प्राप्य दिवं गतः। स जीर्णं मानुषं देहं परित्यज्य ब्रह्मलोकविहारिणीं दिव्यदेहसंपदमनुप्राप्तः। शास्त्रज्ञानसंपन्नो महाबुद्धिमान् भवादृशस्तं शोचितुं नार्हति*। धीरेण धीमता बहुविधा एते शोकास्तथा अनियतवचनैः साकं रोदनं च विसर्जनीयम्। तस्मात् स्वस्थो भव। मा शोचीः। यात्वा अयोध्यां पुरीमावस। वशिना पित्रा तथा नियुक्तोऽसि।

---

* अस्पष्टार्थः श्लोकः (३५) बहुपाठान्तरसंवलितश्च।

अहमपि पुण्यकर्मणा तेन यत्र नियुक्तोऽस्मि तत्रैवार्यस्य पितुः शासनं करिष्यामि। तस्य शासनं त्यक्तुं न मे न्याय्यम्। तवापि तत् सदा मान्यम्। स नो बन्धुः पिता च। एवमुक्त्वा विरते रामे भरतस्तं धर्मयुतमाश्चर्यकरं च वचनमुवाच। लोके त्वादृशः कोऽप्यन्यो न स्यात्। त्वां दुःखं न प्रव्यथयेत् सुखं वा न प्रहर्षयेत्। वृद्धानां त्वमिष्टस्तांश्च संशयान् पृच्छसि। यो मृतमिव जीवन्तमपि न द्वेष्टि अविद्यमानवस्तुनीव विद्यमानवस्तुनि च रागवान् न भवति स केन परितप्येत? महात्मा त्वममरोपमसत्त्वः सत्यप्रतिज्ञः सर्वज्ञः सर्वदर्शी बुद्धिमांश्चासि। एवंगुणयुक्तमुत्पत्तिविनाशज्ञं त्वामसह्यं दुःखं प्राप्तुं नार्हति। प्रोषिते मयि अल्पबुद्ध्या मम मात्रा मत्कारणाद् यत् पापं कृतं तन्मेऽनिष्टम्। भवान् मे प्रसीदतु। धर्मपाशेन बद्धोऽस्मि। तेनेह दण्डार्हां पापकारिणीमिमां मातरं तीव्रेण दण्डेन न हन्मि*। पवित्रकुलकर्मवतो दशरथाज्जातो धर्मं जानन्नहमधर्मिष्ठं जुगुप्सितं कर्म कथं कुर्याम्? गुरुः कर्मशीलो वृद्धः प्रेतः पिता दैवतं चेति कारणेन राजानं दशरथं सभायां न गर्हेय। हे धर्मज्ञ! को नाम धर्मवित् स्त्रियाः प्रियं चिकीर्षुर्धर्मार्थहीनं किल्बिषमीदृशं कर्म कुर्यात्? अन्तकाले भूतानि मुह्यन्तीति प्राचीना लोकोक्तिः। एवं कुर्वता राज्ञा सा श्रुतिर्लोके प्रत्यक्षा कृता। क्रोधादज्ञानात् साहसाच्च तातेन यो धर्मः अतिक्रान्तस्तमर्थं भवान् साधु समालोच्य प्रत्याहरतु। पितुर्धर्मातिक्रमणं साधु कर्तुं यः पुत्रश्चेष्टते स एव लोके पुत्रो मतः। अन्यथा स विपरीतो मतः। भवान् तादृशमपत्यमस्तु। लोके धीरविगर्हितं दुष्कृतं पितुः कृतं कर्म भवान् मा अनुमोदताम्+। कैकेयीं मां पितरं नः सुहृदो

---

* ९७–७ श्लोके भरतेन स्वमाता निन्दिता १७ श्लोके रामेण सः अकार्या मातृनिन्देत्युक्तश्च। अस्मिन् ग्रन्थभागे भाषणेषु पुनर्वचनानि दृश्यन्ते। पृथग्वचनयोः सम्मेलनमत्र कृतं मन्ये।

+ cr अभिपत्तत्कृतं कर्म। ग्राह्यः– अभिपत्ता कृतं कर्म। अभिपत्ता अभिपद्यमानः।

बान्धवान् सर्वान् पौरजानपदान् सर्वमिदं राज्यं च भवांस्त्रायताम्। क्वारण्यं क्व क्षत्रियधर्मः? जटाः क्व राज्यपालनं क्व? ईदृशं विरुद्धं कर्म भवान् कर्तुं नार्हति। अथ यदि त्वं क्लेशजमेव धर्ममाचरितुमिच्छसि तर्हि सर्वाः प्रजा धर्मेण पालयन् क्लेशमाप्नुहि। धर्मज्ञ! गार्हस्थ्यमेव चतुर्णामाश्रमाणां श्रेष्ठमिति धर्मज्ञाः प्राहुः। तं गार्हस्थ्यधम कथं त्यक्तुमर्हसि? श्रुतेन स्थानेन जन्मना च भवतोऽहं बालः। सोऽहं भवति तिष्ठति भूमिं कथं पालयिष्यामि? अल्पबुद्धिरल्पगुणः स्थानेनाल्पो बालश्चाहं भवता विनाभूतो जीवितुं च नोत्सहे। पित्र्यं निखिलं निष्कण्टकमिदं राज्यं बान्धवैः सह स्वधर्मेणाव्यग्रमनुशाधि। सर्वे मन्त्रिणो वसिष्ठेन सह ऋत्विजश्चेहैव त्वामभिषिञ्चन्तु। अभिषिक्तस्त्वमस्माभिः सह मरुद्भिः सह लोकविजयी इन्द्र इव राज्यपालनार्थमयोध्यां व्रज। देवर्षिपितृणानि त्रीण्यपाकुर्वन् दुर्हृदः सुष्ठु निर्दहन् सुहृदः कामैस्तर्पयन् अयोध्यायां त्वमेव मामनुशाधि। अद्याभिषेचने ते सुहृदो मुदिताः सन्तु दुर्हृदो भीता दश दिशः पलायन्ताम्। अद्य मम मातुर्निन्दां प्रमृज्य पूज्यं पितरं किल्बिषाद् रक्ष। अहं शिरसा त्वां याचे। भूतेषु महेश्वर इव मयि सर्वेषु बान्धवेषु च करुणां कुरुष्व। अथ यदि भवान्मम प्रार्थनामनादृत्येतो वनमेव गमिष्यति तर्ह्यहमपि भवता सार्धं गमिष्यामि। तथा दुःखितेन भरतेन शिरसा प्रसाद्यमानः सत्त्ववान् रामः पितुस्तद्वचने प्रतिष्ठितः प्रतिनिवर्तनाय मतिं न चक्रे। रामस्य तदद्भुतं स्थैर्यमवेक्ष्य दुःखितो जनः समं हर्षमवाप। अयोध्यां न यातीति दुःखितोऽभवत्। स्थिरप्रतिज्ञत्वमवेक्ष्य हर्षितो बभूव। ऋत्विजो निगमसमुदायनायका विचेतना गद्गदस्वरा मातरश्च तथा ब्रुवाणं भरतं प्रतुष्टुवुः। रामं चायोध्यां निवर्तितुं ययाचिरे।

९९

बन्धुमध्ये पुनरेवं ब्रुवाणं भरतं रामः प्रत्युवाच। राजसत्तमाद् दशरथात् कैकेय्यां जातस्य पुत्रस्येदं ते युक्तं वाक्यम्। भ्रातः! पुरा नः पिता ते मातरं

समुद्वहन् मातामहाय प्रत्यजानाद् यत् कैकेयीपुत्राय मे राज्यं दास्यामि। किञ्च स प्रभुर्दैवासुरे संग्रामे सेवितः सन् संप्रहृष्टस्ते जनन्यै वरं ददौ। ततो यशस्विनी मान्या ते माता राजानं शपथं कारयित्वा द्वौ वरावयाचत एकेन ते राज्यमन्येन मम प्रव्राजनं च*। एवं नियुक्तो राजा च तौ वरौ तस्यै प्रददौ। तेन वरेण पित्राहं चतुर्दशवर्षाणि वने वस्तुं नियुक्तः। सोऽहं लक्ष्मणेन सीतया च सह पितुः सत्यवचने स्थितोऽनिवारितो वनं प्राप्तोऽस्मि। तथैव भवानपि क्षिप्रं राज्याभिषेचनात् पितरं सत्यवादिनं कर्तुमर्हति। हे धर्मज्ञ! मत्कृते राजानमृणान्मोचय। पितरं त्रायस्व मातरं संतोषय। पुरा गयाक्षेत्रे पितृनुद्दिश्य यजमानेन यशस्विना गयेनेयं गाथा गीता श्रूयते। पुन्नाम्नो नरकात् सुतः पितरं त्रायते। पितॄन् पातीति सुतः पुत्रः प्रोक्तः। गुणवन्तो बहुश्रुता बहवः पुत्राः काङ्क्षितव्याः। तेषामेकोऽपि गयां व्रजेत्। सर्वे राजर्षयः पितॄणामुद्धरणं पुत्रस्य कर्तव्यमिति निश्चितवन्तः। तस्मात् पितरं नरकात् त्रायस्व। हे वीर! शत्रुघ्नेन सर्वैर्द्विजैश्च सहायोध्यां गच्छ। प्रकृतीरनुरञ्जय। अहं च सीतया लक्ष्मणेन सहाचिरेण दण्डकारण्यं प्रवेक्ष्यामि। त्वमयोध्यां गत्वा राजा भव। अहं संहृष्टो दण्डकान् गमिष्यामि।मूर्ध्नि ते सूर्यकान्तिं निवारयत् छत्रं शीतां छायां करोतु। अहमेतेषां काननद्रुमाणामधिकां छायां सुखं श्रयिष्ये। शत्रुघ्नस्ते सहायो मम लक्ष्मणः प्रधानमित्रम्। एवं वयं चत्वारः पितरं सत्यस्थितं करवाम। मा विषीद।

१००

इत्थं भरतमाश्वासयन्तं धर्मज्ञं रामं ब्राह्मणोत्तमो जाबालिर्धर्मापेतमिदमुवाच। राम! साधु साधु। त्वमार्यबुद्धिरसि। सामान्यमानवस्येव एवं ते निष्प्रयोजना बुद्धिर्मा भूत्। लोके प्राणी एको जायते एक एव म्रियते।

---

* एतद्विषयविचाराय मम निबन्धः रामायणसमालोचनम् (साहितीजगती १९९०) पठितव्यः।

तस्मात् कः पुरुषः कस्य बन्धुः? कस्य केनचित् किं प्राप्यम्? तस्माद् यो नरो माता पिता चेत्यासक्तो भवति स उन्मत्त इव विज्ञेयः। लोके कश्चित् कस्यचिन्नास्ति। ग्रामान्तरं गच्छन् कश्चिन्नरो यथा क्वचिद् वसेत् तमावासमुत्सृज्यापरेऽहनि प्रतिष्ठेत एवमेव मनुष्याणां पिता माता गृहं धनमित्यावासमात्रम्। अत्र सज्जना आसक्ता न भवन्ति। हे नरोत्तम! तस्मात् त्वं पित्र्यं राज्यं परित्यज्य दुःखकरं विषमं बहुबाधामयं कापथमास्थातुं नार्हसि। समृद्धामयोध्यां गत्वा आत्मानमभिषेचय। एकवेणीधरा प्रोषितभर्तृकेव नगरी त्वां सम्प्रतीक्षते। महार्हान् राजभोगाननु-भवन् त्वं शक्रस्त्रिविष्टपे यथा तथायोध्यायां विहर। तव दशरथः कश्चिन्न त्वं च तस्य न कश्चन। स राजा अन्यस्त्वमन्यः। तस्माद् यदुच्यते तत् कुरु। तेन यत्र गन्तव्यं स नृपतिस्तत्र गतः। मर्त्यानां प्रवृत्तिरेषा। त्वं तु मिथ्या बाध्यसे। प्रत्यक्षसौख्यं विहाय केवलार्थधर्मपरान् सर्वानहं शोचामि। अन्यान् कामपरान् न शोचामि। ते अर्थधर्मपरा इह दुःखं प्राप्य प्रेत्य विनश्यन्ति। अष्टकाश्राद्धमिति प्रत्याब्दिकश्राद्धमिति जनः प्रवर्तते। अत्रान्नविनाशो दृश्यताम्। मृतः किमशिष्यति? इहान्येन भुक्तमन्यस्य देहं यदि गच्छति तर्हि प्रयातस्य श्राद्धं दद्यात्। किं तत् पथ्यशनं न भवेत्? यजस्व देहि दीक्षस्व तपश्चर सर्वं त्यजेत्येते ग्रन्था मेधाविभिः कृता दानवशीकरणोपायाः। महामते! ततस्त्वं परं नास्तीत्येव बुद्धिं कुरु। यत् प्रत्यक्षं तदातिष्ठ। परोक्षं पृष्ठतः कुरु। तस्मात् त्वं सर्वस्मिन् लोके निरूपितां परं नास्तीति तां+ बुद्धिं पुरस्कृत्य भरतेन प्रार्थितो राज्यं प्रतिगृह्णीष्व।

१०१

बुद्धिमतां श्रेष्ठो रामो जावालेर्वचः श्रुत्वा अविहतमतिः परया युक्त्योवाच। मम प्रियं कर्तुं भवान् यदिहावोचत् तत् कार्यसंकाशमकार्यं

+ cr सतां बुद्धिम्। ग्राह्यः- स तां बुद्धिम्।

पथ्यसदृशमपथ्यं चास्ति। धर्ममर्यादारहितः पापाचारसमन्वितो भिन्नचरित्रो नष्टविचारः पुरुषः सत्सु गौरवं न लभते। कुलीनमकुलीनं वीरं वीरमानिनं शुचिमशुचिं वा चरित्रमेव व्याख्याति। अनार्य एव सन्नार्यसंकाशः शौचाद्धीन एव सन् शुचिरिव शिष्टलक्षणयुक्ततुल्य एव सन् लक्षणहीनः शीलवानिव सन् दुश्शीलः अहं शुभसाधनं वैदिकधर्मं हित्वा लोकसंकरकारकं वैदिकक्रियया वेदविधिना च विवर्जितमिमं त्वदुक्तमधर्मं धर्मत्वेन यदि स्वीकरिष्यामि दुर्वृत्तं मां ज्ञानवान् कः पुरुषो लोके बहुमंस्यते? अहं हीनप्रतिज्ञयानया वृत्त्या वर्तमानः कस्य वृत्तमुपदेक्ष्यामि?[+] केन वा स्वर्गमाप्नुयाम्? यद्यहमेवं प्रवर्तिष्ये तर्हि सर्वो लोको यथाकामं समुपवर्तिष्यते यतो राजानो यद्वृत्ताः सन्ति प्रजास्तद्वृत्ताः सन्ति। सनातनं राजवृत्तं सत्यस्वरूपं क्रौर्यरहितं च। तस्माद् राज्यं सत्यात्मकम्। लोकः सत्ये प्रतिष्ठितोऽस्ति। ऋषयो देवाश्च सत्यमेवोत्तमं मेनिरे। लोके सत्यवादी परमं स्थानं गच्छति। अनृतवादिनो नरात् सर्पादिव जना उद्विजन्ते। लोके सत्यं परो धर्मः स्वर्गस्य मूलं चोच्यते। लोके सत्यमेवेश्वरः। लक्ष्मीः सत्यं समाश्रयते। सर्वाणि सत्यमूलानि सन्ति। सत्यात् परं पदं नास्ति। दानं यज्ञो होमस्तपो वेदाश्च सत्ये प्रतिष्ठिताः। तस्मात् सत्यपरो भवेत्। सत्यफलेन एको लोकं कुलं वा पालयति स्वर्गे महीयते च। असत्यफलेनान्यो निरये मज्जति। अहं सत्यप्रतिश्रवः। अतः सत्यं पितुर्नियोगं किमर्थमहं नानुपालयामि? लोभान्मोहात् तमोगुणजनिताज्ञानाद्[++] वा सत्यप्रतिज्ञोऽहं गुरोः सत्यस्य सेतुं न भेत्स्यामि। असत्यभाषिणश्चपलचित्तस्य हव्यकव्यादीनि देवाः पितरश्च न प्रतीच्छन्तीति नः श्रुतम्। सत्यरूपमिमं

---

[+] cr कस्य यास्याम्यहं वृत्तम्। ग्राह्यः – कस्य दास्याम्यहं वृत्तम्।

[++] cr तमोन्वितः। तमोऽन्वितः इति पाठ्यः।

धर्ममहं परमात्मस्वरूपं* पश्यामि। तदर्थं सत्पुरुषाचरितं सत्यपालनक्लेशमभिमन्ये। अल्पेन धर्मेण महता अधर्मेण संयुतं क्षुद्रक्रूरलुब्धपापकर्मभिः सेवितं क्षात्रं धर्मं**महंत्यक्ष्यामि नरो मनसा संप्रधार्य कायेन पापं कुरुते। जिह्वयानृतं चाह। एवं पापकर्म त्रिविधमस्ति। भूमिः कीर्तिर्यशो लक्ष्मीश्च सत्यवन्तं पुरुषं प्रार्थयन्ति। स्वर्गस्थं च तमनुबध्नन्ति। तस्मात् सत्यमेव भजेत। भवान् श्रेष्ठमिति निश्चित्येदं भद्रमिदं कुरुष्वेति युक्तियुक्तैर्वाक्यैर्मां यदाह तदनार्यमेव स्यात्। अहमिमं वनवासं गुरोः प्रतिज्ञाय गुरुवचनं हित्वा भरतस्य वचः कथं करिष्यामि? गुरुसन्निधौ मया स्थिरा प्रतिज्ञा कृता तदा देवी कैकेयी प्रहृष्टा चाभवत्। अहं शुचिर्नियतभोजनः पुण्यैर्मूलैः पुष्पैः फलैः पितॄन् देवांश्च तर्पयन् सन्तुष्टपञ्चेन्द्रियसमुदायः कपटरहितः श्रद्धावान् कार्याकार्यविचक्षण एवं वनवासं वसन् लोकयात्रां प्रवर्तये। इमां कर्मभूमिं प्राप्य यच्छुभं कर्म तत् कर्तव्यम्। अग्निर्वायुः सोमश्च स्वकर्मणां फलभागिनः सन्ति। क्रतुशतमाहृत्य देवराट् त्रिदिवं जगाम। उग्राणि तपांस्यास्थाय महर्षयो दिवं ययुः। सत्यं धर्मं पराक्रमं भूतदयां प्रियवादितां ब्राह्मणदेवातिथिपूजनं च स्वर्गस्य मार्गं सन्त आहुः। धर्मरताः सत्पुरुषसमेतास्तेजस्विनो दानगुणप्रधाना अहिंसका वीतपापा उत्तमा मुनयो लोके पूज्याः सन्ति।

## १०२

अथ रामं क्रुद्धमाज्ञाय वसिष्ठ आह। राम! मनुष्याणां परलोकगमनप्रत्यागमनं जाबालिरपि जानीते। स न नास्तिकः। त्वां निवर्तयितुकामस्तु एतद्

---

* प्रत्यगात्ममिमं धर्मं सत्यं पश्याम्यहं स्वयम् इति। प्रत्यगात्ममात्मानं प्रत्यविनाभूतत्वेन प्रवृत्तमिति गोविन्दराजः। प्रत्यगात्ममित्यदन्त आर्षः। प्रत्यगात्मा परमात्मा। वासुदेवे भगवति सर्वज्ञे प्रत्यगात्मनि। भागवतम् ३,२५,४५. तदा आत्मसंस्थस्य प्रत्यगात्मन ईश्वरस्य सर्वज्ञस्य। केनोपनिषद् ३, २ शङ्करभाष्यम्। प्रत्यगात्मा जीवात्मेति च वेदान्तशास्त्रे। कर्मसहभावित्वविरोधाच्च प्रत्यगात्मब्रह्मविज्ञानस्य। केनोपनिषद्, खण्डः (१)। शङ्करभाष्यम्। तथा Monier Williams **पितुराज्ञामुल्लङ्घ्यापि राज्यग्रहणम्।

वाक्यमुक्तवान्। सम्प्रति लोकसमुत्पत्तिं कथयामि। निबोध। सर्वं सलिलमेव बभूव। तस्मिन् जले पृथिवी निर्मिता। ततः स्वयंभूर्ब्रह्मा दैवतैः सह समभवत्। ततः स वराहो* भूत्वा वसुंधरां जलात् प्रोज्जहार। शिक्षितबुद्धिभिः पुत्रैर्मरीच्यादिभिः सह सर्वं जगदसृजत्। शाश्वतो नित्योऽव्ययो ब्रह्मा परब्रह्मणो जातः। तस्माद् ब्रह्मणो मरीचिः संजज्ञे। कश्यपो मरीचेः सुतः। कश्यपाद् विवस्वान् जज्ञे। विवस्वतः पुत्रो मनुः। स मनुः पूर्वं प्रजापतिर्बभूव। मनोः पुत्र इक्ष्वाकुः। समृद्धा मही मनुना इक्ष्वाकोर्दत्ता। स इक्ष्वाकुरयोध्यायाः प्रथमो राजा बभूव। इक्ष्वाकोः सुतः श्रीमान् कुक्षिः। कुक्षेः पुत्रो विकुक्षिः। विकुक्षेः पुत्रो बाणः। बाणस्यानरण्यः पुत्रः। तदा अनावृष्टिर्दुर्भिक्षं कश्चन तस्करश्च न बभूव। अनरण्यात् पृथुः पृथोस्त्रिशङ्कुश्च बभूव। स त्रिशङ्कुः सत्यवचनात् सशरीरो दिवमगच्छत्। त्रिशङ्कोर्धुन्धुमारो धुन्धुमाराद्युवनाश्वो युवनाश्वान्मान्धाता मान्धातुः सुसन्धिश्चाजायन्त। सुसन्धेर्द्वौ पुत्रौ ध्रुवसन्धिः प्रसेनजिच्चाभवताम्। ध्रुवसन्धेर्भरतो जज्ञे। भरतादसितोऽजायत। असितस्य हैहयास्तालजङ्घाः शशिबिन्दवश्च शत्रवः प्रतिराजानो बभूवुः। असितो युद्धे तान् सर्वान् प्रतिव्यूह्य राज्यात् प्रवासितो मुनिर्भूत्वा पर्वते न्यवसत्। श्रुतं च तस्य द्वे भार्ये गर्भिण्यावास्ताम्। तदा भार्गवश्च्यवनो नाम मुनिर्हिमवन्तमुपाश्रितो बभूव। असितस्य भार्या कालिन्दी तमुपागम्याभ्यवादयत्। पुत्रजन्मनि वरेप्सुं तां विप्रोऽवदत्। देवि! ते महात्मा लोकविश्रुतो धार्मिको वंशकर्ता अरिसूदनः पुत्रो भविता+। सा हृष्टा तं प्रदक्षिणं कृत्वा तेनानुज्ञाता

---

* नारायणपदमध्याहृत्य विष्णुर्वराहरूपेण भूमिमुद्दधारेति महेश्वरतीर्थो व्याख्याति। किन्तु ब्रह्मा वराहरूपेण भूमिमुद्धृतवानिति स्पष्टमस्ति श्लोके। ब्रह्मणो वराहावतारे किञ्चन पुराणं द्रष्टव्यम्।

+ Cr द्वौ श्लोकौ ग्राह्यौ। पुत्रस्ते भविता देवि महात्मा लोकविश्रुतः। धार्मिकश्च सुभीमश्च वंशकर्तारिसूदनः।। कृत्वा प्रदक्षिणं हृष्टा मुनिं तमनुमान्य च। पद्मपत्रसमानाक्षं पद्मगर्भसमप्रभम्।।

गृहमागम्य पद्मपत्रविशालनयनं पद्मसंभवद्युतिं पुत्रं व्यजनयत्। परन्तु तस्याः सपत्न्या गर्भजिघांसया तस्यै गरो दत्तः। तेन गरेण सहैव जातः स सगरोऽभवत्। स सगर इष्ट्वा समुद्रमखानयत्। सगरस्यासमञ्जः पुत्रो बभूवेति नः श्रुतम्। पापकर्मकृत् स जीवन्नेव पित्रा निरस्तः। असमञ्जस्यांशुमान् अंशुमतो दिलीपः दिलीपस्य भगीरथः भगीरथस्य ककुत्स्थश्च पुत्रा बभूवुः। ककुत्स्थादेव युष्माकं काकुत्स्था इति नाम संजातम्। ककुत्स्थस्य रघुः पुत्रोऽभूद्येन यूयं राघवा अभवत। रघोः पुत्रः पुरुषादकनामाभवद् यः कल्माषपादः सौदास इति च विश्रुतः। कल्माषपादस्य शङ्खणः पुत्र आसीद् यः पित्रैव सहसैन्यो हतः*। शङ्खणस्य पुत्रः सुदर्शनः। सुदर्शनस्याग्निवर्णः अग्निवर्णस्य शीघ्रगः शीघ्रगस्य मरुः मरोः प्रशुश्रुकः प्रशुश्रुकस्याम्बरीषः अम्बरीषस्य नहुषः नहुषस्य नाभागश्च पुत्रा आसन्**। नाभागस्याजः सुव्रतश्च पुत्रौ बभूवतुः। अजस्य दशरथः सुतः। तस्य त्वं ज्येष्ठः पुत्रोऽसि। राम! तस्मात् स्वकं राज्यं गृहीत्वा प्रजाः पालय। सर्वेषामिक्ष्वाकूणां पूर्वजो राजा भवति। पूर्वजे स्थिते अवरो न राजा भवति। ज्येष्ठः पुत्रो राज्येऽभिषिच्यते। एवंवंशे जातस्त्वमात्मनो राघवाणां सनातनं कुलधर्ममद्य विहातुं नार्हसि। प्रभूतरत्नां प्रभूतराष्ट्रां मेदिनीं पितृवदनुशाधि। यशस्वी च भव।

## १०३

वसिष्ठो राममेवमुक्त्वा पुनश्च धर्मसंयुक्तमिदमुवाच। जातस्य सर्वस्य पुरुषस्य आचार्यः पिता मातेति त्रयो गुरवो भवन्ति। पिता माता च पुरुषं जनयतः। आचार्यः प्रज्ञां ददाति। तस्मादाचार्यो गुरुरुच्यते। अहं ते पितुस्तव चैवाचार्यः। त्वं मम वचनं कुर्वन् सतां गतिं नातिवर्तेथाः।

*वसिष्ठशापाद् राक्षसत्वं प्राप्तेन कल्माषपादेन सहसैन्यः पुत्रो हतः।

**वंशक्रमोऽयं बालकाण्ड(६९) कथानान्मनाग् भिद्यते।

इमे ते सभास्तारा वणिजश्च समागताः। एषु धर्मं चरन् सतां गतिं नातिवर्तेथाः। वृद्धाया धर्मशीलाया मातुः शुश्रूषामकर्तुं त्वं नार्हसि। अस्या वचनं कुर्वन् सतां गतिं नातिवर्तेथाः। याचमानस्य भरतस्य वचनं कुर्वन् त्वमात्मनो धर्मान्नातिवर्तेथाः। गुरुणा स्वयमेवं मधुरमुक्तो रामः समासीनं वसिष्ठं प्रत्युवाच। मातापितरौ तनयं यथाशक्ति प्रदानेन स्वापनेनाच्छादनेन नित्यं प्रियवचनेन च संवर्धयतः। अनेन मात्रा पित्रा च यत् कृतं तन्न सुप्रतिकरम्। मम जनयिता राजा दशरथः। मया तस्य यत् प्रतिज्ञातं तन्मिथ्या न भविष्यति। रामेणैवमुक्तः परमोदारो भरतः परमदुःखितः सन् समीपस्थं सूतमुवाच। सारथे! इह मे स्थण्डिले शीघ्रं कुशानास्तर। यावन्मे न प्रसीदति तावदार्यं निरुध्योपवेक्ष्यामि। धनहीनो* ब्राह्मण इवानाहारः अवगुण्ठितमुखः पर्णशालायाः पुरस्ताद् रामो यावदयोध्यां न प्रतियास्यति तावत् शयिष्ये। तदा सुमन्त्रो राममवेक्षमाणस्तस्थौ। तं प्रेक्ष्य भरतः स्वयमेव कुशास्तरणमुपस्थाप्य भूमावातस्तार। रामस्तमुवाच। तात भरत! मया तव किमपकृतं येन मां प्रत्युपवेक्ष्यसि? लोके ब्राह्मण एकपार्श्वेन शयित्वा नरान् रोद्धुमर्हति। मूर्धाभिषिक्तानां क्षत्रियाणामयं विधिर्न विद्यते। नरश्रेष्ठ! एतद् दारुणं व्रतं हित्वोत्तिष्ठ। इतः क्षिप्रं पुरवर्यामयोध्यां याहि। भरत आसीनस्त्वेव पौरजानपदं जनं सर्वतः प्रेक्ष्यार्यं किं नानुशिष्टेत्युवाच। तदा पौरजानपदास्ते जना भरतमूचुः। भवन्तं वयं सम्यग् जानीमः। भवान् युक्तं वदति**। परन्त्वेष महाभागो रामः पितुर्वचसि तिष्ठति। अतस्तमञ्जसा व्यावर्तयितुं न शक्ताः स्मः। रामस्तेषां वचनमाज्ञायोवाच। धर्मचक्षुषां सुहृदामेवं वचनं निवोध।

---

*वृद्ध्यर्थमृणं दत्वा तत्पुनः प्रतिग्रहणाशक्तो धनहीन इति महेश्वरतीर्थगोविन्दराजौ।

**रामं सम्यग् जानीमः। स युक्तं वदति इति च श्लोकार्थो लेख्यः।

एतदुभयं श्रुत्वा सम्यक् संपश्योत्तिष्ठ। मां चोदकं च स्पृश*। अथ भरत उत्थाय जलं स्पृष्ट्वा (आचम्य) उवाच। विद्वत्परिषदो मन्त्रिणः श्रेणयश्च मे शृण्वन्तु। न मया पिता राज्यं याचितो माता वा राज्यार्थं प्रेरिता। रामस्य वनगमनं न मया ज्ञातम्। अवश्यं यदि वस्तव्यं पितुर्वचः कर्तव्यं च तर्ह्यहमेव चतुर्दशसमा वने निवत्स्यामि। धर्मात्मा रामो भ्रातुस्तथ्येन वाक्येन विस्मितः पौरजानपदं जनं संप्रेक्ष्योवाच। मम जीवता पित्रा यद् विक्रीतमाहितं क्रीतं तल्लोपयितुं मया वा भरतेन वा न शक्यम्। मया वनवासे निन्दितः प्रतिनिधिन्यासो न कार्यः**। कैकेय्या युक्तमुक्तम्। पित्रा सुकार्यं कृतम्। भरतं क्षमावन्तं गुरुसत्कारकारिणं जानामि। महात्मनः सत्यसन्धस्य भरतस्य सर्वं कल्याणं भविष्यति। वनात् पुनः प्रत्यागतो धर्मशीलेनानेन भ्रात्रा सह पृथिव्याः श्रेष्ठः पतिर्भविष्यामि। राजा कैकेय्या वरं याचितः। मया राज्ञो वचनं कृतम्। राज्यमङ्गीकृत्य त्वमपि पितरमनृतान्मोचय।

१०४

अप्रतिमतेजसोस्तयोर्भ्रात्रोस्तं रोमहर्षणमन्योन्यसौहार्दयुतं समागमं प्रेक्ष्य समवेता महर्षयो विस्मिता बभूवुः। अन्तर्हिता मुनिगणाः सिद्धाश्च भ्रातरौ रामभरतौ प्रशशंसुः। धन्यः स दशरथो यस्येमौ धर्मज्ञौ पुत्रौ। उभयोः संभाषणं श्रुत्वा कथं तयोरनुरक्ता न भवामः? ततः क्षिप्रं रावणवधैषिण ऋषिगणाः संगता भरतमेवमूचुः। हे महायशः! त्वं सत्कुले जातो महाप्राज्ञः

* क्षत्रियाविहितप्रत्युपवेशनप्रायश्चित्तार्थमुदकस्पर्शनम्। वसिष्ठादिषु विद्यमानेषु स्वस्पर्शनविधेः इतः परमेवंविधं न क्रियत इति शपथार्थं जलं स्पृष्ट्वा मां स्पृशेत्यपि सिद्धम् इति गोविन्दराजः। ** वनवासकरणे शक्तोऽहं नाशक्तः। अतः प्रतिनिधिं न करिष्यमीति रामस्याभिप्रायः।

सदाचारश्चासि। पितरं सम्मानयतस्ते रामस्य वाक्यं ग्राह्यम्। वयं सदा रामं पितुरनृणमिच्छामः। दशरथः कैकेय्या अनृणत्वात् स्वर्गं गतः। एतावदुक्त्वा गन्धर्वा महर्षयो राजर्षयश्च स्वां स्वां गतिं जग्मुः। शुभदर्शनो रामः शुभेन तेन वाक्येन ह्लादितस्तान् मुनीनपूजयत्। भरतस्तु स्रस्तगात्रः कृताञ्जलिः सज्यमानया वाचा पुना राममब्रवीत्। राम! राजधर्मं कुलधर्मं चानुप्रेक्ष्य मम मातुश्च प्रार्थनां कर्तुमर्हसि। अहमेकः सुमहद् राज्यं रक्षितुं रक्तान् पौरजानपदान् रञ्जयितुं च न प्रभवामि। अस्माकं बन्धवो योधा मित्राणि हितैषिणश्च त्वामेव कर्षकाः पर्जन्यमिव प्रतीक्षन्ते। महाप्राज्ञ! इदं राज्यं प्रतिपद्य स्थापय। लोकस्य परिपालने शक्तिमानसि। इत्युक्त्वा भरतो भ्रातुः पादयोर्न्यपतत्। रामं भृशं संप्रार्थयामास। तं भरतं रामः स्वयमङ्के कृत्वाब्रवीत्। तात! सहजया गुरुशिक्षणलब्धया च बुद्ध्या समस्तां पृथिवीमपि रक्षितुं समर्थोऽसि। अमात्यैः सुहृद्भिश्च सम्मन्त्र्य सुमहान्त्यपि सर्वकार्याणि कारय। चन्द्रात् कान्तिरपेयात्। हिमवान् हिमं त्यजेत्। सागरो वेलामतिक्रमेत। अहं पितुः प्रतिज्ञां नातिक्रमेय। आशया लोभाद् वा मात्रा तुभ्यमिदं कृतम्। तन्मनसि न कर्तव्यम्। मातृवद् गौरवं कर्तव्यम्। तदा तेजसा सूर्यसंकाशं प्रतिपच्चन्द्रमिवाह्लादकरदर्शनं रामं भरतोऽब्रवीत्। आर्य! हेमभूषिते पादुके* पादाभ्यामधिरोह। एते सर्वलोकस्य योगक्षेमं विधास्यतः। रामः पादुके अधिरुह्यावरुह्य भरताय प्रायच्छत्। धर्मवित् प्रतापवान् भरतः स्वलङ्कृते ते पादुके संपरिपूज्य रामं प्रदक्षिणं चकार। ते महागजमूर्धनि स्थापयामास। अथ रामः स्वधर्मे हिमाचल इव स्थिरस्तं जनं यथाक्रमं प्रतिनन्द्य गुरूंश्च मन्त्रिप्रकृतीस्तथानुजौ चाभिनन्द्य व्यसर्जयत्। दुःखेन बाष्पगृहीतकण्ठ्यो मातरस्तमामन्त्रयितुं न शेकुः। स राम एवं सर्वा मातृरभिवाद्य रुदन् स्वां कुटीं प्रविवेश।

---

* यदि रामः अयोध्यां प्रतिनिवर्तितुं नाङ्गीकरिष्यति तर्हि पादुकयोः प्रातिनिध्यं कारयिष्यामीति पूर्वमेव संप्रधारयता भरतेन पादुके उपस्थापिते इति ऊहनीयम्।

१०५

ततो भरतः पादुके शिरसि निधाय हृष्टः शत्रुघ्नसहितो रथमारुरोह। वसिष्ठो वामदेवो जाबालिः सर्वे मन्त्रिणश्चाग्रतः प्रययुः। तदा ते चित्रकूटं महागिरिं प्रदक्षिणं कुर्वाणाः प्राङ्मुखा मन्दाकिनीं रम्यां नदीं ययुः। भरतो रम्याणि विविधानि धातुसहस्राणि पश्यन् ससैन्यस्तस्य गिरेः पार्श्वे प्रययौ। तदा भरतश्चित्रकूटस्य समीपे भरद्वाजस्य निवासं* ददर्श। स तमाश्रमं गत्वा रथादवतीर्य मुनेः पादौ ववन्दे। हृष्टो भरद्वाजः अपि कृत्यं कृतम्? अपि रामेण ते समागमः प्राप्तः? इति भरतं पप्रच्छ। तदा भरतः प्रत्युवाच। गुरुणा मया च याच्यमानो रामः परमप्रीतो वसिष्ठमिदमब्रवीत्। चतुर्दशवर्षाणां कृते पितुः प्रतिज्ञां यथार्थतः पालयिष्यामि। तदा वसिष्ठो रामं प्रत्युवाच। महाप्राज्ञ! संहृष्टःसन् एते ते हेमभूषिते पादुके प्रयच्छ। अयोध्यायामेते योगक्षेमकरे भविष्यतः। वसिष्ठेनैवमुक्तो रामः प्राङ्मुखः स्थित्वा हेमविकृते पादुके राज्यनिर्वहणार्थं मे ददौ। सुमहात्मना रामेणानुज्ञातोऽहं निवृत्तः शुभे पादुके गृहीत्वा अयोध्यामेव गच्छामि। भरतस्यैतत् शुभं वाक्यं श्रुत्वा मुनिर्भरद्वाजो भृशं मङ्गलकरं वाक्यमब्रवीत्। हे नरश्रेष्ठ! शीलवृत्तवतां वर! वृष्टं जलं यथा निम्ने तिष्ठति तथा श्रेष्ठा गुणास्त्वयि तिष्ठन्ति। धर्मज्ञं त्वां पुत्रं प्राप्य ते पिता दशरथोऽमृतः। ततः कृताञ्जलिर्भरतस्तमृषिं चरणौ प्रणम्यामन्त्रयितुमारेभे। भरद्वाजं पुनः पुनः प्रदक्षिणं कृत्वा भरतो मन्त्रिभिः सहायोध्यां ययौ। तस्य विस्तीर्णा सेना तमनुयाय यानैः शकटैर्हयैर्गजैश्च पुनर्निववृते। ततस्ते दिव्यामूर्मिमालिनीं यमुनां तीर्त्वा शुभजलां गङ्गां नदीं पुनर्ददृशुः। सहबान्धवो गङ्गां संतीर्य

---

* अयं निवासो भरद्वाजस्य प्रथमाश्रमाद् भिन्न इति गीताप्रेस्प्रकाशनस्य सम्पादकः। रामो भरद्वाजाश्रमाद् यमुनां तीर्त्वा चित्रकूटं जगाम। भरतस्तु प्रतिनिवर्तने भरद्वाजं मिलित्वा पश्चाद् यमुनां तीर्णः।

सैन्येन सह शृङ्गिबेरपुरं प्रविवेश। ततो भूयः अयोध्यां संददर्श। तदा दुःखसंतप्तो भरतः सारथिमिदमाह। विध्वस्ता अयोध्या निरानन्दा दीना निश्शब्दा न प्रकाशते। पश्य।

१०६

स्निग्धगम्भीरघोषेण स्यन्दनेनोपयान् भरतः अयोध्यां प्रविवेश। तदायोध्यायां बिडाला उलूकाश्च संचरन्ति स्म। नरा गजाश्च निलीनाः। कृष्णपक्षरात्रिवदयोध्या तिमिरावृता बभूव। पुरा कान्त्या भासमाना पश्चादभ्युत्थितेन ग्रहेण पीडिता चन्द्रपत्नी रोहिणीव कान्तिहीना स्थिता। उष्णाविलाल्पजला घर्मोत्तप्तविहंगमा लीनमीनझषग्राहा गिरिनदीव कृशा ददृशे। धूमरहिता हेमाभा समुत्थिता पश्चात् हविरभ्युक्षणनिर्वापितयज्ञाग्नि–शिखेव शोभाविहीना बभूव। महारणे विध्वस्तकवचा रुग्णगजवाजिरथध्वजा हतप्रवीरा आपन्ना चमूरिव तदायोध्या ददृशे। सफेना सस्वना समुत्थिता सहसा प्रशान्तमारुतविशीर्णा सागरजलोर्मिरिव तदायोध्या ददृशे। यागसमाप्तिदिने सर्वयज्ञोपकरणरहिता अभिरूपयाजकत्यक्ता गतरवा यज्ञवेदीव तदायोध्या स्थिता। वृषभेण परित्यक्ता वृषभासक्ता गोष्ठस्थिता आर्ता नवं तृणमचरन्ती धेनुरिवायोध्या बभूव। आश्चर्यकरप्रभैर्मणिभिर्वियोजिता नष्टकान्तिर्नवा मुक्तावलीवायोध्या ददृशे। पुण्यक्षयात् स्थानाच्चलिता सहसा महीं गता स्वल्पीभूतद्युतिविस्तारा दिवश्च्युता तारेवायोध्यासीत्। पुष्पभरिता मत्तभ्रमरसंयुता वसन्तकालान्ते संनिपतितदावाग्नितप्ता क्लान्ता वनलतेवायोध्या दृष्टा। स्तब्धकार्यालया संवृतविपणा अयोध्या जलदसमूहावृता प्रच्छन्नशशिनक्षत्रा द्यौरिव ददृशे। परितः क्षीणोत्तमपानैर्भग्नैः पानपात्रैर्व्याप्ता हतशौण्डा ध्वस्ता असंस्कृता पानभूमिरिवायोध्या बभूव। वृक्णभूमितला निम्ना वृक्णपात्रसमावृता भग्ना निपतिता प्रपेवायोध्या वभूव। विपुला वितता युक्तपाशा तरस्विनां बाणैर्विनिष्कृत्ता आयुधाद् भूमौ पतिता

ज्येवायोध्या स्थिता। युध्दशौण्डेन हयारोहेण सहसा वाहिता विमोचितभूषणा श्रान्ता दुर्बला बालवडवेवायोध्या ददृशे। प्रविगाढायां प्रावृषि अभ्रमण्डले प्रविष्टस्य भास्करस्य नीलजीमूतैः प्रच्छन्ना प्रभेवायोध्यादृश्यत। रथस्थः सन् भरतो रथं वाहयन्तं सारथिमिदमुवाच। अद्यायोध्यायां यथापुरं गम्भीरः समन्ततो व्याप्तो गीतवादित्रनिस्वनो न निशम्यते। मद्यमाल्य–धूपितागरुगन्धाः समन्ततो न प्रवान्ति। रामे विवासिते इदानीमस्यां पुर्यां यानप्रवरघोषः स्निग्धहयनिस्वनः प्रमत्तगजनादो रथमहाशब्दश्च न श्रूयन्ते। अयोध्यायां महापथाश्चारुवेषैः साटोपगामिभिः समूहीभूतैस्तरुणैर्नरैर्न विभान्ति। एवं बहुविधं जल्पन् भरतो राज्ञा दशरथेन हीनां सिंहहीनां गुहामिव स्थितां पितुर्वसतिं विवेश।

१०७

दृढव्रतो भरतो मातृरयोध्यायां निक्षिप्य शोकसन्तप्तो गुरूनथोवाच। भवतां सर्वेषामाज्ञां प्राप्याद्य नन्दिग्रामं गमिष्यामि। तत्र रामवियोगजनितं दुःखं सहिष्ये। राजा दिवं गतः। मम ज्येष्ठो भ्राता वने निवसति। राज्याय रामं प्रतीक्षे। स एव राजा। महात्मनो भरतस्य शुभमेतद् वाक्यं श्रुत्वा सर्वे मन्त्रिणो वसिष्ठश्चाब्रुवन्। भ्रातृवात्सल्याद् भवता श्लाघनीयमुक्तम्। तत् तवैवानुरूपम्। बन्धुष्वासक्तो नित्यं भ्रातृसौहृदे स्थितस्त्वमार्यमार्गं प्रपन्नः। तस्य ते को नाम नानुमन्येत? यथाभिलषितं प्रियं मन्त्रिणां वचनं श्रुत्वा भरतो रथं योजयितुं सारथिं प्राह। प्रहृष्टवदनः सर्वा मातृरभिवाद्य शत्रुघ्नसमेतो रथमारुरोह। ततस्तौ मन्त्रिपुरोहितैः सह प्रस्थितौ। अग्रतो वसिष्ठप्रमुखा द्विजाः प्राङ्मुखा नन्दिग्रामं प्रति प्रययुः। तदा अनाहूतमपि गजाश्वरथसंकुलं बलं ययौ। सर्वे पुरवासिनश्च ययुः। रथस्थो भरतो भ्रातुः पादुके शिरस्यादाय तूर्णं नन्दिग्रामं ययौ। नन्दिग्रामं प्रविश्य रथादवतीर्य गुरूनुवाच। एतद् राज्यं भ्रात्रा संन्यासवन्मे दत्तम्।

योगक्षेमवहे हेमभूषिते इमे पादुके च दत्ते। रामागमनं यावत् तमिमं न्यासं पालयिष्यामि। क्षिप्रं पुना रामस्य स्वयं संयोज्य सहपादुकौ तस्य चरणौ द्रक्ष्यामि। ततो निक्षिप्तभारोऽहं रामेण समागतो राज्यं भ्रात्रे निवेद्य तस्य सेवां भजिष्ये। उत्तमं न्यासमिदं राज्यमयोध्यामिमे पादुके च रामाय दत्वा धूतपापो भविष्यामि। रामेऽभिषिक्ते जने च प्रहृष्टमुदिते राज्याच्चतुर्गुणं मम प्रीतिर्भवेद् यशश्च। महायशा भरत एवं विलपन् मन्त्रिभिः सह नन्दिग्रामे राज्यं चकार। प्रभुर्भरतस्तदा वल्कलजटाधारी मुनिवेषधरः ससैन्यो नन्दिग्रामेऽवसत्। रामागमनमाकाङ्क्षन् भ्रातृवत्सलो भरतो भ्रातृवचनं कुर्वन् प्रतिज्ञां पालयन् पादुके अभिषिच्य सर्वं शासनं पादुकाभ्यां न्यवेदयत्।

१०८

भरतनिर्गमनानन्तरं रामस्तपोवने वसन् महर्षयस्तत्प्रदेशादन्यत्र गन्तुमुत्सुकाः सन्तीति लक्षयामास। ये पुरस्तादानन्देनात्मानमाश्रित्योषुस्तानेव गमनोत्सुकानलक्षयत्। शङ्कितास्ते नयनैर्भ्रुकुटीभिश्च रामं निर्दिश्यान्योन्यमुपजल्पन्तो मिथः संबभाषिरे। तेषामुत्कण्ठामालक्ष्य स्वात्मनि शङ्कितो रामः कृताञ्जलिः कुलपतिमृषिमिदं पप्रच्छ। भगवन्! एतावन्मम प्रवर्तने कच्चित् कोऽप्यपराधो न कृतः? तपस्विनां मनोविकारमहं पश्यामि। कच्चिन्मम लघुभ्रातुर्लक्ष्मणस्य प्रमादादात्मनः अननुरूपमिव चरितं मुनिभिर्न दृष्टम्? भवतो मां च शुश्रूषमाणा सीता कच्चिद् भवत्सु अयुक्तं न प्रवर्तते? तदा वयसा तपसा च वृद्ध ऋषिः कम्पमान इव राममुवाच। तात! कल्याणस्वभावायाः कल्याणाभिरतेर्वैदेह्या धर्मलोपो विशेषतस्तपस्विषु कुतो भवेत्? त्वत्कारणाद् राक्षसेभ्यो मुनीनां भयं प्रवर्तते। तेन संविग्ना मिथः संभाषन्ते। इह रावणावरजो धृष्टो जितकाशी नृशंसः पुरुषादको गर्वितः पापश्च खरो नाम राक्षसो जनस्थाननिकेतनान्

सर्वान् तापसानुत्पाटय त्वां च न मृष्यते। यदा प्रभृति त्वमस्मिन्नाश्रमे वर्तसे तदा प्रभृति रक्षांसि तापसान् विप्रकुर्वन्ति। बीभत्सैः क्रूरैर्भयानकैर्नानारूपैरात्मानं ते दर्शयन्ति। दुष्टास्ते राक्षसास्तापसानां पुरतः स्थित्वा नीचानपवित्रान् पदार्थान् प्रतिक्षिपन्ति। कांश्चिद् घ्नन्ति च। एते नीचबुद्धय आश्रमस्थानेषु निलीय तापसान् नाशयन्तो रमन्ते। होमे प्रवर्तमाने स्रुचो भाण्डांश्चावक्षिपन्ति। वारिणाग्नीन् सिञ्चन्ति। कलशान् भिन्दन्ति। अद्य मुनयो दुरात्मभिस्तैराविष्टानाश्रमान् प्रजिहासवः अन्यदेशगमनाय मां चोदयन्ति। अचिरात् ते दुष्टास्तपस्विषु शरीरहिंसां कुर्युः। तस्मादिममाश्रमं त्यक्ष्यामः। इतोऽविदूराद् बहुमूलफलं चित्रं वनमस्ति। तदस्माभिरुषितपूर्वमेव। सगणः पुनस्तत्रैव वत्स्यामि। खरस्त्वय्यपि अयुक्तं प्रवर्तिष्यते। यदीच्छसि इतोऽस्माभिः सह गच्छ। राम! त्वं सर्वदा सन्नद्धः समर्थश्चासि। परन्तु रक्षणीयया भार्यया सह ते वासः सन्देहपूर्णो दुःखकरश्च भवति। इत्युक्त्वा गमनाय त्वरमाणं तं तपस्विनं रामः प्रत्युत्तरैर्वाक्यैरवरोद्धुं न शशाक। स कुलपतिः राममभिनन्द्य समापृच्छय समाधाय कुलैः सहाश्रमं त्यक्त्वा जगाम। तान् प्रस्थाप्य कुलपतिमभिवाद्य+ रामश्च वासाय स्वनिलयं प्राप। मुनिविरहितमपि तमाश्रमं रामो न व्यसृजत्। स कञ्चित्कालं तत्रैवोवास।

## १०९

तपस्विष्वपयातेषु रामो विचिन्त्य बहुभिः कारणैस्तत्र वासं नारोचयत्। इह भरतो मे दृष्टः। मातरो नागराश्च दृष्टाः। सा स्मृतिर्मामन्वेति येनानुशोचामि। भरतस्य स्कन्धावारनिवेशेन हयहस्तिकरीषैर्भृशमुपमर्दः कृतः। तस्मादन्यत्र गच्छाम इति रामः संचिन्त्य सीतालक्ष्मणाभ्यां सह प्रातिष्ठत। सः अत्रेराश्रममासाद्य तं ववन्दे। भगवानत्रिरपि तं पुत्रवत्

---

+ cr तस्माच्चित्। ग्राह्यः – तस्माच्च।

प्रत्यपद्यत। रामस्य सुसत्कृतं सर्वमातिथ्यं कृत्वा लक्ष्मणं सीतां च समसान्त्वयत्। वृद्धां पत्नीं च तत्राहूय रामादीन् तया सान्त्वयामास। महाभागां तापसीं धर्मचारिणीमनसूयां सीताया गौरवं विधातुमब्रवीत्। ततो राममाह। एषा अनसूया दशवर्षानावृष्ट्या लोके दग्धे मूलानि फलानि चासृजत्। जाह्नवीं च प्रावर्तयत्। सा उग्रेण तपसा नियमैश्च युक्ता। तयोत्तमानि व्रतानि कृतानि+ प्रत्यूहाश्च विनाशिताः। देवकार्यनिमित्तं तया दशरात्रमेकरात्रिः कृता। सेयं ते मातेव माननीया। सर्वभूतनमस्कार्यां यशस्विनीं वृद्धां सदाक्रोधनामिमां वैदेहा अभिगच्छतु। रामस्तथेत्युक्त्वा सीतामुवाच। वैदेहि! इमां स्वकर्मभिरनसूयेति ख्यातिमागतां तपस्विनीमात्मनः श्रेयोऽर्थ[2+]मभिगच्छ। सीता धर्मज्ञामनसूयामुपजगाम। शिथिलां वलितां वृद्धां पाण्डुरमूर्धजां प्रवाते कदलीवत्[3+] सततं वेपमानाङ्गीं महाभागां पतिव्रतां तामनसूयां सीता प्रशान्तभावेन नमस्कृत्य स्वनामोक्त्वा बद्धाञ्जलिरनामयं पर्यपृच्छत्। धर्मचारिणीं सीतां सान्त्वयन्ती हृष्टा अनसूयोवाच। वत्से! दिष्ट्या धर्ममवेक्षसे। ज्ञातिजनं सम्मानमैश्वर्यं च त्यक्त्वा वनेऽवरुद्धं राममनुगच्छसि। नगरस्थो वनस्थो वा शुभो[4+] वा अशुभो वा यासां स्त्रीणां भर्ता प्रियस्तासामुत्तमा लोका भवन्ति। आर्यस्वभावानां स्त्रीणां दुश्शीलः स्वेच्छाचारो निर्धनो वा भर्ता परमं दैवतम्। यथा कृतं महत् तपः सत्फलानि प्रसूते तथा पत्युः सेवा अनन्तफलं ददाति। सुविमृशन्त्यहं भर्तुर्विशिष्टं बान्धवं न पश्यामि। सुखाधीनहृदयाः पतीनपि शासत्यः असतिस्त्रय एवं गुणं दोषं च नावगच्छन्ति। तद्विधाः स्त्रियः अकार्यकारिण्यो धर्मभ्रंशमयशश्च प्राप्नुवन्ति। गुणैर्युक्ता दृष्टलोकपरावरास्त्वद्विधाः स्त्रियस्तु पुण्यकृत इव स्वर्गे चरिष्यन्ति।

---

+ cr अनसूया व्रतैस्तात। ग्राह्यः – अनसूया व्रतैस्नाता।

2+ cr श्रेयोर्थ। पाठ्यः श्रेयोऽर्थ। 3+ cr कदली यथा। ग्राह्यः– कदलीं यथा।

4+ cr पापो वा। ग्राह्यः–शुभो वा।

११०

असूयारहिता वैदेही अनसूयया एवमुक्ता तद् वचः श्लाघमाना अवदत्। नैतदाश्चर्यं यदार्या त्वं मामेवं भाषसे। नार्याः पतिर्गुरुरिति ममापि विदितम्। वृत्तहीनोऽपि भर्ता भेदबुद्धिं विहाय सेव्यः किं पुनर्यः श्लाघ्यगुणः सानुक्रोशो जितेन्द्रियः स्थिरानुरागो धर्मात्मा मातापितृप्रियश्च। रामः कौसल्यायां यथा प्रीणाति तथैवान्यासु नृपनारीषु प्रवर्तते। नृपेण पित्रा सकृद्दृष्टास्वपि स्त्रीषु मानमुत्सृज्य मातृवद् वर्तते। भयावहं विजनं वनमागच्छन्त्या मे श्वश्र्वा कृतो महानुपदेशो हृदये धृतः। विवाहसमये जनन्या यद् वाक्यमनुशिष्टास्मि तदपि मे मनसि धृतम्। तव वाक्यैस्तत् सर्वं नवीकृतम्। स्त्रियाः पतिशुश्रूषणादन्यत् तपो न विधीयते। पतिशुश्रूषां कृत्वा सावित्री स्वर्गे महीयते। तथावृत्तिस्त्वं च पतिशुश्रूषया दिवं ध्रुवं यास्यसि। सर्वनारीणां वरिष्ठा देवता रोहिणी दिवि चन्द्रं विना मुहूर्तमपि न दृश्यते। एवंविधाः प्रवरा भर्तृदृढव्रताः स्त्रियः पुण्येन स्वेन कर्मणा देवलोके महीयन्ते। सीतावचनं श्रुत्वा हृष्टानसूया तां शिरस्याघ्राय हर्षयन्ती उवाच। सीते! अस्ति हि मे महत् तपो विविधैर्नियमैराप्तम्। तद् वलं संश्रित्य ते वरं ददामि। वृणीष्व। तव वचनमुपपन्नं मनोज्ञं चास्ति। प्रीतास्मि। किमुचितं ते करवाणि मे ब्रूहि। तव प्रीतिरेवालम्। कृतमिति सीता तपस्विनीमाह। एवं सीतयोक्ता अनसूया प्रीततरा बभूव। सीते! हन्त। त्वयि जातं प्रहर्षं सफलं करोमि। दिव्यमिदं वरं माल्यं वस्त्रमाभरणानि अङ्गरागो महार्हमनुलेपनं च सर्वं तुभ्यं मया दत्तं तव गात्राणि शोभयेत्। नित्यं तव शरीरानुरूपमम्लानमविकृतं च भविष्यति। दिव्येनानेनाङ्गरागेण लिप्ताङ्गी श्रीर्विष्णुं यथा तथा भर्तारं शोभयिष्यसि। अत्युत्तमं प्रीतिदानं तत् सर्वं सीता प्रतिगृह्य तां तपोधनां सांजलिः समुपास्त। तदानसूया सीतां काञ्चित् प्रियां कथामुद्दिश्य प्रष्टुमारभत।

सीते! स्वयंवरे त्वं रामेण प्राप्तेति कथा मया श्रुता। तां कथां विस्तरेण श्रोतुमिच्छामि। यथावृत्तं कात्स्न्येंन मे वक्तुमर्हसि। तदा सीता तां कथां कथयामास। मिथिलाधिपतिर्वीरो धर्मविज्जनको नाम राजा क्षत्रधर्माभिरतो न्यायतो मेदिनीं शास्ति। स कदाचित् हस्ते लाङ्गलं गृहीत्वा मण्डलाकारां यज्ञभूमिमकर्षत्। तदाहं भूमिं भित्वोत्थिता तस्य सुता किलाभवम्। मुष्टिना ओषधिबीजविक्षेपे तत्परो नरपतिः स जनकः पांसुगुण्ठितसर्वाङ्गीं मां दृष्ट्वा विस्मितोऽभवत्। अनपत्यः स स्नेहान्मामङ्कमारोप्येयं मे तनयेत्युक्त्वा मयि प्रेम निपातितवान्। तदा हे नरपते! एवमेतत्। इयं धर्मेण तव तनया भवतीत्यन्तरिक्षे अप्रतिमा अमानुषी[+] वागुक्ता। ततो मे पिता मिथिलाधिपो मामवाप्य महतीमृद्धिं प्राप्तवत् प्रहृष्टोऽभवत्। पुण्यकर्मणा तेन ज्येष्ठायै देव्यै प्रीत्या दत्तासम्। स्निग्धया तया मातृसौहृदादादृतास्मि। विवाहयोग्यवयसं मां दृष्ट्वा मे पिता दीनो वित्तनाशाद् दरिद्र इव चिन्तामभ्यगमत्। भुवि शक्रेण समोऽपि कन्यापिता सदृशाच्चापकृष्टाच्च जनादवमानमवाप्नोति। जनकस्तमवमानं समीपस्थं वीक्ष्य चिन्तार्णवगतः अप्लववत् पारं नाससाद। अयोनिजाया मम सदृशं पतिं स नाध्यगच्छत्। सततं चिन्तयानस्य तस्य तनूजायाः स्वयंवरं करिष्यामीति बुद्धिर्जाता। तस्मिन् काले वरुणेन यज्ञे तस्य प्रीत्या श्रेष्ठं धनुरक्षयसायकौ तूणी च दत्तौ। भारान्मनुष्यैर्यत्नेनाप्यसंचाल्यं तद् धनुर्नराधिपाः स्वप्नेऽपि नमयितुं न शक्ताः। सत्यवादी मे पिता पार्थिवानाहूय तेषां समवाये धनुः प्रदर्श्य व्याहरत्। यो नर इदं धनुरुद्यम्य सज्यं कुरुते तस्य मे दुहिता भार्या भविष्यति। अत्र संशयो नास्ति। नृपा भारेण गिरिसन्निभं तत् श्रेष्ठं धनुर्दृष्ट्वा तस्य तोलने अशक्ता अभिवाद्य जग्मुः। बहोः कालात् पश्चाद् राघवः सत्यपराक्रमोऽयं रामो भ्रात्रा

---

[+] cr वागुक्ताप्रतिमा मानुषी किल। वागुक्ताप्रतिमामानुषी किल इति पाठचः।

लक्ष्मणेन सह विश्वामित्रसहितो यज्ञं द्रष्टुं समाजगाम। धर्मात्मा विश्वामित्रो मम पित्रा सुपूजितोऽभवत्। स मे पितरं दशरथस्येमौ पुत्रौ रामलक्ष्मणौ धनुर्द्रष्टुं काङ्क्षत इति प्राह। मुनिनैवमुक्तो मम पिता धनुः समुपानयत्। महाबलो वीर्यवान् रामो निमेषान्तरमात्रेण तदानम्य झटिति ज्यां समारोप्य पूरयामास। पूरयता रामेण वेगाद् धनुर्मध्ये द्विधा भग्नम्। पतितस्याशनेरिव तस्य भीमः शब्दोऽभवत्। ततस्तत्र सत्यप्रतिज्ञेन मे पित्रा उत्तमं जलभाजनमुद्यम्याहं रामाय दातुं निश्चिता। तदा रामः अयोध्याधिपतेः पितुरिष्टमविज्ञाय दीयमानां मां न तु प्रतिजग्राह। ततो मम पित्रा श्वशुरं वृद्धं दशरथमहाराजमामन्त्र्याहं बुद्धिमते रामाय दत्ता। ममानुजा साध्वी प्रियदर्शना ऊर्मिला भार्यार्थे मम पित्रा स्वयं लक्ष्मणस्य दत्ता। तदा तस्मिन् स्वयंवरे रामायैवं दत्तास्मि। वीर्यवतां वरं पतिं धर्मेणानुरक्तास्मि।

## १११

धर्मज्ञा अनसूया तां महतीं कथां श्रुत्वा मैथिलीं शिरस्याघ्राय पर्यष्वजत। स्पष्टाक्षरं स्पष्टपदमाश्चर्यजनकं मधुरं त्वया भाषितम्। स्वयंवरं यथा वृत्तं तत् सर्वं मया श्रुतम्। मधुरभाषिणि! तव कथयाहं दृढं रमे। श्रीमान् रविः शिवां रजनीमुपस्थाप्यास्तंगतः। दिवसमाहारार्थं प्रतिकीर्णानां सन्ध्याकाले निद्रार्थं निलीनानां पतत्रिणां ध्वनिः श्रूयते। एते मुनयः अभिषेकार्द्राः जलपूर्णकलशहस्ताः+ सलिलाप्लुतवल्कलाः सहिता उपागच्छन्ति। ऋषीणामग्निहोत्रेषु विधिपूर्वकं हुतेषु कपोताङ्गारुणो धूमः पवनोद्धतो दृश्यते। समन्ततः अल्पपर्णा अपि वृक्षा घनीभूता इवान्धकारेण। दुर्बलीकृतयोर्नेत्रयोर्दिशो न प्रकाशन्ते। रात्रिचारिणो जन्तवः समन्ततः प्रचरन्ति। एते तपोवनमृगा आश्रमप्रदेशेषु शेरते। नक्षत्रसमलङ्कृता निशा

---

+ cr फलशोधनाः। ग्राह्यः – कलशोद्यताः।

संप्रवृत्ता। ज्योत्स्नाप्रावरणश्चन्द्रः अम्बरे अभ्युदितो दृश्यते। अनुजानामि गम्यताम्। रामस्य समीपवर्तिनी भव। मधुरं कथयन्त्या त्वयाहं परितोषिता। मम प्रत्यक्षं तावदलंकुरु। वत्से! दिव्यालंकारशोभिता मे प्रीतिं जनय। सुरसुतोपमा सा सीता तथा समलंकृत्य तस्यै शिरसा प्रणम्य रामसमीपं ययौ। रामस्तथाभूषितां सीतां ददर्श तपस्विन्या अनसूयायाः प्रीतिदानेन जहर्ष च। तदा सीता तपस्विन्याः वसनाभरणस्रजां प्रीतिदानं सर्वं रामाय प्रादर्शयत्। रामो लक्ष्मणश्च मानुषेषु सुदुर्लभं मैथिल्याः सत्कारं दृष्ट्वा प्रजहृषतुः। ततो रामस्तपस्सिद्धैर्मुनिभिरर्चितः प्रीतः पुण्यां तां शर्वरीमुवास। तस्यां रात्र्यां व्यतीतायां कृतस्नानान् हुताग्नीन् वनगोचरान् मुनीन् रामलक्ष्मणौ आपृच्छेताम्। तदा ते तापसा वनमार्गं राक्षसोपद्रवपूरितं तावूचुः। राघव! एष वने फलान्याहरतां महर्षीणां पन्थाः। अनेन मार्गेण दुर्गं वनं गन्तुं ते क्षमम्। प्राञ्जलिभिस्तपस्विभिस्तैर्द्विजैः कृतस्वस्त्ययनः परन्तपो रामः सभार्यः सलक्ष्मणः सूर्यः अभ्रमण्डलमिव वनं प्रविवेश।

समाप्तमयोध्याकाण्डम्



अनुबन्धः

## रामायणस्य महाभारतस्य च संशोधितप्रकाशनयोः (critical editions) तत्र तत्र पाठपरिवर्तनं संयोजनं च आवश्यकम्।

वटोदरनगरस्थया प्राच्यपरिशोधनसंस्थया रामायणस्य पूणेनगरस्थया भण्डारकरप्राच्यविद्यासंशोधनमन्दिरेण महाभारतस्य च संशोधितप्रकाशने निर्मिते स्तः। संशोधितग्रन्थनिर्माणं सुमहत् कार्यमित्यत्र तौ ग्रन्थौ संशोधनप्रयोजनं सुष्ठु निर्वहतः इत्यत्र च नास्ति संशयलेशः। तथापि या का वा स्यात् ताभ्यामनुसृता पद्धतिः तया पद्धत्या निष्पन्नौ ग्रन्थौ कीदृशौ किं तौ काव्यप्रयोजनं सुष्ठु निर्वहतो न वेत्येवात्र विचार्यते। अयं श्लोकः परिशील्यताम्। महाभारतादिपर्वणि बकासुरघट्टे ब्राह्मण इत्थं विलपति।

*"धिगिदं जीवितं लोकेऽनलसारमनर्थकम्।"* (१४५.२०)

गीताप्रेस्प्रकाशनेऽत्र गतसारमनर्थकम् इति पाठः। महानान्ध्रकविर्नन्नयभट्टः आन्ध्रमहाभारतेऽत्र "नलसारमु संसारमु" इति रचितवान्। तस्मात् नलसारमिति वा गतसारमिति वा पाठः समीचीनो भवेत्। परन्तु अनलसारमिति अनर्थकः पाठः संशोधितग्रन्थे वर्तते। स पाठः नलशब्दार्थमजानता अनलशब्दार्थज्ञेन केनापि लेखकेन अवग्रहं स्थापयित्वा कल्पित इत्याभाति। संभवतः भूयस्सु तालपत्रग्रन्थेषु विद्यमानत्वात् स पाठः प्राच्यविद्यापरिशोधनसंस्थया प्रधानपाठत्वेन स्वीकृतः। नन्नयभट्टेन अनुवादार्थं स्वीकृते महाभारतग्रन्थे नलसारमिति पाठेन भवितव्यम्। अथवा यद्यपि तत्र च अवग्रह आसीत् विदुषा तेन स दृष्टमात्रः त्यक्तः। अनलसारमिति पाठ एव साधीयान् अनलसारो भस्म तद्वज्जीवितं भस्मान्तं निस्सारमिति न कोऽपि विवेकी अभियुज्येत च। किञ्चायं केवलं मुद्रणदोषो वा स्यात् यतस्तालपत्रग्रन्थेषु अवग्रहा भूम्ना न स्थाप्यन्ते। सभापर्वस्थोऽयं श्लोको दृश्यताम्।

*"न सकामाः परे कार्या धर्ममेवाचरोत्तमम्।*
*भ्रातरं धार्मिकं ज्येष्ठं नातिक्रमितुमर्हति।।"* (६१.८)

कोऽतिक्रमितुमर्हति इति वा नातिक्रमितुमर्हसि इति वा अत्र पाठेन भवितव्यम्। परन्तु पाठाविमौ अधःसूचिकायामेव दत्वा प्रधानपाठत्वेन सोऽपपाठः स्थापितः। अयं च विषयोऽत्र परिशीलनीयः को दोषः पाठकस्तत्र "कोऽपि" इति संयोजयितुं शक्नोति येन श्लोकः अर्थवान् भवेदिति। परन्तु यदि स एक एव पाठो लभ्यः, स एव निश्चितं वेदव्यासेन रचितः स्यात् तर्हि पाठकस्तत्र तथा कोऽपि इति संयोजयितुं चिन्तयेत् गत्यन्तराभावात्। ईशावास्योपनिषदि "सम्भूतिं च विनाशं च" (१४) इति स्थिते शङ्कराचार्याः "संभूतिं च विनाशं चेत्यत्र अवर्णलोपेन निर्देशो द्रष्टव्यः प्रकृतिलयफलश्रुत्यनुरोधात्" इति व्याख्याय असम्भूतिमिति परिणमयन्ति। युज्येतैवं परिणामः तस्य शब्दस्य तथैवोपदेशादभिलषितार्थावगमनाय च। महाभारतश्लोको न तादृशः। तत्रार्थवत् पाठान्तरं विद्यते। को वा जानाति किं तत्र व्यासेन विरचितमिति? बहुभ्यः पाठेभ्यः अर्थवान् पाठो ग्राह्यः।

विराटपर्वण्ययं श्लोको वर्तते।

*"मा दीर्घं क्षम कालं त्वं मासमध्यर्धसंमितम्।*
*पूर्णे त्रयोदशे वर्षे राज्ञो राज्ञी भविष्यसि।।"* (२०, १३)

कीचकेन पराभूता द्रौपदी अर्धरात्रे रहसि भीमसेनान्तिके विललाप। तदा तां सान्त्वयन् भीम इदमुवाच। गीताप्रेसग्रन्थेऽत्र मासमध च सम्मितम् इति पाठः। पञ्चदशदिनान्येव क्षमस्वेति तस्यार्थः। (द्रष्टव्यो मम निबन्धः "अल्प एकः पाठभेदः अनल्पा चर्चा च।" साहितीजगती १९९० यस्मिन्नयं विषयः पूर्णतया चर्चितः।) अध्यर्ध इति संशोधित-प्रकाशनस्वीकृतपाठस्य सार्धमास इत्येवानुचितार्थो भवति अर्धमास इत्यर्थोऽसाध्यः।

रामायणे अरण्यकाण्डे सीता रावणं ब्रुते ""संवत्सरं चाध्युषिता राघवस्य निवेशने" (४५.४) इति। अत्र पाठान्तरम् "उषित्वा द्वादशसमाः" इति। सैव सीता सुन्दरकाण्डे "समा द्वादश तत्राहं राघवस्य निवेशने" (३१.१३) इति वदति। अत्र यद्यपि "एक" इति युक्तः पाठोऽस्ति तथापि स्वसंशोधितग्रन्थनिर्माणविधानानुसारेण द्वादश इति पाठो गृहीत इति अनुबन्धे संपादकेन लिखितम्। एवं काव्ये पूर्वापरविरोधः संजातः।

अयोध्याकाण्डे दशरथः स्वकृतं मुनिपुत्रहननं कौसल्यां कथयन् वदति।

*"देव्यनूढा त्वमभवो युवराजो भवाम्यहम्।*

*ततः प्रावृडनुप्राप्ता मदकामविवर्धिनी।।"* (५७.१०)

गीताप्रेस्ग्रन्थे "मम कामविवर्धिनी" इति पाठो वर्तते स सुतरामनुचितः। तदपेक्षया संशोधितग्रन्थपाठो युज्यते। परन्तु अधःसूचिकायामत्र "मनःसंहर्षिणी मम" इति हृद्यः पाठो विद्यते स प्रधानपाठतया ग्राह्य इत्याभाति च। वाल्मीकिः रामायणं व्यासो महाभारतं च विरच्य बहोः कालात् पूर्वं दिवमारूढौ। पश्चाद् बहूनि पाठान्तराणि तयोः काव्ययोः सर्वत्र समभवन्। कुत्र कुत्र किं किं तेन तेन च रचितमिति न कोऽपीदानीं जानीते। यः पाठो हृद्यः साधीयांश्च स एव तत्तद्भिरचित इति विभाव्य स्वीकार्यः। केवलं सुलिखिततालपत्रग्रन्थस्वीकारो वा पाठबाहुल्यस्वीकारो वा यथातथं न कर्तव्यः। कदाचित् साधुः पाठः संख्याल्पतालपत्रग्रन्थेषु भवेत् कदाचित् लभ्यपाठेभ्यः ऊहनीयश्च स्यात्। पाठनिर्णये संपादकेन विवेकः कर्तव्य एव।

किञ्च ताभ्यां परिशोधनसंस्थाभ्यां परिशीलितप्रामाणिकतालपत्रग्रन्थेषु भूयस्सु एकरूपेण स्थिता ग्रन्थभागा एव स्वग्रन्थयोः संयोजिताः संभवतः।

तस्मात् तत्र तत्र कथने विच्छेदः अनुभूयते आवश्यकानां श्लोकानां पङ्क्तीनां च लोपात्। रामायणस्था एते श्लोकाः परिशीलनीयाः।

*ततः परिषदं सर्वामामन्त्र्य वसुधाधिपः।*
*हितमुद्धर्षणं चेदमुवाचाप्रतिमं वचः।।१*
*दुन्दुभिस्वनकल्पेन गम्भीरेणानुनादिना।*
*स्वरेण महता राजा जीमूत इव नादयन्।।२*
*सोऽहमिक्ष्वाकुभिः पूर्वैर्नरेन्द्रैः परिपालितम्।*
*श्रेयसा योक्तुकामोऽस्मि सुखार्हमखिलं जगत्।।३* (अयो. २)

तृतीयश्लोकादौ स्थितं सोऽहमिति पदद्वयं तत्पूर्वश्लोकेनान्वेतव्यम्। परन्तु द्वितीयश्लोकेन तस्यान्वयो न भवति। गीताप्रेस्ग्रन्थे तत्र तृतीयश्लोकात् पूर्वमयमधिकः श्लोकोऽस्ति।

*विदितं भवतामेतद् यथा मे राज्यमुत्तमम्।*
*पूर्वकैर्मम राजेन्द्रैः सुतवत् परिपालितम्।।*

सत्येतस्मिन् श्लोके उत्तरश्लोकस्थं सोऽहमिति पदद्वयं सार्थकं भवति। तस्मादयं श्लोकः काव्ये आवश्यकः।

महाभारते विराटपर्वणि द्रौपदी भीमं रहसि मिलित्वा पतीनां स्वस्याश्च दुःस्थितिं वर्णयति। गीताप्रेस्ग्रन्थे तत्पश्चात् तदहनि कीचककृतं पराभवं च कथयति। संशोधितप्रकाशने कीचककृतपराभवकथनं न विद्यते। तेन कथनेन विना काव्यं कथं प्रचलेत्? तस्मात् तत् कथनं काव्ये आवश्यकमनुबन्धाद् गृहीत्वा संयोजनीयम्।

तर्हि अन्ये च बहवः श्लोका घट्टाश्च अर्थपुष्टये काव्यपुष्टये च किमर्थं न गृह्येरन् इति प्रश्नः स्यात्। एवं समाधीयते यन्महाभारतस्य रामायणस्य च प्रक्षिप्तैर्विवृद्ध्या समं तत्र तत्र भागा नष्टाः। नष्टा भागाः

केषुचित् तालपत्रग्रन्थेषु पूरिता: केषुचिन्नेति। तस्मात् संशोधितग्रन्थावेव गृहीत्वा पाठानां तत्र तत्र परिवर्तनानि आवश्यकभागपूरणानि च कार्याणि। एवं खलु रामायणस्य महाभारतस्य च परीक्षितनूतनप्रकाशनमावश्यकमस्ति।

नायं ममैवाभिप्राय:। महाभारतसंशोधितग्रन्थोपोद्घाते संपादकेन वि.एस्. सुख्तङ्करमहाभागेन चायमेवाभिप्राय: सूचित:*। तस्मादहं सप्रश्रयं प्रतिपादयामि रामायणं महाभारतं च पुन:परिशीलनमर्हत: परीक्षितनूतनग्रन्थौ निर्मातव्यौ चेति।



* "What is the constituted text? It is but a modest attempt to present a version of the epic as old as the extant manuscript material will permit us to reach with some semblance of confidence. It is in all probability not the best text of the Great Epic, possible or existing, nor necessarily even a good one. It only claims to be the most ancient one according to the direct line of transmission, purer than the others in so far it is free from obvious errors of copying and spurious additions". "Who and what is to prevent him (Reader of the Critical Edition) from constituting his own text from this critical edition?"